रवीन्दुसौम्यार्कसुता धनस्था
नरं प्रकुर्वन्ति शिरोर्तिभाजम् ।
मलिम्लुचं वातकफातिरक्तं
सदा विरक्तं निजबन्धुवर्गे ॥ ६३ ॥

रवीन्दुजीवासुरपूजिताङ्गा
नरं प्रकुर्वन्ति जडस्वभावम् ।
विरक्तपौरं व्यथया समेतं
सुनिष्ठुरं भ्रान्तिसमन्वितं च ॥ ६४ ॥

रवीन्दुजीवार्कसुता धनस्था
नरं प्रकुर्वन्ति विहीनकोशम् ।
पराङ्मुखं साधुगुरुद्विजानां
परान्नपुष्टं नृपपीडिताङ्गम् ॥ ६५ ॥

रवीन्दुशुक्रार्कसुता धनस्था
नरं प्रकुर्वन्ति विहीनपुत्रम् ।
न्यूनाङ्गमेवाधिकगात्रकं वा
दुष्टाशयं भोगविवर्जिताङ्गं ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गा
नरं प्रकुर्वन्ति विशीलमुग्रम् ।
वध्वात्मकं स्त्रीचपलं कुनेत्रं
व्ययान्वितं पापसमन्वितं च ॥ ६७ ॥

ABCDFILORSW

63b-63d om. I 63c °कफाधिरक्तं S 63d विवर्जितं च F °वर्गैः A, वर्गं C 64c विथया I, विषया BD, विजया C 64d भाति° S, भीति° R, भीजि° F 65b °केशं I, °कोषं O, °कोपं ABCD 65d °पृष्टं W 66c मूनांग° AB, पुंनाग° W, a ͜ नांग° O °सेवा° FRS 66d °वार्जितं च W 67a om. D 67a °भौमा° BIL 67b विशाल° ABCDFILOSW 67c वंधा° FRS 67d व्यथा° FW पापसमन्वितं om. B

सूर्यारसौम्यासुरपूजिताङ्गा
नरं प्रकुर्वन्ति सदा धनस्थाः
पापेन युक्तं सुकलत्रमुक्तं
सुबन्धुहीनं विषयात्मकं च ॥ ६८ ॥

सूर्यारसौम्यार्कसुता धनस्था
नरं प्रकुर्वन्ति क्षतप्रदग्धम् ।
भयान्वितं दम्भपरं सुपापं
शिष्टोपदेशेन विवर्जितं च ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्गा
नरं प्रकुर्वन्ति सुजिह्मनेत्रम् ।
द्विजिह्वकं धर्मक्रियाविहीनं
प्रभूतदोषं सततं कृतघ्नम् ॥ ७० ॥

[ सूर्यारजीवासुरपूजिताङ्गा
नरं प्रकुर्वन्ति महारुजं च ।
स्थूलास्थिकेशं परदेशभाजं
प्रभूतशत्रुं गतसौहृदं च ॥ ७०अ ॥ ]

सूर्यारजीवार्कसुता धनस्था
नरं प्रकुर्वन्ति सदा प्रकोपम् ।
श्रमाधिकं दुष्टमतिं नृशंसं
व्यपेतलज्जं जनताप्रमुक्तम् ॥ ७१ ॥

ABCDFILORSW

order in LW: 71a=74a, 75b-91d, 68-74 68b सदा—68c युक्तं om. C 68c °त्रयुक्तं LW 68d °हीनं F 69c सुपानं L 70c द्विजह्वकं O, द्विजिह्विकं FR 70Aa=71a in F 70Ab महासजं R, महासनं FS 70Ac स्थलास्थि° F, स्थूलाति° W 71b-72a om. L 71c श्रया° F 71d जनिता° FRS

सूर्यारशुक्रार्कसुता धनस्था
नरं प्रकुर्वन्ति सुकष्टभाजम् ।
धनैर्विहीनं श्रुतसौख्यहीनं
पापानुषङ्गेन सदा निरस्तम् ॥ ७२ ॥

सूर्यज्ञजीवाभृगुजा धनस्था
नरं प्रकुर्वन्ति सदातुरं च ।
रोगाभिभूतं कृशमल्पसत्त्वं
जडात्मकं दोषकथानुरक्तम् ॥ ७३ ॥

सूर्यज्ञजीवार्कसुता धनस्था
नरं प्रकुर्वन्ति धनेन हीनम् ।
तृष्णाधिकं कामपरं रुजार्तं
कुरूपनेत्रं हृतसौहृदं च ॥ ७४ ॥

॥ ७५-७६ ॥

चन्द्रारसौम्यामरपूजिताङ्गा
धनस्थिताः संजनयन्ति मर्त्यम् ।
मुनिप्रियं शास्त्रकथानुरक्तं
भक्तं द्विजानां नयनाभिरामम् ॥ ७७ ॥

चन्द्रारसौम्यासुरपूजिताङ्गा
धनस्थिताः संजनयन्ति मर्त्यम् ।
तीर्थानुरक्तं व्रतशास्त्ररक्तं
सुपूजितं भूपतिना सदैव ॥ ७८ ॥

ABCDFILORSW

72b सु° om. W, स° ABCDIOS °कष्ण° B 72c श्रुति° FRS 73a °जीव° OS order in S: 73a, 74, 73c-d 73b सदानुरक्तं W 73c °सत्यं FR 74c रुजार्ति L 74d हृत° CIORS °बंधुसौख्यं FRS 75-76 om. cod. 77d भक्तं om. AB, भक्ति F 78a °सौम्यामर° W 78c वृत° F, व्रत° W

चन्द्रारसौम्यार्कसुता धनस्था
नरं प्रकुर्वन्ति धनप्रधानम् ।
गजाश्वगोवस्त्रसुवर्णभाजं
ख्यातं कविं धर्मरतं सदैव ॥ ७९ ॥

चन्द्रारजीवासुरपूजिताङ्गा
नरं प्रकुर्वन्ति सदा धनस्थाः ।
विद्याविनीतं गणकप्रधानं
मेधाविनं ब्राह्मणवल्लभं च ॥ ८० ॥

चन्द्रारजीवार्कसुता धनस्था
नरं प्रकुर्वन्ति जयेन युक्तम् ।
सुशीलमालब्धविशालवित्तं
नरेन्द्रपूज्यं व्रतलालसं च ॥ ८१ ॥

चन्द्रारशुक्रार्कसुताः सदैव
धनस्थिताः संजनयन्ति मर्त्यम् ।
नानाश्ववस्त्रद्रविणैः समेतं
विमुक्तरोगं गुणसंयुतं च ॥ ८२ ॥

---

ABCDFILORSW

79a-b om. W 79b दमप्रधानं C 79c शश्याश° F, शस्यास° R, शस्याज° S, राजाश्व° W 79d ख्यातिं DL °रतिं CL सदैव ] कविं च RS, कपिविंव F after 79 W adds: धनं च धान्यं बहुलं प्रतापं
राजज्ञीमान्यं स्त्रीपुत्रलाभं

80b प्रधानं सदा B 80c °विहीनं F 81b नयेन L मुक्तं O 81c सुशीलवा° FRSW, सुशीलवान् ABCDI, सुशीलवन् O, शुसीलिनं L °लंध° FRS, °लाध° W, चाल° L °विलास° L 81d °लाभसं F 82a °जीवा° cod. 82c नानास्त्र° BCDILW °वस्त्र° om. B, °विद्या° W

चन्द्रज्ञजीवासुरपूजिताश्च
नरं प्रकुर्वन्ति मखानुरक्तम् ।
सत्साधुसेवानिरतं प्रगल्भं
महाधनं शास्त्ररतं सदैव ॥ ८३ ॥

चन्द्रज्ञजीवार्कसुता धनस्था
नरं प्रकुर्वन्ति रतं द्विजानाम् ।
मनोज्ञदेहं स्मितपूर्ववाचं
सदा प्रहृष्टं नृपतेरभीष्टम् ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुता यदा स्यु-
र्धनस्थिताः संजनयन्ति मर्त्यम् ।
नृपप्रधानं प्रणतारिपक्षं
प्रभूतकोशान्वितमिष्टधर्मम् ॥ ८५ ॥

चन्द्रामरेज्यासुरपूज्यसौरा
नरं प्रकुर्वन्ति बहुप्रधानम् ।
नरेन्द्रपूज्यं सचिवं गुरुं च
सदैव हृष्टं प्रथितप्रभावम् ॥ ८६ ॥

नरं प्रकुर्वन्ति हितं द्विजानां
प्रख्यातवीर्यं नृपकार्यदक्षम् ।
क्षमान्वितं सर्वसुखैः समेतं
भौमज्ञजीवासुरपूजिताङ्गाः ॥ ८७ ॥

ABCDFILORSW

83b सखा° BI  84c °वादं F  84d प्रदृष्टं F  86c सततं W वा FRS  86d दृष्टं F °प्रभूतं B order in W: 87d, 87a-c 87d °पूज्यतांगाः O

भौमज्ञजीवार्कसुता धनस्था
नरं प्रकुर्वन्ति विदेशसङ्गात् ।
धनान्वितं साधुसमागमोक्त-
मारामवापीनृपकृत्यरक्तम् ॥ ८८ ॥

भौमज्ञशुक्रार्कसुता धनस्था
नरं प्रकुर्वन्ति विनीतदारम् ।
रम्याकृतिं साधुजनानुरक्तं
सनामभीष्टं बहुसस्यवित्तम् ॥ ८९ ॥

भौमामरेज्यासुरपूज्यसौरा
धनाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतसस्यं श्रुतसौख्यपुष्टं
कविप्रधानं नियमैः समेतम् ॥ ९० ॥

बुधामरेज्यासुरपूज्यसौरा
धनस्थिताः संजनयन्ति मर्त्यम् ।
कलासु दक्षं क्षपितारिपक्षं
सुकीर्तियुक्तं जनवल्लभं च ॥ ९१ ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्या
धनस्थिताः संजनयन्ति मर्त्यम् ।
क्लेशान्वितं क्रूरमतिं सुलुब्धं
विवेकहीनं लघुगात्रकं च ॥ ९२ ॥

ABCDFILORSW

88b विदोष° ABCDILW  88c °गमेक्तं FR, °गमे रतं ABCDILOW 88d °नृपनृत्यरक्तं D  90b धनस्थिताः L  90c-91d om. D  91b 91d धनाश्रिताः C धन° ABCFLORSW, नृप° I  col. इति श्रीवृद्धयवने चतुर्ग्रहयोगाध्यायः W  col, एवं ] इति D  92c सुलब्धं BFLORS, सलुब्धं CDIW, सुब्धं A

रवीन्दुभौमज्ञसिता धनस्था
नरं प्रकुर्वन्ति बहुव्ययार्तम् ।
तेजोविहीनं मलिनस्वभावं
सुनिष्ठुरं पापमतिं सदैव ॥ ९३ ॥

रवीन्दुभौमज्ञदिनेशपुत्रा
धनस्थिताः संजनयन्ति मर्त्यम् ।
निशान्धकं कामरतं हृतस्वं
प्रभूतवैरं मतिवर्जितं च ॥ ९४ ॥

रवीन्दुभौमामरपूज्यशुक्रा
धनस्थिताः संजनयन्ति मर्त्यम् ।
क्रियाविहीनं कुधनं कुचैलं
रोगाभिभूतं परदेशरक्तम् ॥ ९५ ॥

रवीन्दुभौमामरपूज्यसौरा
नरं प्रकुर्वन्ति सुहृद्विरुद्धम् ।
परोपकारप्रविवर्जिताङ्गं
सुदीनवृत्तिं हृतपौरुषं च ॥ ९६ ॥

रवीन्दुभौमासुरपूज्यसौरा
नरं प्रकुर्वन्ति खलानुरक्तम् ।
व्रणार्दिताङ्गं क्षतजव्यथार्थं
पापर्द्धिसंसक्तमतिप्रकोपम् ॥ ९७ ॥

ABCDFILORSW

93b .°व्ययार्तं FRS, °व्यथार्थं ABCD 94c कामरवं FRS हृतस्वं B 95c विधनं FRS, सततं D 96c °परिवर्जितांगं D, °प्रविवार्जितां वा B, °प्रविवर्जितं वा LW 96d °वृत्तं CD च om. B 97a °भौममर° W 97c रणा° W, वणा° L भतज° FRS, हृतज° B 97d पापार्द्धि° I, पापाद्धि° BL

रन्वीदुसौम्यामरपूज्यशुक्रा
धनस्थिताः संजनयन्ति मर्त्यम् ।
दम्भोत्कटं क्षान्तिविवर्जिताङ्गं
गतंघृणं नीतिविवर्जितं च ॥ ९८ ॥

रवीन्दुसौम्यामरपूज्यसौरा
धनस्थिताः संजनयन्ति मर्त्यम् ।
जनातिगं सत्यधनैर्विहीनं
पापेन युक्तं निरतं कुधर्मे ॥ ९९ ॥

रवीन्दुसौम्यासुरपूज्यसौरा
धनस्थिताः संजनयन्ति मर्त्यम् ।
तृष्णात्मकं क्रोधायुतं गताशं
विधर्मिणं भीतिपरं सदैव ॥ १०० ॥

सूर्येन्दुजीवासुरपूज्यसौरा
धनस्थिताः संजनयन्ति मर्त्यम् ।
निःस्वं भयार्तं कृतभूरिपापं
सुलोलुपं पण्यपरं सुनिन्द्यम् ॥ १०१ ॥

सूर्यारसौम्यामरपूज्यशुक्रा
धनस्थिताः संजनयन्ति मर्त्यम् ।
निःस्वं कृतघ्नं परकर्मभाजं
सुकृष्टदारं गतपौरुषं च ॥ १०२ ॥

॥ १०३ ॥

ABCDFILORSW

98a °भौमा° D  98b मर्त्यं—98c क्षांति° om. S  98c दर्पो° FIR, दर्भ्यो° W  ज्ञाति° W  99a भौमामर° ACI, °भौमासुर° D  99c–100b om. C  99c जनातिसंगत्य° I  100a °भौमासुर° D, भौमामर° ABILOW  100c कृष्णात्मकं CD, तृष्णाधिकं L  100d भीतिसमन्वितं च FRS  order in D: 101a-b, 102c-d, 102a-b, 101c-d  101c °भूमि° O  101d सलोलुपं D, °मलोलुपं ABFIORSW, मलिम्लुचं L पुण्यपरं ABCW, पुणरतिं L, च एव परं F  102c निंद्यं FRS  102d सूत्कृष्ट° S, सुत्कृष्ट° F, सुकुष्ट° R  103 om. cod.

सूर्यारसौम्यासुरपूज्यसौरा
धनाश्रिताः संजनयन्ति मर्त्यम् ।
निन्द्यं सतां वंचनकं कृतघ्नं
विरुद्धचेष्टं सुविरुद्धदारम् ॥ १०४ ॥

सूर्यारजीवासुरपूज्यसौरा
धनाश्रिताः संजनयन्ति मर्त्यम् ।
उरुप्रकोपं कृतकोपचारं
नृशंसचेष्टं श्रुतसौख्यहीनम् ॥ १०५ ॥

सूर्यज्ञजीवासुरपूज्यसौरा
धनस्थिताः संजनयन्ति मर्त्यम् ।
श्रुतार्थहीनं व्यसनाभिभूतं
सुनिर्दयं शास्त्रपराङ्मुखं च ॥ १०६ ॥

चन्द्रारसौम्यामरपूज्यशुक्रा
धनस्थिताः संजनयन्ति मर्त्यम् ।
प्रभूतवित्तं नृपतेरभीष्टं
द्विजेक्षया हर्षितमानसं च ॥ १०७ ॥

चन्द्रारसौम्यासुरपूज्यसौरा
धनस्थिताः संदधते मनुष्यम् ।
स्वबन्धुकृत्येषु सदानुरक्तं
प्रभूतकोशं शतवाहनाढ्यम् ॥ १०८ ॥

ABCDFILORSW

104a °शुक्रासुर° F °शुक्रा C order in FRS: 105c-d, 105a-b, 104c-d order in ACDIOW: 106, 105 order in BL: 106, 105c-d, 105a-b 105a °शुक्रासुर° ABCDFILORS 105c उर° FO, उशं° B, भूप° L, मन° W 105d नृपंस° ABCDFIORSW शृत° FRS 106c शृता° R, भृत्या° F 106d सुप्रिदयं W 107c °मित्रं L 107d दिजेष्टया FRS हीर्षित° B 108a °सौम्यामर° BFRSW, °रेज्यामर° L 108b °दधनुर्मे° ABFILOR, °दनुर्मे° S, °देधनम° W, °त्यधनुम° CD 108c सु° F 108d °कोषं O, °कोपं IW मृत° I, धृत° O, श्रुत° FRS, श्रु° L

चन्द्रारसौम्यामरपूज्यसौरा
धनाश्रिताः संजनयन्ति मर्त्यम् ।
सूक्तानुरक्तं सचिवं नृपं वा
मतिप्रगल्भं विनयप्रधानम् ॥ १०९ ॥

चन्द्रारजीवासुरपूज्यसौरा
नरं प्रकुर्वन्ति कृतज्ञताढ्यम् ।
सुमित्रयुक्तं प्रणतं निरीहं
गताशनेहासु सदानुरक्तम् ॥ ११० ॥

चन्द्रज्ञजीवासुरपूज्यसौरा
धनाश्रिताः संजनयन्ति मर्त्यम् ।
गुरुद्विजातिप्रणतं सुचित्तं
धर्मप्रधानं सुरकर्मदक्षम् ॥ १११ ॥

भौमज्ञजीवासुरपूज्यसौरा
धनस्थिताः संजनयन्ति मर्त्यम् ।
लघुप्रकोपं बहुमित्रवर्गं
श्रुतानुरक्तं प्रियसाहसं च ॥ ११२ ॥

एवं पंचविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्रा
धनस्थिताः संजनयन्ति मर्त्यम् ।
क्लेशाधिकं सत्यधनैर्विमुक्तं
प्रेष्यं खलं दुर्जनसंमतं च ॥ ११३ ॥

---

ABCDFILORSW

109a चंद्रामरेज्यामर° L 109b धनस्थिता L 109c सूना° W, सद्रा° L सचिनुपवाद W 110d शनेग्रासु ABCDLORSW, °शनोत्मासु F, °शानंभ्रासु I 111b धनस्थिताः L 111c-112b om. CD 111c सुवित्तं FRS, सुवीरं L col. इति श्रीवृद्धयवने पंचमहाध्यायः W col. एवं ] इति DL 113c °विंयुक्तं W

रवीन्दुभौमज्ञसुरेज्यसौरा
धनस्थिताः संजनयन्ति मर्त्यम् ।
स्वसस्यपुत्रै रहितं सुदुष्टं
कुशास्त्रमित्रागमसेवकं च ॥ ११४ ॥

रवीन्दुभौमज्ञसितार्कपुत्रा
धनस्थिताः संजनयन्ति मर्त्यम् ।
मन्युप्रधानं सुहृदामभीष्टं
धनप्रहीनं बहुवंचकं च ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र-
शनैश्वराः संजनयन्ति मर्त्यम् ।
दम्भान्वितं पुण्यकथानुरक्तं
सुलोलजिह्वं गुरुशोकभाजम् ॥ ११६ ॥

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्वराः संजनयन्ति मर्त्यम् ।
धनस्थिताः कीर्तिधनप्रहीनं
निन्द्यं प्रहीनं नियमैर्विहीनम् ॥ ११७ ॥

सूर्यारसौम्यामरपूज्यशुक्र-
शनैश्वराः संजनयन्ति मर्त्यम् ।
कृत्यैर्विहीनं मतिवित्तहीनं
सदातुरं क्लेशसमन्वितं च ॥ ११८ ॥

---

ABCDFILORSW

114 om. BLW 114a °शुक्रा ACDFIORS 114b-115a °सिता° om. I 114c स्वशल्य° O 114d °गम°—115a om. O 115b मर्त्यं om. C 115c मनु° W °मनिष्टं FRS 115d धनप्रहीनं om. W °बंद्धक° O 116a °शुक्राः FLRSW 116c-117b om. W 116c दत्ता° F °विरक्तं FRS 116d °जिह्वं L, °जिष्णुं, S, जियुं F 117a °शुक्राः FLRS 117b मर्त्यं om. C 117c कीर्तिमति° L 117d प्रधानं FRS नयनै° W 118a °शुक्राः FLR 118b मर्त्यं om. D 118c-119b om. CD 118d सदानुरक्तेश° LW

चन्द्रारसौम्यामरपूज्यशुक्र–
शनैश्चराः संजनयन्ति मर्त्यम् ।
समुद्रपर्यन्तधराधिनाथं
धर्मध्वजं भूरियशोनिवासम् ॥ ११९ ॥

एवं षड्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्र–
शनैश्चराः संजनयन्ति मर्त्यम् ।
धनस्थिता भूरिधनाश्वनागैः
संसेवितं धर्मपरं सदैव ॥ १२० ॥

एवं सप्तविकल्पाः ॥

## इति श्रीवृद्धयवने धनाश्रययोगाध्यायः ॥

ABCDFILORSW

119a °शुक्राः FLR 119c °नराधिनाथं I 119d °यशोभिवासं I col. इति श्रीवृद्धयवने षड्विकल्पना संपूर्णा W 120a °शुरेश° L °शुक्राः FR 120b मर्त्यं om. D 120c °धनैश्व नागैः CD col. इति श्रीसप्तमविकल्पः W chapter col. श्री° om. DFIR °यवनजातके O

# द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

तृतीयगस्तीक्ष्णकरः सचन्द्रो
नरं विधत्ते प्रियबन्धुदारम् ।
जनानुरक्तं व्रतशास्त्रयुक्तं
शूरं कविं कीर्तिविवर्धनं च ॥ १ ॥

तृतीयगस्तीक्ष्णकरः सभौमो
नरं प्रसूते नृपतुल्यवीर्यम् ।
भोगान्वितं चारुरतं सुनेत्रं
प्रियातिथिं वृद्धियुतं सदैव ॥ २ ॥

तृतीयगस्तीक्ष्णकरः ससौम्यो
नरं प्रसूते बहुपुत्रपौत्रम् ।
जितेन्द्रियं भूरिपराक्रमाढ्यं
विख्यातकीर्तिं जनवल्लभं च ॥ ३ ॥

तृतीयगस्तीक्ष्णकरः सजीवो
नरं विधत्ते खलतासमेतम् ।
तीक्ष्णस्वभावं बहुमायया़ढ्यं
निसर्गदुष्टं मतिऋद्धिहीनम् ॥ ४ ॥

तृतीयगस्तीक्ष्णकरः सशुक्रो
नरं प्रसूते विगतस्वपक्षम् ।
क्षुद्रस्वभावं सुतरां दरिद्रं
विदेशरक्तं बहुगर्वितं च ॥ ५ ॥

ABCDFILORSW

1c °मुक्तं CILOW 1d स्वरं BFRSW, वरं ACDIO °वर्धकं W, वर्जितं CDL 2c चारुतरं FRS, साधुरतं L 3c °माद्यं D 3d विख्याति° L 4c मानयाढ्यं B, °पापयाढ्यं L, °व्ययाद्यं F 4d °रिद्धि° ABCDFILORW 5c क्षुर° B, क्षर° W, क्ष्मर° L 5d °गर्हितं AB, °वर्जितं CD

तृतीयगस्तीक्ष्णकरः ससौरो
नरं प्रसूते दृढनिष्ठुराङ्गम् ।
शूरं हतारिं प्रियवाक्यदक्षं
क्षितीश्वराणामनुकूलचेष्टम् ॥ ६ ॥

तृतीयगः शीतकरः सभौमो
नरं प्रसूते कृषिकर्मदक्षम् ।
मुदाविहीनं विनयप्रधानं
स्त्रीणामभीष्टं सुतलालसं च ॥ ७ ॥

तृतीयगः शीतकरः ससौम्यो
नरं विधत्ते विकृतानुकारम् ।
परान्नवित्ताश्रयदाररक्तं
द्यूतप्रियं मत्सरिणं सदैव ॥ ८ ॥

तृतीयगः शीतकरः सजीवो
नरं प्रसूते व्यसनप्रधानम् ।
प्रभूतदुःखं कुटिलस्वभावं
विद्वेशरक्तं धृतिवर्जितं च ॥ ९ ॥

तृतीयगः शीतकरः सशुक्रो
नरं विधत्तेऽहिकरोरुजिह्मम् ।
जडात्मकं दुःखसहं धनाढ्यं
सर्वैर्विमुक्तं च सुदीनवृत्तिम् ॥ १० ॥

---

ABCDFILORSW

6b दृढनि° I °रामं CD 6c हितारिं A after 6 L adds: रवि 7a शीतकरः om. A 7d स्त्रीणामभीष्टं om. BL, नरं समेतं W धनधान्यलाभं W 9c कलिल° B 9d विदेश° L 10b °घ्रि° D, °हृ° RS, °हृ° W, °हृ° F, °ह्व° B °कयोरू° S, °करोति° O 10c जटा° I

तृतीयगः शीतकरः ससौरो
नरं प्रसूते निरुजं निरीहम् ।
प्रमादहीनं बहुसाधुसेव्यं
प्रभूतवित्तं घृणया समेतम् ॥ ११ ॥

तृतीयगो भूमिसुतः ससौम्यो
नरं विधत्ते हितमल्परोगम् ।
सुगन्धगात्रं शुभमूर्धजाढ्यं
महाप्रभावं विभवैः समेतम् ॥ १२ ॥

तृतीयगो भूतनयः सजीवो
नरं प्रसूते भयवर्जिताङ्गम् ।
पुण्यानुरक्तं बहुबुद्धिभाजं
तेजोन्वितं सत्यशुचिं सदैव ॥ १३ ॥

तृतीयगो भूतनयः सशुक्रो
नरं प्रसूते बहुशिल्पदक्षम् ।
सुधार्मिणं तीर्थरतं गुणज्ञं
महौजसं नीतिविशारदं च ॥ १४ ॥

तृतीयगो भूतनयः ससौरो
नरं प्रसूते नृपतिप्रभावम् ।
शूरं कविं रोगविवर्जिताङ्गं
विशेषविप्रे निरतं गतारिम् ॥ १५ ॥

ABCDFILORSW

11c प्रसाद° O 12b दिन° LW °रोषं FRS 12c °पात्रं L °मूर्तिजाढ्यं D, °मूर्धनाढ्यं W order in D: 13a, 14b-14d, 13b-13d 13c बहु° om. W, सु° L गुणानुरक्तं FRS 13d तेजस्विनं L 14a मजिबो C 14b °शिष्य° I 15d नितरां L

तृतीयगः सोमसुतः सजीवो
नरं विधत्ते धनधान्ययुक्तम् ।
गीतप्रियं साधुजने सुमन्त्रं
तीर्थाटनं पुत्रजनैर्युतं च ॥ १६ ॥

तृतीयगः सोमसुतः सशुक्रो
नरं प्रसूते जडतासमेतम् ।
द्रोह्योद्यतं तामसमिन्द्रियार्थैः
सुतार्जितं गुह्यरुजासमेतम् ॥ १७ ॥

तृतीयगः सोमसुतः ससौरो
नरं प्रसूते धनिनामभीष्टम् ।
साधुं सदाचाररतं शुभाङ्गं
प्रसन्नवक्त्रं बहुशीलभाजम् ॥ १८ ॥

तृतीयगो देवगुरुः सशुक्रो
नरं विधत्ते धनपुत्रहीनम् ।
पराजिताङ्गं बहुदुःखसेव्यं
व्यपेतलज्जं हतसौहृदं च ॥ १९ ॥

तृतीयगो देवगुरुः ससौरो
नरं प्रसूते स्थिरतासमेतम् ।
मिष्टान्नपानाम्बरशास्त्ररक्तं
कुलप्रधानं धनसंयुतं च ॥ २० ॥

---

ABCDFILORSW

16 om. ABCDILORSW   16a सुर्जावो F   16c °जनेषुमेत्र्ं F   17b जरता° RS, रजना° ABCDILOW   17c द्रोह्यो° ABFR, द्राह्यो° CD, द्राह्मो° W, द्रास्वो° I, द्रोद° O °धनं BCDI, °घृतं W °मेंद्रियार्थैः BCDL °पार्यैः I   17d सुत-जितं FRS   18a ससौम्यो S   18c सदाचार° I, सदा वाद° L °भाग्यं I, °भोगं W   18d °शास्त्र° F   19b प्रसूते CDF   20c °पानं वर° F

तृतीयगो दैत्यगुरुः ससौरः
करोति मर्त्यं विभवप्रधानम् ।
प्रसन्नशीलं नृपतेरभीष्टं
विमुक्तरोगं गरिमासमेतम् ॥ २१ ॥

एवं द्विविकल्पाः ॥

तृतीयसंस्था रविचन्द्रभौमा
नरं प्रकुर्वन्ति बहुप्रधानम् ।
सुवाहनाढ्यं सुसुखाभिधानं
प्रभूतकोशं सुधिया समेतम् ॥ २२ ॥

रवीन्दुसौम्या सहजाश्रिताः स्यु-
र्यदा तदासौ सुभगो मनुष्यः ।
शास्त्रानुरक्तः प्रियसाधुकृत्यो
महानुभावो भयवर्जितश्च ॥ २३ ॥

तृतीयसंस्था रविचन्द्रजीवा
नरं प्रकुर्वन्ति हतप्रभावम् ।
बन्ध्याश्रमं नीचसमागमोक्तं
विपन्नशीलं श्रुतवर्जितं च ॥ २४ ॥

तृतीयसंस्था रविचन्द्रशुक्रा
नरं प्रकुर्वन्ति रुजाश्रमार्तम् ।
कष्टान्वितं दौत्यरतं कृतघ्नं
निरूपकायं विकलं खलं च ॥ २५ ॥

ABCḊFILORSW

21a देवगुरुः CW 21d गिरिमा° B, परिसा° L 22c सुसुखंनि° ACD-FILORSW, सुसुषिनि° B 23b तदा स्यात् BRS 23d भव° F, भवा° R 24c नवश्रमा° L °मोक्षं ABDFIRW, °मोक्षः CO 25a °चंद्रयुक्ताः D 25b रुज° ABCDIOW 25c दैत्य° F, दोज्य° B

तृतीयसंस्था रवीचन्द्रसौरा
नरं प्रकुर्वन्ति सुरूपदेहम् ।
हुताशनाभ्यर्चनदानरक्तं
प्रभूतमित्रं त्रपया समेतम् ॥ २६ ॥

तृतीयसंस्था रविभौमसौम्या
नरं प्रकुर्वन्ति नृपप्रधानम् ।
सत्याधिकं कीर्तिकरं सुरूपं
महाधनं धर्मपरं कृतज्ञम् ॥ २७ ॥

तृतीयसंस्था रविभौमजीवा
नरं प्रकुर्वन्ति धृतिप्रधानम् ।
जितेन्द्रियं मन्युविवर्जिताङ्गं
गुणानुरक्तं प्रियवल्लभं च ॥ २८ ॥

तृतीयसंस्था रविभौमशुक्रा
नरं प्रकुर्वन्ति विहीनपापम् ।
सुपुण्यशीलं परमं विधिज्ञं
प्रज्ञाधिकं कामविवर्जितं च ॥ २९ ।

ABCDFILORSW

26c °भ्यर्च्यन° AO, °र्भ्यचर्न° B °दाररक्तं FRS 26d कृपया F 27d कृतघ्नं DIL, परघ्नं ABFORSW 28b धृत° W 28c मन्यु°—28d प्रिय° om. LW 28c °विवर्जितं च D after 28d च W adds: नीच धनं च धान्यं बहुलं प्रतापं 29a °मौरा D 29d यज्ञा° S

तृतीयसंस्था रविभौमसौरा
नरं प्रकुर्वन्ति नरेन्द्रनाथम् ।
विशालकीर्तिं गजवाजिपुष्टं
शूरं कविं शत्रुभयङ्करं च ॥ ३० ॥

तृतीयसंस्था रविसौम्यजीवा
नरं प्रकुर्वन्ति जयेन युक्तम् ।
सेनापतिं शास्त्रकलासु दक्षं
क्षतारिपक्षं क्षमया समेतम् ॥ ३१ ॥

तृतीयसंस्था रविसौम्यशुक्रा
नरं प्रकुर्वन्ति चतुष्पदाढ्यम् ।
सतामभीष्टं कृषिकर्मदक्षं
प्रभूतवित्तं जनसंमतं च ॥ ३२ ॥

तृतीयसंस्था रविसौम्यसौरा
नरं प्रकुर्वन्ति जितारिपक्षम् ।
प्रभूतशस्त्रं रणकर्मदक्षं
क्षमाधिकं शौचरतं सदैव ॥ ३३ ॥

तृतीयसंस्था रविजीवशुक्रा
नरं प्रकुर्वन्ति नयप्रधानम् ।
जितेन्द्रियं भूरिकथानुरक्तं
प्रहासशीलं नृपसंमतं च ॥ ३४ ॥

---

ABCDFILORSW

30b विहीनपापं F 31a °भौम° LW 31b मुक्तं CD 31c शस्त्र° ABDORS सेनाधिपं L 31d प्रभूतशास्त्रं रणकर्मदक्षं LW क्षयम° B after 31d L adds: क्षमाधिकं सौचरतं क्षतारिं (cf. 33d) पक्षं क्षमया समेतं 32a °सौरा L 32c सदामष्टं L कृश° B, कृस° L, कषि° F 32d प्रभूतमित्रं L order in I: 34, 33 33d क्षमान्वितं F 34 om. BLW 34b नृप° I, नर° F, न° R 34d प्रहास्य° ACDIOR, प्रहप° F

तृतीयसंस्था रविजीवसौरा
नरं प्रकुर्वन्ति विधिप्रसिद्धम् ।
दानान्वितं वै दयितं सुरूपं
सुशिक्षितं सर्वकालासु दक्षम् ॥ ३५ ॥

॥ ३६ ॥

तृतीयसंस्थाः शशिभौमसौम्या
नरं प्रकुर्वन्ति श्रुतप्रसिद्धम् ।
कृषीवलं पुण्यकथानुरक्तं
सुपुष्टदेहं बहुपौरुषं च ॥ ३७ ॥

तृतीयसंस्थाः शशिभौमजीवा
नरं प्रकुर्वन्ति विचित्रचेष्टम् ।
शास्त्रानुरक्तं विविधान्नपानं
सुसंयुतं पापपराङ्मुखं च ॥ ३८ ॥

तृतीयसंस्थाः शशिभौमशुक्रा
नरं प्रकुर्वन्ति विनीतदारम् ।
श्रद्धान्वितं वाक्यविशारदं च
प्रख्यातकार्यं भयवर्जितं च ॥ ३९ ॥

तृतीयसंस्थाः शशिभौमसौरा
नरं प्रकुर्वन्ति हितं प्रसिद्धम् ।
प्रभूतवित्तं प्रभया समेतं
सदा विनीतं प्रमदाप्रियं च ॥ ४० ॥

ABCDFILORSW

35c वै दयितं om. S, स्त्रीदयितं FR  35d सुसुक्षितं CD, सुसक्षि A, सुक्षितं B  36 om. cod.  37 om. L  37d-38d om. B  37d सुस्पष्ट° F वपु° CD  38 om. ACD  38a °भौमगिद्धा W  38b=37b in W 38b °वेष्टं F, °नेष्टं S  38d सुसंयुतं om. LW, सुसंयतं IR  39d नय° S

तृतीयसंस्थाः शशिसौम्यजीवा
नरं प्रकुर्वन्ति सदा दरिद्रम् ।
रोषाभिभूतं पिशुनस्वभावं
पापानुरक्तं हतबन्धुवर्गम् ॥ ४१ ॥

तृतीयसंस्थाः शशिसौम्यशुक्रा
नरं प्रकुर्वन्ति पराभिभूतम् ।
सुनीचसेवानुरतं कृतघ्नं
दुःखाधिकं साधुपराङ्मुखं च ॥ ४२ ॥

तृतीयसंस्थाः शशिसौम्यसौरा
नरं प्रकुर्वन्ति परान्नपुष्टम ।
प्रमर्दकं शत्रुजनस्य नित्यं
नीरोगदेहं सततं सुखाढ्यम् ॥ ४३ ॥

तृतीयसंस्थाः शशिजीवशुक्रा
नरं प्रकुर्वन्ति सुकष्टभाजम् ।
व्यपेतलज्जं घृणया विहीनं
पराङ्मुखं शास्त्रगुरुद्विजानाम् ॥ ४४ ॥

तृतीयसंस्थाः शशिजीवसौरा
नरं प्रकुर्वन्ति हितं द्विजानाम् ।
सदा नयज्ञं प्रभुतासमेतं
गतव्यथं श्रीसहितं प्रधानम् ॥ ४५ ॥

---

ABCDFILORSW

42c °रक्तं F 43a सौम्यशोभ्याः W 43c प्रमादिकं L, प्रमादकं W
45a रविजीव° D 45b=46c in S 45d °व्ययं CD, °व्यथा° W, °व्ययं
F स्त्री° LW प्रदानं F

तृतीयसंस्थाः शशिशुक्रसौरा
नरं प्रकुर्वन्ति हुताशवृत्तिम् ।
मान्यं सुदान्तं प्रभुतासमेतं
विद्याविनीतं हतशत्रुपक्षम् ॥ ४६ ॥

तृतीयसंस्थाः कुजसौम्यजीवा
नरं प्रकुर्वन्ति दृढाङ्गयष्टिम् ।
अगर्वितं तीर्थरतं सुधर्मं
प्रभूतवीर्यं सुजनानुरक्तम् ॥ ४७ ॥

तृतीयसंस्थाः कुजसौम्यशुक्रा
नरं प्रकुर्वन्ति सुभोगभाजम् ।
स्त्रीवल्लभं भव्यतरं महार्हं
नृपक्रियासक्तमलोलुपं च ॥ ४८ ॥

तृतीयसंस्थाः कुजसौम्यसौरा
नरं प्रकुर्वन्ति सुखैः समेतम् ।
सौभाग्यवित्ताश्वगजैः समेतं
कृपाधिकं स्थैर्यसमन्वितं च ॥ ४९ ॥

तृतीयसंस्थाः कुजजीवशुक्रा
नरं प्रकुर्वन्ति श्रुतप्रधानम् ।
गुणान्वितं सत्यशुचिप्रगल्भं
भयेन हीनं बहुवल्लभं च ॥ ५० ॥

---

ABCDFILORSW

46a °सौम्या D 46b हताश° AC 46c माज्यं W सुदीनं CD प्रभया W 46d °विहीनं FW 47 om. LW 47c अंगर्वितं B, अंगर्चितं FR, अंगार्चितं ACO, आगार्चितं I, अंगान्वितं D सुधर्म्यं R 48 om. I 48c भव्यतम FRS महाहं LW, महातं CD 49c सौभाज्ञ° O °युक्ताश्व° W समेतं om. C 49d क्षपा° D after °धिकं CD add : गुणाधिकं 50b=49b in W

तृतीयसंस्थाः कुजजीवसौरा
नरं प्रकुर्वन्ति हिरण्यपण्यम् ।
कृषीवलं भूरिचतुष्पदाढ्यं
हयैः समेतं सततं सुमत्यम् ॥ ५१ ॥

तृतीयसंस्थाः कुजशुक्रसौरा
नरं प्रकुर्वन्ति बहुप्रतापम् ।
सदा विनीतं सुकृतानुरक्तं
स्थिरस्वभावं सुतसौख्ययुक्तम् ॥ ५२ ॥

तृतीयसंस्था बुधजीवशुक्रा
नरं प्रकुर्वन्ति भयेन युक्तम् ।
स्त्रीनिर्जितं भूरितमोन्विताङ्गं
कण्डूयमानं च रुजासमेतम् ॥ ५३ ॥

तृतीयसंस्था बुधजीवसौरा
नरं प्रकुर्वन्ति सुदानदक्षम् ।
दोषैर्विमुक्तं श्रुतसौख्ययुक्तं
विनीतकर्माणमगर्वितं च ॥ ५४ ॥

तृतीयसंस्था बुधशुक्रसौरा
नरं प्रकुर्वन्ति तपस्विभक्तम् ।
सुश्रोत्रियं दानपरं विपापं
स्त्रीवित्तरागार्जनकं सदैव ॥ ५५ ॥

ABCDFILORSW

51b °पुण्यं F, °पुण्याः W 51d मुमत्यं I, सुसह्यं B 53b-54a om. LW 53c स्त्रीमिर्जितं D 54b मुतान° W 54c सुत° L 54d °कर्मा च स° ABCDILOW, °कर्माश्च स° FR °गर्वितश्च ABCDIOW 55b-56a om. LW 55d °रागाजनकं F, °रार्गर्जनकं I, °गगर्जनंकं B

तृतीयसंस्था गुरुशुक्रसौरा
नरं प्रकुर्वन्ति सुखैः समेतम् ।
निधानलाभं युवतीजनेष्टं
सन्तुष्टचित्तं दृढसौहृदं च ॥ ५६ ॥

एवं त्रिविकल्पाः ॥

रवीन्दुभौमेन्दुसुतास्तृतीये
नरं प्रकुर्वन्ति महाविभूतिम् ।
महाप्रभावं शुभसङ्गरक्तं
सत्कृत्यनिष्ठासु सदा प्रसक्तम् ॥ ५७ ॥

रवीन्दुभौमामरपूजिताङ्गा–
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
सत्यं जितारिं प्रथिताभिमानं
प्रसन्नवाक्यार्जितभूरिमित्रम् ॥ ५८ ॥

रवीन्दुभौमासुरपूजिताङ्गा–
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
स्वज्ञातिमुख्यं बहुमित्रभाजं
सतामभीष्टं गुरुवत्सलं च ॥ ५९ ॥

रवीन्दुभौमार्कसुतास्तृतीये
नरं प्रकुर्वन्ति विदग्धविद्यम् ।
पुराधिपं ग्रामचतुष्पदाढ्यं
नरेन्द्रपूजासहितं सदैव ॥ ६० ॥

ABCDFILORSW

56 om. D   56c युवति° SW, जुवती° O   56d संतुष्ट° om. W, संचतुष्ट° L   57b महाभि° O °भूतं B   57c सुभगं सरक्तं CD   58a °पूज्य-तांगा F   58d °वाकर्जित° F   59a °भौमामर° L   59c सज्ञाति° LW, सत्वाति° B, संज्ञाति° ACDFI   59d °वल्लभं O   60b °विधं LW, °विघ्नं A

रवीन्दुसौम्यामरपूजिताङ्गा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
गुरुप्रियं साधुसमागमोक्तं
क्रियाधिकं ब्राह्मणभक्तिभाजम् ॥ ६१ ॥

रवीन्दुसौम्यासुरपूजिताङ्गा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
॥ ६२ ॥

रवीन्दुसौम्यार्कसुतास्तृतीये
नरं प्रकुर्वन्ति बहुश्रुतार्थम् ।
बह्वन्नपानाम्बरभोगभाजं
जनानुरक्तं नृपपूजितं च ॥ ६३ ॥

रवीन्दुजीवासुरपूजिताङ्गा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
चतुष्पदाच्छादनभोजनाढ्यं
यशोनिवासं सुतसौख्ययुक्तम् ॥ ६४ ॥

रवीन्दुजीवार्कसुतास्तृतीये
नरं प्रकुर्वन्ति दयाभिभूतम् ।
संग्रामलब्धार्थसुखं यशस्य-
मध्यात्मविद्यासहितं हितं च ॥ ६५ ॥

ABCDFILORSW

61c °गमं च W  62c-d = 63c-d ( but with बद्धेभपीतांबरभाग्य° ) in S for 62c-d W has :

धनं च धान्यं बहुलप्रतापं
गोभूहिरण्यांबररत्नजातं

the rest omit 62c-d  63c बह्वाम° IR °भागं D, जातं W  64d श्रुत° D 65c °लग्नार्थ° F °मुखं FR  65d हितं om. BLW after च L adds शश्वत्

रवीन्दुशुक्रार्कसुतास्तृतीये
　　नरं प्रकुर्वन्ति विनीतबुद्धिम् ।
आरामवापीतरुकूपरक्तं
　　तडागसत्कीर्तनभक्तिरक्तम् ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गा
　　नरं प्रकुर्वन्ति पुराधिनाथम् ।
तेजस्विनं मुख्यतमं सुरूपं
　　शास्त्रानुरक्तं सदयं सदैव ॥ ६७ ॥

सूर्यारसौम्यासुरपूजिताङ्गा
　　नरं प्रकुर्वन्ति सुरत्नभाजम् ।
तृतीयसंस्थाः सुतवित्तभाजं
　　भयेन युक्तं जितशत्रुसंघम् ॥ ६८ ॥

सूर्यारसौम्यार्कसुतास्तृतीये
　　नरं प्रकुर्वन्ति सुकीर्तिभाजम् ।
सदाजयं जन्तुहितं सुसौम्यं
　　जितेन्द्रियं गीतरतं गुणज्ञम् ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्गा–
　　स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
बहुघृणं भव्यतमं स्ववर्गे
　　सुश्रीकमुत्साहिनमुग्रवीर्यम् ॥ ७० ॥

ABCDFILORSW

67a °सौम्यासुर° W　67c सरूपं CIL　67d सदयं om. A　68d नयेन BL　69b सुकीर्तियुक्तं W　69c तंतु° I, तु° A ससौम्यं L　70d °वीर्यं om. S

सूर्यारजीवार्कसुतास्तृतीये
नरं प्रकुर्वन्ति गुणप्रधानम् ।
सौभाग्यविद्यार्थनयैः समेतं
महाप्रभावं व्यसनैर्विहीनम् ॥ ७१ ॥

सूर्यारशुक्रार्कसुतास्तृतीये
नरं प्रकुर्वन्ति सुबुद्धिभाजम् ।
भव्याकृतिं तत्कुललोकरक्तं
महाप्रशंसान्वितमिष्टधर्मम् ॥ ७२ ॥

सूर्यज्ञजीवासुरपूजिताङ्गा–
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
देवद्विजानां प्रणतं निरीहं
प्रभूतयज्ञैः सहितं सुपुत्रम् ॥ ७३ ॥

सूर्यज्ञजीवार्कसुतास्तृतीये
नरं प्रकुर्वन्ति सुयोगरक्तम् ।
अध्यात्मकं कीर्तिकरं कृतज्ञं
प्रभूतशास्त्रागमलब्धकीर्तिम् ॥ ७४ ॥

सूर्यज्ञशुक्रार्कसुतास्तृतीये
नरं प्रकुर्वन्ति सुभृत्यवर्गम् ।
बहुश्रुतं धर्मनयैः समेतं
नरेन्द्रपूजासहितं सदैव ॥ ७५ ॥

ABCDFILORSW

71a °स्तृतीया W  71d व्यसनप्रहीनं W  72a=71a in D  72c भव्य° F °कृतं BCDILW सत्कुल° W  73a=70a in F  73b धर्मं L  73d °जिज्ञैः FRS प्रथितं FRS  74b-75a om. W  74c आध्यात्मिकं FRS क्रमज्ञं FRS  74d °नब्ध° I, °नष्ट° F  75b कुभृत्य° L  75d °पूज्यासाहिकं F

सूर्यामरेज्यासुरपूज्यसौरा—
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
बह्वात्मजं ख्यातियुतं बहुज्ञं
दोषैः प्रमुक्तं गजसंघयुक्तम् ॥ ७६ ॥

चन्द्रारसौम्यामरपूजिताङ्गा—
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
दुष्टस्वभावं विनयेन हीनं
प्रभूतकोशं कृतकस्वभावम् ॥ ७७ ॥

चन्द्रारसौम्यासुरपूजिताङ्गा—
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
विवेकहीनं निजबन्धुनिन्द्यं
युद्धानुरक्तं कलहप्रियं च ॥ ७८ ॥

चन्द्रारसौम्यार्कसुतास्तृतीये
नरं प्रकुर्वन्ति सदानुरागम् ।
गुणैर्विहीनं जडतासमेतं
कृपाविहीनं प्रियसाहसं च ॥ ७९ ॥

चन्द्रारजीवासुरपूजिताङ्गा—
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
तेजोविहीनं गतबुद्धिसत्त्वं
तृष्णान्वितं द्वेषकरं विरूपम् ॥ ८० ॥

ABCDFILORSW

76c बह्वासनं B ख्यावियुतं L 76d प्रयुक्तं CDFR, युक्तं S जन° AD 77a चन्द्रामरेज्यासुरपजि ( पूज्य F )–तांगा° cod. 77b-78a om. W 77d °कोषं ABCDO 79b सदानुरक्तं CD 79c गुणै° L 80c नत° R, तव° F °बुद्ध° B, °बुध° I °सव्यं FR, °सत्वं S 80d ह्लयान्वितं F

चन्द्रारजीवार्कसुतास्तृतीये
नरं प्रकुर्वन्ति विरक्तपौरम् ।
चरित्रहीनं बहुशत्रुवर्गं
प्रियामिषं सत्यधनैः प्रयुक्तम् ॥ ८१ ॥

चन्द्रारशुक्रार्कसुतास्तृतीये
नरं प्रकुर्वन्ति कुबुद्धिभाजम् ।
कौलं नृशंसं सुतरां दरिद्रं
विदेशसेवानिरतं सदैव ॥ ८२ ॥

चन्द्रज्ञजीवासुरपूजिताङ्गा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
क्लेशार्थनाशार्तियुतं विसंज्ञं
विरक्तदारं विकृताश्रयं च ॥ ८३ ॥

चन्द्रज्ञजीवार्कसुतास्तृतीये
नरं प्रकुर्वन्ति चरित्रहीनम् ।
द्विजातिविद्वेषपरं सुगर्हं
सदातिहीनं मलिनात्मकं च ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुतास्तृतीये
नरं प्रकुर्वन्ति हताश्वदारम् ।
रोगार्दितं पातकपानरक्त-
मसह्यं पापरुचिं सदैव ॥ ८५ ॥

ABCDFILORSW

order in S: 81a-b, 82c-d, 82a-b, 81c-d 81c चारित्र° S बहुपुत्र° S 81d सर्वधनैः F °र्वियुक्तं S 83c क्लेशार्ति° L विसंज्ञं om. D, प्रवृत्तं C 83d विक्रिता° O, विहृता° RS, विरुता° F 84c सनर्हं ABCDILOW, सुनर्हं F 84d विहीनं CF 85a °स्तृतीया W 85b हृताश्व° S, हितस्व° D, हृतश्व F, हृतस्व° O 85c वातकफानि° FRS

चन्द्रामरेज्यासुरपूज्यसौरा—
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
गतस्वभावं स्वजनैर्विमुक्तं
विद्याविहीनं बहुसौहृदं च ॥ ८६ ॥

भौमज्ञजीवासुरपूजिताङ्गा
नरं प्रकुर्वन्ति सुतात्मजाढ्यम् ।
सत्यानुरक्तं बहुबुद्धिभाजं
प्रभर्जिताङ्गं गुणवर्जितं च ॥ ८७ ॥

भौमज्ञजीवार्कसुतास्तृतीये
नरं प्रकुर्वन्ति दयाप्रधानम् ।
प्रभूतदानार्जनधर्मभाजं
जनानुरक्तं श्रुतलालसं च ॥ ८८ ॥

भौमज्ञशुक्रार्कसुतास्तृतीये
नरं प्रकुर्वन्ति धृतिप्रधानम् ।
स्वधर्मरक्तं बहुकीर्तिरक्तं
प्रियातिथिं बान्धवपूजितं च ॥ ८९ ॥

भौमामरेज्यासुरपूज्यसौरा—
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
सुरूपदेहं कृतकस्वभावं
विहीनपापं धनसंयुतं च ॥ ९० ॥

ABCDFILORSW

86a चंद्रासुरेज्यासुर° B 86c °स्वभावं om. LW सुजनै° D °विंयुक्तं FRSW 86d गतसौहृदं O 87b सुधा° C 87d प्रभुर्जितांगं ABCDO, प्रभुं जितांगं ILRW, प्रभुर्वितोरां F, प्रवर्जितांगं S 88d जया° W सुत° D °लाभसं I 89b नरं प्रधानं धृतीया समेतं W 89c अधर्म° BCDILW °युक्तं FRS 90c स्वरूप° BL कृतवस्तु° W 90d °संजितं F

सौम्यामरेज्यासुरपूज्यसौरा—
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
खलात्मकं पापमतिं कृतघ्नं
गुणैर्विहीनं नयवर्जितं च ॥ ९१ ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्या-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
प्रभूतविद्याधसुतैः समेतं
रूपान्वितं स्त्रीदयितं सदैव ॥ ९२ ॥

रवीन्दुभौमज्ञसितास्तृतीये
नरं प्रकुर्वन्ति महानुभावम् ।
यज्ञक्रियारम्भबहुप्रसिद्धं
धर्मध्वजं जीवहितं प्रधानम् ॥ ९३ ॥

रवीन्दुभौमज्ञदिनेशपुत्रा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
विशिष्टसेवार्जितनीतिभाजं
जयान्वितं सत्यसमन्वितं च ॥ ९४ ॥

रवीन्दुभौमामरपूज्यशुक्रा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
विदग्धवाक्यव्रतमप्रभावं
विहीनगं काननगं सदैव ॥ ९५ ॥

ABCDFILORSW

91c=90c in W 91c कृतज्ञं C 91d नृप° F च om. I col: इति श्रीवृद्धयवने चतुर्थविकल्पना संपूर्णा W col. एवं om. B 92c °विद्यास्व° O, °विद्यासु° B 92d मनोज्ञ FRS 93c यज्ञाविकं रंभ° B 94c विशेष्ट° C 94d दया° L भक्तिपरं सदैव CD 95b-95Aa om. LW 95d कामनगं D

[ रवीन्दुभौमामरपूज्यशुक्रा–
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
मेधाविनं नाट्यरतं रसज्ञं
गीतप्रसक्तं बहुरोगभाजम् ॥ ९५A ॥]

रवीन्दुभौमामरपूज्यसौरा–
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
कुलीनसंसर्गरतं सुतुष्टं
देवद्विजानां निरतं विधिज्ञम् ॥ ९६ ॥

रवीन्दुभौमासुरपूज्यसौरा–
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
आज्ञाविहीनं हतशत्रुदर्पं
प्रधानमित्रं कृपयाधिकं च ॥ ९७ ॥

रवीन्दुसौम्यामरपूज्यशुक्रा–
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
दयान्वितं कीर्तिकरं कृतज्ञं
सतामभीष्टं सुजनानुरक्तम् ॥ ९८ ॥

रवीन्दुसौम्यामरपूज्यसौरा–
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
प्रियातिथिं देवमनुष्यभाजं
प्रेमापरक्तं सुधिया समेतम् ॥ ९९ ॥

ABCDFILORSW

95Ac नाट्य° BC, नात्र° AO, नात्य° F °रसं BLW, °नरं FRS सदासं CD 95Ad बहुभोग° FRS 96c °संगीतरतं F सुपुष्टं S, संतुष्टं B 96d-115b om. W 97b जनयंति मर्त्यं om. L पत्नी B 97c राज्ञा ABCDILO, राजा° R, राज° F 97d क्रपया° B, चक्रया° F 98a °भौमासुर° CD 98c दमा° FS 98d स्वजना° L 99b जनयंति मर्त्यं om. D 99c °भावं L 99d प्रेमाथ° I, प्रेमाम° FRS सुप्रिया° S

चन्द्रज्ञजीवासुरपूज्यसौरा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
नीचानुरक्तं कुकलत्रभाजं
विशिष्टसेवाविरतं सदैव ॥ १११ ॥

भौमज्ञजीवासुरपूज्यसौरा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
वृथाटनं नष्टमनोरथं च
चरित्रहीनं नितरां कुरूपम् ॥ ११२ ॥

एवं पंचविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्रा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
विचित्रवेषाभरणं सुरम्यं
गीतानुरक्तं बहुधर्मभाजम् ॥ ११३ ॥

रवीन्दुभौमज्ञसुरेज्यसौरा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
गान्धर्वविद्याद्रविणं सुभाष्यं
सुशुद्धकण्ठं प्रियदर्शनं च ॥ ११४ ॥

ABCDFILORS

111b जनयंति मर्त्यं om. CD   111c-112b om. F   112b जनयंति मर्त्यं om. CD   112c °मनोरथंव F   112d चारित्र° FRS col. इति श्रीवृद्धयवने पंचमविकल्पना संपूर्णा W after 96   col. चतुर्वि° D, चतु/पंचवि° C   113b जनयंति मर्त्यं om. CD   113c-114b om. I   114b जमयंति मर्त्यं om. CD   114 om. F   114c °वियाप्रविणं ABILRS सुभाल्यं ABC, सुभास्यं IRS, सुसाल्यं L, corr. to सुभाल्यं L², सुसाग्यं D   114d सशुद्ध° IL

रवीन्दुभौमज्ञसितार्कपुत्रा-
स्तृतीयसंस्था जनयन्ति मर्त्यम् ।
महाजनेष्टं जनतास्वभीष्टं
हितं द्विजानां गुणसंयुतानाम् ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
तृतीयसंस्थाश्चतुरं ससौख्यं
प्रभूतविद्यं रणकर्मदक्षम् ॥ ११६ ॥

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
तृतीयसंस्था धनसस्ययुक्तं
वराननं नीतिविशारदं च ॥ ११७ ॥

सूर्यारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
तृतीयसंस्था धनवृद्धिभाजं
जितेन्द्रियं पुण्यविवर्धितं च ॥ ११८ ॥

---

ABCDFILORSW

115b जनयंति मर्त्यं om. D मर्त्यं om. C 115c देजाजनेष्टं W बनिता° D 115d गुणसंमतं च F 116a °शुक्राः FR 116b मर्त्यं om. D 116c प्रसौख्यं A, शसौख्यं FR 116d-117d om. L 116d °विद्या° BSW 117a शुक्राः DFORSW 117b मर्त्यं om. D 117c °सस्यभाजं W 118a °शुक्राः FRS 118b मर्त्यं om. D 118c-119b om. I 118c धनमृद्धि° ABCLOW, मृद्धि° D, धनऋद्धि° RS, धनशुद्धि° F 118d °विवर्धनं W, °बिवार्जितं FS

चन्द्रारसौम्यामरपूज्यशुक्र-
　　शनैश्चराः संजनयन्ति मर्त्यम् ।
तृतीयसंस्था सुखलं सुदीनं
　　भयान्वितं हीनविचेष्टितं च ॥ ११९ ॥

एवं षड्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्र-
　　शनैश्चराः संजनयन्ति मर्त्यम् ।
तृतीयसंस्था जयिनं प्रगल्भं
　　पुण्याधिकं कीर्तिसमन्वितं च ॥ १२० ॥

एवं सप्तविकल्पाः ॥

इति श्रीवृद्धयवने सहजाश्रययोगाध्यायः ॥

---

ABCDFILORSW

119a °शुक्राः FR　119b संजनयंति मर्त्यं om. CD　119c सखलं CD, सुसुखं L　सुदीम्नं S, सुदान A, सुहीनं B　119d दीनवि° ACDIO　col.: इति श्रीवृद्धयवने षड्विकल्पना संपूर्णा W　col. om. O　120a °शुक्राः FIR　120b संजनयंति मर्त्यं om. C　120c यथिनं FRS, जनयंति B　col.: सप्तमविकल्पना संपूर्णा W　chapter col. om. O　श्री° om. FIRS सहजभाव संपूर्णः W

# त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

चन्द्रान्वितस्तीक्ष्णकरः सुखस्थो
नरं विधत्ते सुखसौख्यहीनम् ।
विपन्नशीलं परतर्ककं च
प्रभावहीनं गतसत्यशौचम् ।
व्यपेतलज्जं भयविह्वलं च ॥ १ ॥

भौमान्वितस्तीक्ष्णकरः सुखस्थो
नरं विधत्ते क्षतजार्तदेहम् ।
प्रसूतिवानापहतं विपुण्यं
श्रमार्दितं कोपसमन्वितं च ॥ २ ॥

सौम्यान्वितस्तीक्ष्णकरश्चतुर्थे
नरं सुवाते कफपीडिताङ्गम् ।
स्वल्पात्मजं भूरिपराभिभूतं
खलप्रियं द्वेषरतं सदैव ॥ ३ ॥

जीवान्वितस्तीक्ष्णकरः सुखस्थो
नरं प्रसूते मलिनस्वभावम् ।
विहीनवित्तं कृतकस्वभावं
पित्ताधिकं कोपसमन्वितं च ॥ ४ ॥

शुक्रान्वितस्तीक्ष्णकरः सुखस्थो
नरं प्रसूते बहुपानसक्तम् ।
बाधाधिकं रूक्षतरं नृशंसं
बह्वाशनं लौल्यसमन्वितं च ॥ ५ ॥

ABCDFILORSW

1b मृत° CDF  1c om. C  °तर्कुकं ADL  1d प्रभावि° DORS  1e om. AO  2b °जार्नि° O  2c प्रसूत° DO °ना [illegible] S  2d कोप° W. पाप° CD  3a श्चतुर्थो ORS, सुखस्थो L  3b प्रसूते F, विधत्ते L  3c सुनि° FLW  3d द्वेषपरं CD  4b मतिनृ° I  4c कुकच° C, कृक° L  5b °यान° B, °पाप° F, °वान° W °भाजं F  5c व्याधा° F, वाना° LW सूक्ष° C °तरुं R, °तनुं S, °करं B

सौरान्वितस्तीक्ष्णकरः सुखस्थो
नरं प्रसूते रसपीडिताङ्गम् ।
सुतीव्रकोपं कलहानुरक्तं
विमुक्तलज्जं जडतासमेतम् ॥ ६ ॥

चन्द्रान्वितो भूतनयः सुखस्थः
स्वल्पायुषं संजनयन्ति मर्त्यम् ।
क्षमाविहीनं परदाररक्तं
जनातिगं साधुविवर्जितं च ॥ ७ ॥

चन्द्रान्वितः सोमसुतः सुखस्थो
नरं प्रसूते बहुसौख्ययुक्तम् ।
प्रसन्नवाक्यं सुविवेकभाजं
जनप्रियं प्राणभृतां वरिष्ठम् ॥ ८ ॥

चन्द्रान्वितो देवगुरुः सुखस्थो
नरं नयज्ञं सुभगं प्रसूते ।
बहुप्रतापं नृपतेरभीष्टं
कृपान्वितं देवगुरुप्रसक्तम् ॥ ९ ॥

चन्द्रान्वितो दैत्यगुरुः सुखस्थो
महानरं स्फीतिकरं प्रसूते ।
प्रभूतमित्रार्जितभूरिसौख्यं
कुलप्रधानं विनतं सदैव ॥ १० ॥

ABCDFILORSW

6b-7a om. W 6c °कायं F, °पोयं L 7b स्वल्पायुतं FR, स्वल्पात्मजं W, स्वलमश्रुतं च S 7c °दार° om. A, °दान° L 7d जनाभिगं ADFILW शासु° FR, शास्त्र° S °विपर्यितं O 9c-10b om. A 10b प्रीति° L 10d विनीतं B

चन्द्रान्वितः सूर्यसुतः सुखस्थो
नरं प्रसूते परुषं सदैव ।
रोगाभिभूतं परुषस्वभावं
निन्द्यं कृतघ्नं परदेशरक्तम् ॥ ११ ॥

भौमान्वितः सोमसुतः सुखस्थो
नरं प्रसूते क्षतजार्तदेहम् ।
स्त्रीचौर्यपानव्यसनाभिभूतं
द्यूतप्रियं प्रीतिविवर्जितं च ॥ १२ ॥

भौमान्वितो देवगुरुः सुखस्थः
करोति मर्त्यं विजितं सुदीनम् ।
कदर्यमल्पात्मजमिष्टपापं
स्वबन्धुमुक्तं कलहानुरक्तम् ॥ १३ ॥

भौमान्वितो दैत्यगुरुः सुखस्थो
नरं प्रसूते विफलोद्यमं च ।
चरित्रहीनं विरतं स्ववर्गे
कदर्यमल्पश्रुतमोजसार्तम् ॥ १४ ॥

भौमान्वितः सूर्यसुतः सुखस्थो
नरं प्रसूते बहुदुःखभाजम् ।
असह्यर्यं स्नेहविवर्जिताङ्गं
सुनीचकर्माणमतिप्रयुक्तम् ॥ १५ ॥

ABCDFILORSW

11a सूर्यसुतः om. B,......शनिः W 11b पुरुषं BCFLRSW 11c पुरुष° D 12d गीति° D 13b सुदानं BF 13c कंदर्प° cod. °मभ्यात्मजं ACIOW, °माभ्यात्मजं L, °मध्यात्मजं D, °मसात्मजं B °मिष्टधर्मं CD 13d सबंधुमुक्तं W, पापस्वबंधु° CD 14 om. O 14c चारित्र° FLRSW 14d कंदर्प° cod. °मोजसर्तं S, °मोसार्तं L, °मौल्यसार्तं W, °मार्तं I 15c आर्यंय W 15d स्वनीच° D

सौम्यान्वितो देवगुरुः सुखस्थो
नरं प्रसूते बहुसौख्ययुक्तम् ।
दयाधिकं कीर्तिकरं प्रशान्तं
नरेन्द्रपूज्यं मतिसंयुतं च ॥ १६ ॥

सौम्यान्वितो दैत्यगुरुः सुखस्थो
नरं प्रसूते नृपतेरभीष्टम् ।
नरेन्द्रतुल्यं सचिवं च वा स्यात्
सेनापतिं वा जनयेत् प्रधानम् ॥ १७ ॥

सौम्यान्वितः सूर्यसुतः सुखस्थो
नरं प्रसूते विजितान्तरोगम् ।
सम्पीडिताङ्गं कृपणस्वभावं
रोगार्दिताढ्यं ज्वरसंयुतं च ॥ १८ ॥

जीवान्वितो दैत्यगुरुः सुखस्थो
नरं प्रसूतेऽर्थसमृद्धिभाजम् ।
सुवर्णमुक्तामणिभृत्सुताढ्यं
श्रद्धान्वितं तीर्थरतं सदैव ॥ १९ ॥

॥ २० ॥

शुक्रान्वितः सूर्यसुतः सुखस्थो
नरं प्रसूतेऽल्पसुखं विजिह्मम् ।
विरक्तमित्रं रसनस्वभावं
सुशैल्ययुक्तं परवंचकं च ॥ २१ ॥

एवं द्विविकल्पाः ॥

ABCDFILORSW

16c दयाधिकं om. L, in marg. L[2]  16d मन्त्रिसंकृतं F  17a देवगुरुः DW  17b नृपते° om. LW  17c वा ]घात् FR  17d सोमा° L  18b °नारिपक्षं W, °नात्यरोगैः FRS °रोगः ABCDI, °रोगाः O  18d °ताद्यं ABFIORW, °ताद्या C, °ताद्य° DS  19 om. W  19a दैत्य°—19d श्रद्धान्वितं om. BL  19b ऽर्द्ध° D  19c °भृत्सुखाढ्यं D  20 om. cod.  21c त्रसन° FRS °स्वभावैः W  21d सुसत्य° W

रवीन्दुभौमाः सुखगा मनुष्यं
सदा प्रकुर्वन्ति विनष्टवित्तम् ।
दुर्गन्धिवक्त्रं मतिहीनमुग्रं
पित्तार्दितं क्लेशसमन्वितं च ॥ २२ ॥

रवीन्दुसौम्याः सुखगा मनुष्यं
कुर्वन्ति शीलेन विवर्जिताङ्गम् ।
गुरुप्रभाहानिकरं कृतघ्नं
सुकष्टसेवार्जितपुष्टदुष्टम् ॥ २३ ॥

रवीन्दुजीवाः सुखगा मनुष्यं
व्ययार्थितं क्लेशकुकर्मरक्तम् ।
कुर्वन्ति रोगव्यसनाभिभूतं
शौच्यं दरिद्रं मतिवित्तहीनम् ॥ २४ ॥

रवीन्दुशुक्राः सुखगा मनुष्यं
सदा प्रकुर्वन्ति कलत्रभाजम् ।
गण्डप्रकोपार्दितसूक्ष्मकायं
पराभिभूतं नयवर्जितं च ॥ २५ ॥

रवीन्दुसौराः सुखगा मनुष्यं
कुर्वन्ति वाताधिकमुग्रमेव ।
पराङ्मुखं देवगुरुद्विजानां
नानाखलस्नेहसुदुष्टचित्तम् ॥ २६ ॥

ABCDFILORSW

22a मुभगा D खगानां W 22b विनष्ट°—23b कुर्वंति om. F order in S: 22a, 23b-d, 23a, 22b-d 23a °भौमाः S 23b खिलेन BIW, खेलेन CD 23c °हीनकरं W 23d °संवर्जित° L °हृष्टं S 24a सुभगा CD 24d शौचं CD, शौर्यं FW 25b सुकल्प° CD 25c प्रचंडकोपार्जित° L °कार्यं W 26c °द्विपानां W

सूर्यारसौम्याः सुखगा मनुष्यं
कुर्वन्ति तीव्रं परवित्तलुब्धम् ।
कुटुम्बमुक्तं कृतकस्वभावं
वन्ध्याश्रमं शास्त्रपराङ्मुखं च ॥ २७ ॥

सूर्यारजीवाः सुखगा मनुष्यं
कुर्वन्ति मातापितृबन्धुहीनम् ।
विलक्षमोजोरहितं प्रकामं
सुनिष्ठुरं नीचजनानुरक्तम् ॥ २८ ॥

सूर्यारशुक्राः सुखगा मनुष्यं
सदा प्रकुर्वन्ति सुखप्रधानम् ।
सेनाधिकं शास्त्रकथानुरक्तं
दुष्टस्वभावं भयसंयुतं च ॥ २९ ॥

सूर्यारसौराः सुखगा मनुष्यं
कुर्वन्ति दुःखैर्विविधैः समेतम् ।
विमुक्तलज्जं जडतासमेतं
स्वल्पायुषं भीतिसमन्वितं च ॥ ३० ॥

सूर्यज्ञजीवाः सुखगा मनुष्यं
कुर्वन्ति नानाविधदुःखभाजम् ।
कुशीलरक्तं कृपणस्वभावं
हर्षाधिकारार्दितशिष्टकामम् ॥ ३१ ॥

ABCDFILORSW

27c °मुक्ता ABCDFIORW 27d वेध्या° W 28a °सौम्या F 28b °मातापितु° LW 31d हर्षादि° BCDILW °नारार्दित° BCDIL, °जारार्दित° W

सूर्यज्ञशुक्राः सुखगा मनुष्यं
कुर्वन्ति पापे निरतं कुशीलम् ।
पित्तप्रकोपार्दितसर्वगात्रं
त्रपाविहीनं कुनखं कृतघ्नम् ॥ ३२ ॥

सूर्यज्ञसौराः सुखगा मनुष्यं
कुर्वन्ति चारित्रविवर्जितं च ।
कुमित्रसङ्गात्सभयं सदैव
प्रद्वेषशीलं कुकलत्रभाजम् ॥ ३३ ॥

सूर्यामरेज्याभृगुजाः सुखस्था
नरं प्रकुर्वन्ति सुखेन हीनम् ।
नितान्तमुग्रं परदेशसङ्गात्
कृच्छ्रेण लब्धद्रविणं कदर्यम् ॥ ३४ ॥

सूर्यामरेज्यार्कसुताः सुखस्था
नरं प्रकुर्वन्ति परस्वलुब्धम् ।
विमुक्तसत्यं परुषस्वभावं
शंसाविवेकार्थनयैर्विहीनम् ॥ ३५ ॥

सूर्यासुरेज्यार्कसुताः सुखस्था
नरं प्रकुर्वन्ति सुहृद्विमुक्तम् ।
विमुक्तहर्म्यं रुजया समेतं
हीनाधिकाङ्गं गुणवर्जितं च ॥ ३६ ॥

ABCDFILORSW

32c वित्त° F °प्रकोपार्चित° BW 32d क्रिया° F 33d प्रद्वेष्य° I order in W: 34a, 35b-d, 35a, 34b-d 34a °मरेज्य° W 34d लुब्धं O 35b °लब्धं ACFL 36a सूर्यमरेज्या° CDLW 36b °द्विभक्तं W 36c °कर्म्यं F

चन्द्रारसौम्याः सुखगा मनुष्य
कुर्वन्ति विद्यार्जनधर्मयुक्तम् ।
प्रभूतसौख्यं विजितेन्द्रियार्थं
पराङ्मुखं पापखलावमानाम् ॥ ३७ ॥

चन्द्रारजीवाः सुखगा मनुष्यं
कुर्वन्ति नानाविधसौख्यभाजम् ।
नरेन्द्रपूज्यं निजबन्धुमान्यं
महाप्रभावं जनसंमतं च ॥ ३८ ॥

॥ ३९ ॥

चन्द्रारसौराः सुखगा मनुष्य
कुर्वन्ति पापप्रविमुक्तकायम् ।
श्रुतार्जनेच्छं चतुरस्वभावं
विशिष्टवाक्यार्जनतत्परं च ॥ ४० ॥

चन्द्रज्ञजीवाः सुखगा मनुष्यं
कुर्वन्ति भूपालमरोगदेहम् ।
हयाश्वकोशैर्विविधैः समेतं
बहुप्रभावं विजितारिसंघम् ॥ ४१ ॥

चन्द्रज्ञशुक्राः सुखगा मनुष्यं
कुर्वन्ति भूरिप्रभुतासमेतम् ।
प्रभूतयज्ञार्जितशुभ्रकीर्तिं
कृपासमेतं सुजनानुकूलम् ॥ ४२ ॥

ABCDFILORSW

37d °मानं cod. 38d °संयुतं O 39 om. cod. 40a °सौम्याः SW 40b °विभक्त° W °कार्यं BW 41a-42a om. C 41c हयास्व° DW, ह्याश्व ABCIOR 41d °प्रतापं W विवर्जितारिंघं S 42a सुभगा D 42d क्रिया° D स्वजना° L

चन्द्रज्ञसौराः सुखगा मनुष्यं
कुर्वन्ति वित्तश्रुतिविप्ररक्तम् ।
महामनुष्यं सुकुलप्रधानं
मातापितृभ्यां सततं च रक्तम् ॥ ४३ ॥

चन्द्रेज्यशुक्राः सुखगा मनुष्यं
कुर्वन्ति भूनाथमतिप्रगल्भम् ।
जगत्प्रसिद्धं घृणया समेतं
हतारिपक्षं जनसंमतं च ॥ ४४ ॥

चन्द्रेज्यसौराः सुखगा मनुष्यं
कुर्वन्ति कीर्त्यान्वितमिष्टधर्मम् ।
नीरोगदेहं स्थितसाधुवित्तं
नानार्थसार्थैः स्तुतमीश्वरं च ॥ ४५ ॥

चन्द्रासुरेज्यार्कसुताः सुखस्था
नरं प्रकुर्वन्ति धृतिप्रधानम् ।
सुबन्धुमान्यं सुसदाभिरक्तं
नरेन्द्रसत्त्वार्जितभूरिवित्तम ॥ ४६ ॥

भौमज्ञजीवाः सुखगा मनुष्यं
कुर्वन्ति पुत्रार्जितसौख्यभाजम् ।
कृषीबलं लब्धयशःप्रतापं
द्विजातिथिं प्रीतिसमन्वितं च ॥ ४७ ॥

ABCDFILORSW

43b °प्रतिविप्र° BLW 43c कुकल° O 44a सुभगा D 44b भूताश्व° F °मथ FRS, °मप्य° D °प्रसिद्धं F 45d वा DF 46a °ज्यार्क°—46d नरे° om. I 46c °नान्य W, °जान्य B, °जाया F, °जानां S, जा DR 46d-47c om. S 46d °संतार्जित° BLW, °संपार्जित° C, °सन्मार्जित° ADFIOR 47a सुभगा D 47c लब्ध्र° D, लब्ध° F

भौमज्ञशुक्राः सुखगा मनुष्यं
कुर्वन्ति नानाविधसस्यभाजम् ।
चतुष्पदाढ्यं विनयप्रधानं
स्वस्थस्वभावं बहुबान्धवं च ॥ ४८ ॥

भौमज्ञसौराः सुखगा मनुष्यं
कुर्वन्ति तृष्णाधिकमिष्टपापम् ।
मित्रैर्विहीनं परदाररक्तं
सुनिष्ठुराङ्गं मलिनं सदैव ॥ ४९ ॥

भौमामरेज्याभृगुजाः सुखस्था
नरं प्रकुर्वन्ति सदा सुशीलम् ।
तीर्थाश्रयं भूरियशःप्रतापं
मुख्यं स्ववर्गे शुभसर्वगात्रम् ॥ ५० ॥

भौमामरेज्यार्कसुताः सुखस्था
नरं प्रकुर्वन्ति चलस्वभावम् ।
स्वल्पार्जितं स्वल्पसुखायताङ्गं
प्रेष्यं नरेन्द्रस्य हिते स्थितं च ॥ ५१ ॥

भौमासुरेज्यार्कसुताः सुखस्था
नरं प्रकुर्वन्ति खलस्वभावम् ।
पराङ्मुखं साधुजनस्य नित्यं
प्रभूतकोपं परुषस्वभावम् ॥ ५२ ॥

ABCDFILORSW

48a °सौराः C    48b-49a om. LW    48b नाविनोध° FR, गविनोध° D °सत्यभाजं C, °ससालाजं D, °समालजं F    48d शुभस्वभावं C    49 om. S
50a °मरेज्य° W    50c धारि° DFRS    50d सुख्यं A, सुखं I    शुभभर्ग° W
51b बल° C, खल° DFW, च° S    51d प्रेष्यं om. D    नरेंद्रपस्य D    हितं FLW
52a सौम्या° DF    52a °र्कसुताः—53a सौम्यामरेज्या in marg. O

सौम्यामरेज्याभृगुजाः सुखस्था
नरं प्रकुर्वन्ति धराधिनाथम् ।
व्यपेतशत्रुं सुतधर्मभाजं
हतारिवर्गं प्रियदर्शनं च ॥ ५३ ॥

सौम्यामरेज्यार्कसुता सुखस्था
नरं प्रकुर्वन्ति निधानभाजम् ।
वाणिज्यरक्तं गतशत्रुपक्षं
क्षमान्वितं शौचसमन्वितं च ॥ ५४ ॥

[ सौम्यामरेज्यार्कसुता सुखस्था
नरं प्रकुर्वन्ति नृपस्य भाजम् ।
मन्त्रिप्रधानं बहुकीर्तियुक्तं
सदानुकूलं गुरुबान्धवानाम् ॥ ५५ ॥ ]

जीवासुरेज्यार्कसुताः सुखस्था
नरं प्रकुर्वन्ति यशोनिधानम् ।
दीक्षासमेतं गुरुकृत्यरक्तं
शुभाननं मुख्यतमं जनानाम् ॥ ५६ ॥

एवं त्रिविकल्पाः ॥

रवीन्दुभौमेन्दुसुताः सुखस्था
नरं प्रकुर्वन्ति धिया विहीनम् ।
पराभिभूतं निजवर्गमुक्तं
गतघृणं भीतिसमन्वितं च ॥ ५७ ॥

---

ABCDFILORSW

53b धनं BIL  53c श्रुत° C  order in R: 54a, 55b-d, 55a, 54b-d  54b °लाजं D, °लाभं AFO  54d शौचसमन्वितं om. LW, but 54b-56a with it repeated after 56a in L  55 om. ACDFO  55a सौम्यामरे° ILW  55c मैत्री° S  56c दीक्ष्या° D °कल्प° W  56d सुभानुनं L col.: इति श्रीवृद्धयवने त्रिविकल्पाः W order in W: 57a, 58b-d, 58a, 57b-d  57a °भौमज्ञसुखं सतस्थाः W

रवीन्दुभौमामरपूजिताङ्गा
नरं प्रकुर्वन्ति गतस्वभावम् ।
सदा वियुक्तप्रजमुग्ररूपं
चरित्रहीनं सुखवर्जितं च ॥ ५८ ॥

रवीन्दुभौमासुरपूजिताङ्गाः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
मित्रैर्विहीनं विधनं कुरूपं
परैर्जितं नष्टमतिं सदैव ॥ ५९ ॥

रवीन्दुभौमार्कसुताः सुखस्था
नरं प्रकुर्वन्ति घृणाविहीनम् ।
मलिम्लुचं त्रासकरं जनानां
सुदीर्घसूत्रं कलहप्रियं च ॥ ६० ॥

रवीन्दुसौम्यामरपूजिताङ्गाः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
तृष्णान्वितं कामनिपीडिताङ्गं
गुणप्रमुक्तं कुलसर्वहीनम् ॥ ६१ ॥

रवीन्दुसौम्यासुरपूजिताङ्गाः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
विरूपमस्नेहमरोमशाङ्गं
विदेशसेवानुरतं सदैव ॥ ६२ ॥

ABCDFILORSW

58a °पूज्यतांगा F 58b गताश्व° C 58c विमुक्त° CL °व्रज° C, °प्रयुज° A °प्रभु° BILRW 59c विधनं om. A, विधिनं BCDOW 60c नराणां C 60d कलहं श्रियश्च W 61a °भौमा° C °सौम्यासुर° L °पूज्यतांगाः F 61c तृष्णाधिकं C 62 om. D 62a °सौम्यामर° CFI °पूज्यतांगाः F 62b संजनयंति मर्त्यं om. C 62c विरूपदेहंति C °रोमशांतं W, °रोगशीगशांगं I

रवीन्दुसौम्यार्कसुताः सुखस्था
नरं प्रकुर्वन्ति हृताशयं च ।
चौरं नृशंसं परदाररक्तं
सुनीचवृत्तिं कुधिया समेतम् ॥ ६३ ॥

रवीन्दुजीवासुरपूजिताङ्गाः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
बहुप्रमादं कलहानुरक्तं
कठोरवाक्यं विधृतं कुचैलम् ॥ ६४ ॥

रवीन्दुजीवार्कसुताः सुखस्था
नरं प्रकुर्वन्ति सुदीर्घसूत्रम् ।
कुदेशभाजं वनिताहृतस्वं
वेश्यानुरक्तं च दयाविहीनम् ॥ ६५ ॥

रवीन्दुशुक्रार्कसुताः सुखस्था
नरं प्रकुर्वन्ति सुनीचरक्तम् ।
द्यूतप्रियं नष्टधनं विरूपं
कुकर्मसेवासु सदा प्रसक्तम् ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गाः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
उग्रस्वभावं परपाकरक्तं
धैर्यैर्विहीनं गतसौहृदं च ॥ ६७ ॥

ABCDFILORSW

64a °पूज्यतांगाः F    64c °प्रसादं O    64d विधूतं F, विधुना C, विकृतं S, कृतं B, कृतकं ILW    order in DF: 66, 65; order in AC: 66a-c °धनं, 65c °हृतस्वं–d;    order in O: 67a-c, 66, 66a-c °धनं, 65c °हृतस्वं–d; order in B: 65, 67a-b, 66c-d, 66a-b, 67c-d    65c = 66c द्यूत°—°धना° plus 65c हतस्वं in F    67 om. A    67c-68b in marg. L    67c °सक्तं C    67d: दयाधिकं बन्धुसमन्वितं च C

चन्द्रारसौम्यार्कसुताः सुखस्था
नरं प्रकुर्वन्ति हुताशभक्तम् ।
प्रभूतयज्ञाप्तयशोविशालं
प्रभूतवित्तं जनवत्सलं च ॥ ७९ ॥

चन्द्रारजीवासुरपूजिताङ्गाः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
ज्ञेयज्ञमत्यद्भुतविक्रमाढ्यं
दयाधनं साधुजनैः समेतम् ॥ ८० ॥

चन्द्रारजीवार्कसुताः सुखस्था
नरं प्रकुर्वन्ति गुणार्जनोक्तम् ।
सत्साधुसेवाप्तबहुप्रहर्षं
कल्याणचेष्टं मतिगर्वितं च ॥ ८१ ॥

चन्द्रारशुक्रार्कसुताः सुखस्था
नरं प्रकुर्वन्ति नतं द्विजानाम् ।
कृतज्ञमुत्साहिनमिष्टधर्मं
स्त्रीणामभीष्टं प्रथितप्रभावम् ॥ ८२ ॥

चन्द्रज्ञजीवासुरपूजिताङ्गाः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
लज्जाधिकं कर्मपरं ससत्यं
तपोर्जने तत्परमानसं च ॥ ८३ ॥

ABCDFILORSW

79 om. D 79b हुताश° W 79c °यज्ञात° I, °यज्ञाम° C, °यज्ञास° L 79d जनवल्लभं I, धनवस्त्रलं F 80b-80d om. BLW; in W :

सुखस्थिता जनय मनुष्यं
गोभूहिरण्यांबररत्नजात–
राजप्रधानं बहुशास्त्रयुक्तं

80b संजनयंति मर्त्यं om. C 80c गेयज्ञं DFRS 80d दम° AD 81a om. BL 81b गुणार्जि° BLOW, गुणजि° AD 81c ससाधु° LW °हर्षे DF, °कर्ष W 81d °गर्विजं DF 83b संजनयंति मर्त्यं om. C 83c ससत्वं B, ससत्तं C

चन्द्रज्ञजीवार्कसुताः सुखस्था

नरं प्रकुर्वन्ति हितं द्विजानाम् ।

परोपकारप्रवणं निरीहं

सत्कीर्तिभाजं जितवादिसंघम् ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुताः सुखस्था

नरं प्रकुर्वन्ति सुतप्रधानम ।

स्त्रीणामभीष्टं गतसर्वदोषं

स्मृत्यर्थसम्पोषणमीश्वरं च ॥ ८५ ॥

चन्द्रामरेज्याभृगुजार्कपुत्रा

सुखस्थिताः संजनयन्ति मर्त्यम ।

वाणिज्यसक्तं सधनं प्रहृष्टं

प्रसिद्धमोजः सहितं सदैव ॥ ८६ ॥

भौमज्ञजीवासुरपूजिताङ्गा

सुखस्थिताः संजनयन्ति मर्त्यम ।

घृणाधिकं कामविराजिताङ्गं

विशुद्धवाक्यं नयमानमात्तम ॥ ८७ ॥

भौमज्ञजीवार्कसुताः सुखस्था

नरं प्रकुर्वन्ति रतं गुरूणाम् ।

गतव्ययं भूरिधनं प्रसिद्धं

नितान्तमान्यं प्रभुतासमेतम् ॥ ८८ ॥

ABCDFILORSW

84c °प्रणवं CFR, °प्रणये S, °प्रणतं L    84d जत° W °वाद° D    85b-89a om. D    85c °सर्वशेषं BCILW    86a °मरेज्य° W, °सुरेज्या° F    86b संजनयंति मर्त्यं om. C    86c प्रसज्यं BLW, प्रसत्यं FRS, प्रसज्जं AO, न सज्जं I    87b संजनयंति मर्त्यं om. C    88c-89b om. W    88c °व्यथं S

भौमज्ञशुक्रार्कसुताः सुखस्था
नरं प्रकुर्वन्ति विधिज्ञमाढ्यम् ।
शास्त्रार्जने तत्परमानसं च
प्रज्ञाधिकं कामदमोजसाढ्यम् ॥ ८९ ॥

भौमामरेज्याभृगुजार्कपुत्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
अध्यात्मविद्यानिरतं विपापं
यथार्थवाक्यं विदितं नृपाणाम् ॥ ९० ॥

सौम्यामरेज्याभृगुजार्कपुत्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
वीणात्मकं भूरिदयासमेतं
परोपकारैः क्रमलंघ्यवीर्यम् ॥ ९१ ॥

एवं चतुर्विकल्पाः ।

रवीन्दुभौमज्ञसुरेन्द्रपूज्याः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
गुह्यस्थरोगोपहतं कृतघ्नं
लम्बोदरं श्मश्रुविवर्जितं च ॥ ९२ ॥

रवीन्दुभौमज्ञसिताः सुखस्था
नरं प्रकुर्वन्ति विनष्टधर्मम् ।
कामप्रसक्तं प्रचुरार्तिभाजं
विश्वासहीनं चपलस्वभावम् ॥ ९३ ॥

ABCDFILORSW

89a °र्कसुताः—89d प्रज्ञाधि° om. I   89b विधिश्लं DF   89d °जमाढ्यं CO, °जनाढ्यं L, °जमायं ABW, °घसाढ्यं I   90a °मरेज्य° SW   90b संजनयंति मर्त्यं om. C   90c °निरजं L   91a °मरेज्य° SW   91b संजनयंति मर्त्यं om. C   91c वाणा° FRS   °दयं समृद्धं DFRS   91d °पकारे W क्रम° L, छम° W, भ्रम° C   °लब्ध° DF   col.: इति चतुर्विकल्पना संपूर्ण W   92b संजनयंति मर्त्यं om. C   92c गुह्योत्थ° DFR, गुह्यात्थ° S   93a=94a in S   93d °हीनं CI   चफल° DS, विपुल° F

रवीन्दुभौमज्ञदिनेशपुत्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
प्रभूततृष्णं निजकार्यरक्तं
दाक्षिण्यहीनं निधनं सदैव ॥ ९४ ॥

रवीन्दुभौमामरपूज्यशुक्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
निस्त्रिंशचेष्टं शुचिगन्धिवक्त्रं
कृपाविहीनं हतपौरुषं च ॥ ९५ ॥

रवीन्दुभौमामरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
निस्त्रिंशचेष्टं कपटानुरक्तं
विहीनकोशं जनवर्जितं च ॥ ९६ ॥

रवीन्दुभौमासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
सदा श्रमार्तं प्रविमुक्तधर्मं
विहीनवर्णं परवंचकं च ॥ ९७ ॥

रवीन्दुसौम्यामरपूज्यशुक्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
सुदीर्घसूत्रं बहुशत्रुपक्षं
प्रक्षीणकोशं विगतप्रभावम् ॥ ९८ ॥

ABCDFILORSW

94b संजनयंति मर्त्यं om. CI 94c °तृष्णा LW, °तृक्तां D, °भक्तां F °दक्षं S 95a °भौमसुर° F 95b संजनयंति मर्त्यं om. C 95c निस्तृंश° ABC-ORS, निस्त्रंश° FL, निस्त्रंस° D, निस्तंश° I, नृशंस° W सुवि° FILORS, च सु° C °गंध° FRS 95d क्रिया° DF, त्रपा° LS हत BCLSW, हिन° DR, हित F 96b संजनयंति मर्त्यं om. C 96c-97b om. A 96c निस्तृंश° BCR, निसृंश F, निस्त्रंश° DIL, निस्तंस° W 96d °वल्लभं L, °हर्षितं DFRS 97b संजनयंति मर्त्यं om. C 97c श्रयार्तं C 97d °वर्ष्यं DF °वर्धकं W, °बंधकं BDLR, बंधुकं F 98b संजनयंति मर्त्यं om. C

रवीन्दुसौम्यामरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
प्रभूतदोषं क्षयरोगभाजं
विनष्टदीप्तिं गतमित्रवर्गम् ॥ ९९ ॥

रवीन्दुसौम्यासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
नानारिपुं प्राप्तमहार्थनाशं
विद्वेषरक्तं च दयाविहीनम् ॥ १०० ॥

रवीन्दुजीवासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
धनेन हीनं सुतदुःखभाजं
नितान्तनीचं चटुलस्वभावम् ॥ १०१ ॥

सूर्यारसौम्यामरपूज्यशुक्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
प्रभूतरोगं नृपपीडिताङ्गं
सदार्तिभाजं व्यसनैः समेतम् ॥ १०२ ॥

सूर्यारसौम्यामरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
दुःखाधिकं भोगविवर्जिताङ्गं
पैशुन्यरक्तं दृढदूषणं च ॥ १०३ ॥

॥ १०४ ॥

---

ABCDFILORS

99a = 100a in CILW 99b संजनयंति मर्त्यं om. C 100 om. W 100a = 99a in L 100b संजनयंति मर्त्यं om. C 101a °पूजि° W 101b संजनयंति मर्त्यं om. C 101c नयेन C 101d चतुल° C, चदुल° F, बहल° W 102a = 103a in DF 102b संजनयंति मर्त्यं om. C 102c °पूजितांगं L 102d °भाज्य D, °लाभं W 103b संजनयंति मर्त्यं om. C 103d रक्तं om. D order in D: 103c, 109c-110b, 103d-109b, 110c-d 104 om. cod.

सूर्यारजीवासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
प्रियैर्विहीनं नियमैः समेतं
कुकर्मरक्तं सततं दरिद्रम् ॥ १०५ ॥

सूर्यज्ञजीवासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
स्वधर्महीनं परधर्मरक्तं
चरित्रवित्तेन विवर्जितं च ॥ १०६ ॥

चन्द्रारसौम्यामरपूज्यशुक्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
सुखाधिकं भूरिधनं प्रगल्भं
विद्याविहीनं जनवल्लभं च ॥ १०७ ॥

चन्द्रारसौम्यामरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
दीक्षाव्रतस्नानपरं प्रधानं
महागुणं नीतिविशारदं च ॥ १०८ ॥

चन्द्रारसौम्यासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
सुतेजसाढ्यं श्रुतमानयुक्तं
क्षमान्वितं देवगुरुप्रसक्तम् ॥ १०९ ॥

---

ABCDFILORSW

105b संजनयंति मर्त्यं om. C   105c-106d om. W, which has :
विप्रैः विहीनं जनवल्लभं च
धनं धान्यं बहुकीर्तियुक्तं

105c °रूपेतं L, प्रयुक्तं DFRS   105d कुधर्म° F   106b संजनयंति मर्त्यं om. C   106c-107b om. D   106d °चित्रेन CI, °वित्रेण L   107a = 108a in S   107b संजनयंति मर्त्यं om. C   108b संजनयंति मर्त्यं om. C   108c-109b om. B   108c दीर्घा° O   109a = 108a in ACFLOW   109b संजनयंति मर्त्यं om. C   109c सुतेजलाढ्यं I

चन्द्रारजीवासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
कृपाधिकं शास्त्ररतं सुधन्यं
वैडूर्यमुक्तामणिहेमभाजम् ॥ ११० ॥

चन्द्रज्ञजीवासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
नरेन्द्रपूज्यं विविधाप्तसौख्यं
क्षमान्वितं शास्त्रविशारदं च ॥ १११ ॥

भौमज्ञजीवासुरपूज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
श्रेष्ठानुयातं गुरुतासमेतं
शूरं कविं बान्धवसंमतं च ॥ ११२ ॥

एवं पंचविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
कुचैलमस्निग्धगुरुप्रकोपं
कन्याजनित्रं सततं च दीनम् ॥ ११३ ॥

रवीन्दुभौमज्ञसुरेज्यसौराः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
भूरिश्रमं पापमतिं कृतघ्नं
व्यपेतलज्जं जडतात्मकं च ॥ ११४ ॥

ABCDFILORSW

110b संजनयंति मर्त्यं om. C 110c °धिकं—111b om. B 110c कृपारतं शास्त्रगुणं C शास्त्ररजं I 111a = 110a in LW 111b-112a om. S 111b संजनयंति मर्त्यं om. C 112b संजनयंति मर्त्यं om. C 112c °पानं LW, °वातं D 112d सूरिं L, भूरिं D col.: इति श्रीवृद्धयवने पंचविधिकल्पना संपूर्ण W 113b संजनयंति मर्त्यं om. C 114b संजनयंति मर्त्यं om. C 114d च जडात्मकं च DRS

रवीन्दुभौमज्ञसितार्कपुत्राः
सुखस्थिताः संजनयन्ति मर्त्यम् ।
प्रियामिषं कुत्सितकर्मरक्तं
खलात्मकं शास्त्रपराङ्मुखं च ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
सुखाश्रिताः सत्यविहीनमार्तं
प्रभूतशत्रुं मतिवर्जितं च ॥ ११६ ॥

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
वृथाटनं क्लेशयुतं सुमूढं
कुकर्मसेवार्जितभूरिदुःखम् ॥ ११७ ॥

सूर्यारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
कथाविहीनं बहुदुष्टरक्तं
क्षमाविहीनं श्रुतवर्जितं च ॥ ११८ ॥

चन्द्रारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
बहुश्रुतं तीर्थरतं क्षमाढ्यं
गुणाधिकं सत्यदयासमेतम् ॥ ११९ ॥

एवं षड्ग्रहकल्पाः ॥

---

ABCDFILORSW

115b संजनयंति मर्त्यं om. C  115d स्वल्पात्मकं DF  116a °शुक्राः FILR  116c °मार्त्यं I, मार्क्षं DF  117a °शुक्राः FR  117c सुमूटं F, सुमूदं L, मूढं S  118a °शुक्राः FR  118c-119b om. D  118c यथा° I  118d श्रुति° OW, श्रित्य° B  119a °शुक्राः FIR

रवीन्दुभौमज्ञसुरेज्यशुक-
शनैश्चराः संजनयन्ति मर्त्यम् ।
सुसत्यमिष्टान्नसुसेवितारं
भूपालमार्यं गुरुवत्सलं च ॥ १२० ॥

एवं सप्तविकल्पाः ॥

इति श्रीवृद्धयवने सुखाश्रययोगाध्यायः ॥

ABCDFILORSW

120a °शुक्राः FR  120d °मार्यं I, मार्ज्यं D  col. om. BW chapter col. श्री° om. DFRS

# चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

चन्द्रान्वितस्तीक्ष्णकरः सुतस्थो
नरं प्रसूते विगताभिमानम् ।
कुभोज्यरक्तं च कुपुत्रभाजं
सदातिकष्टं कृतकस्वभावम् ॥ १ ॥

भौमान्वितस्तीक्ष्णकरः सुतस्थो
नरं प्रसूते बहुपुत्रदारम् ।
गम्यं रिपूणां सुतरां नृशंसं
भयान्वितं पापरतं सदैव ॥ २ ॥

सौम्यान्वितस्तीक्ष्णकरः सुतस्थो
नरं प्रसूते बहुपापरक्तम् ।
दोषैः समस्तैः सहितं नृशंसं
स्वदारसन्त्यक्तमनर्थयुक्तम् ॥ ३ ॥

जीवान्वितस्तीक्ष्णकरः सुतस्थो
नरं प्रसूते स्तुतिवाक्यहीनम् ।
परान्नपुष्टं परदाररक्तं
सुनिष्ठुराङ्गं गुणवर्जितं च ॥ ४ ॥

शुक्रान्वितस्तीक्ष्णकरः सुतस्थो
नरं प्रसूते निजबन्धुहीनम् ।
कुकर्मसेवानुरतं हतस्वं
मायाविनं नीतिसमृद्धियुक्तम् ॥ ५ ॥

---

ABCDFILORSW

1b विभता° D, विभुता° F   1c कुभोग° S, कुंभो अ° DFR   बहुपुत्र° W   1d निकष्टं O, निकृष्टं S   विकृत° C   °स्वभावं: W   2b-3a om. D   2b °पाप° S °युक्तं F   2d पापमतिं S   3a सौम्याश्रित° OW, सौमाश्रित° ABC   3b-5a om. B   3b-4a om. I   3b-c=2b-c in C   3c समेतं W   3d °मनार्य° W   5a सुग्वस्थो F   5c हृतस्वं W   5d नाति° FRS

सौरान्वितस्तीक्ष्णकरः सुतस्थो
नरं प्रसूते गतबुद्धिसत्यम् ।
व्ययान्वितं वैरिजितं कृशार्तं
दुर्मेधसं शास्त्रपराङ्मुखं च ॥ ६ ॥

चन्द्रान्वितो भूतनयः सुतस्थो
नरं प्रसूते बहुसंख्ययुद्धैः ।
सम्प्राप्तवित्तं द्विजदेवतानां
साधुप्रदत्तं श्रुतलालसं च ॥ ७ ॥

चन्द्रान्वितः सोमसुतः सुतस्थो
नरं प्रसूते गरिमासमेतम् ।
बह्वन्नपानं बहुमित्रलाभैः
समन्वितं देवगुरुप्रसक्तम् ॥ ८ ॥

चन्द्रान्वितो देवगुरुः सुतस्थो
नरं प्रसूते क्षतशत्रुपक्षम् ।
निसर्गसौख्यं प्रभुतासमेतं
सदाजयं शास्त्रविचक्षणं च ॥ ९ ॥

चन्द्रान्वितो दैत्यगुरुः सुतस्थो
नरं प्रसूते निजबुद्धिभाजम् ।
सन्तुष्टचित्तं बहुसौख्ययुक्तं
कन्याप्रियं स्त्रीदयितं सदैव ॥ १० ॥

ABCDFILORSW

6b °सत्वं S 6c वधा° RS, विधा° F वैरिजनं D शठार्तं F 6d दुर्गंधसं D 7d शृत° CW, सुत° S 8c बध्वा° I, वक्रा° FRS 10b निधि° FRS °बंधुभावं B

चन्द्रान्वितः सूर्यसुतः सुतस्थो
नरं प्रसूते सुतसौख्यहीनम् ।
प्रपंचशीलं कुधिया समेतं
निरर्गलं शास्त्रबहिःकृत च ॥ ११ ॥

भौमान्वितः सोमसुतः सुतस्थो
नरं प्रसूते व्यथितस्वभावम् ।
विवर्जितं मानधनान्नपुत्रैः
कुसङ्गसंसक्तमनेकदुःखम् ॥ १२ ॥

भौमान्वितो देवगुरुः सुतस्थो
नरं प्रसूते विनयप्रमुक्तम् ।
कृषिश्रमं नष्टधनं सुतीव्रं
विदेशरक्तं कृतकं कुपुत्रम् ॥ १३ ॥

भौमान्वितो दैत्यगुरुः सुतस्थो
नरं प्रसूते बहुवैरभाजम् ।
पराजितं नीचजनेन नित्यं
श्रमान्वितं ब्राह्मणभक्तिहीनम् ॥ १४ ॥

भौमान्वितः सूर्यसुतः सुतस्थो
नरं प्रसूते क्षतजार्दिताङ्गम् ।
स्त्रीनिर्जितं दुष्टमतिं कृतघ्नं
क्षमाविहीनं परपैशुनेप्सुम् ॥ १५ ॥

---

ABCDFILORSW

11b सुत° om. W 11d °बहिष्कृतं W 12d °संसक्ति° B, °मक्ति° W, °संसक्त° F 13b-14a om. BCDLW, add. in marg. C 13b °प्रयुक्तं CFIOR, °प्रसक्तं S 13c °श्रमान्नष्ट° ACIORS, °श्रमान्नष्ट° F 14b °वैरि° C order in S: 14c, 14d श्रमा°, 15d °विहीनं—16a, 14d °न्वितं—15d क्षमा°, 16a °गुरुः 14d भूमा° F °भक्त° C 15c कृतज्ञं C 15d °पैशुनेशुं BLW, °पैशनेषुं F, °पैशनेक्षुं S

सौम्यान्वितो देवगुरुः सुतस्थो
नरं प्रसूते शुभपुत्रभाजम् ।
जयैषिणं स्त्रीदयितं मनोज्ञं
प्रधानकर्माणमलोलुपं च ॥ १६ ॥

सौम्यान्वितो दैत्यगुरुः सुतस्थो
नरं प्रसूते शुभवाक्यरक्तम् ।
प्रबुद्धमत्यद्भुतकर्मरक्तं
द्विजातिभक्तं निपुणं प्रगल्भम् ॥ १७ ॥

सौम्यान्वितः सूर्यसुतः सुतस्थः
षण्ढं प्रसूते विकृतं मनुष्यम् ।
सुखैर्विहीनं विधनं कुरूपं
निन्द्यं सतामुच्छ्रयवर्जितं च ॥ १८ ॥

जीवान्वितो दैत्यगुरुः सुतस्थः
कुपत्रकन्याजनकं प्रसूते ।
महाधनं वंशविवृद्धिदक्षं
पापैर्विमुक्तं वनितास्वभीष्टम् ॥ १९ ॥

ABCDFILORSW

before 16 W adds : भौमान्वितो दैत्यगुरुः सुतस्थो ( 14a )
नरं सुकीर्तिं बहुलप्रतापं
ज्ञानं कविज्ञालिप्यलेखनादि-
मुतादिसौख्यं मनसि प्रकोपं

16b-17a om. A 16c जयीषिणं FR 17c प्रबुद्धि° FOW, प्राबुद्धि° RS, प्रभूद्धि° BCIL, प्रवुद्धि° A, प्रमृद्धि° D 17d द्विजातिभक्तं om. A, द्विजातिरक्तं L 18a सुखस्थः BIO 18b षंडं F, खंढं ABCO, खंडं DILR 18c विधिनं C 18d नियं F, विद्यं I सदा° ILOW °मुत्थय° B 19c °रक्तं FRS

जीवान्वितः सूर्यसुतः सुतस्थः
　　करोति मर्त्यं बहुवंचकं च ।
प्रमाददुष्टाशयपानरक्तं
　　कुचैलमश्लाध्यमधर्मिणं च ॥ २० ॥

शुक्रान्वितः सूर्यसुतः सुतस्थो
　　बन्ध्यांजनित्रं मनुजं प्रसूते ।
स्त्रीचंचलं पापकथानुरक्तं
　　कृतघ्नमश्लाध्यतमं विरूपम् ॥ २१ ॥

एवं द्विविकल्पाः ॥

सूर्येन्दुभौमाः सुतगा मनुष्यं
　　कुर्वन्ति कीर्त्या सहितं सदैव ।
पुण्येन मुक्तं कृतकस्वभावं
　　सम्पीडिताङ्गं क्षतजैर्विकारैः ॥ २२ ॥

सूर्येन्दुसौम्याः सुतगा मनुष्यं
　　कुर्वन्ति पापप्रचुरं मनुष्यम् ।
पानैर्विमुक्तं सुतसौख्यहीनं
　　स्त्रीनिर्जितं चंचलमानसं च ॥ २३ ॥

सूर्येन्दुजीवाः सुतगा मनुष्यं
　　कुर्वन्ति मायाकपटैः समेतम् ।
बह्वाशिनं निर्घृणकर्मरक्तं
　　जिह्मस्वभावं कृतशास्त्रहीनम् ॥ २४ ॥

---

ABCDFILORSW

20b बहु° om. O　°त्रंतजं FRS　20c प्रमाद° L °पाप° CD　21b °जनेन W, °त्मनित्रं B　21c °वंचकं LW　21d °मम्लाध्य° O, °मलार्घ्य° A　col. इति श्रीवृद्धयवने एवं द्विविकल्पनाः W　22c युक्तं W　22d कृतजै° DRS　23a सुभगा I　23b °प्रवरं DRS, °प्रपरं F　23c यानै° ILW　23d °मानवं F　24b °कपटं W　24d लिप्त° W, जल° I

सूर्येन्दुशुक्राः सुतगा मनुष्यं
　　सदा प्रकुर्वन्ति गुणैर्विहीनम् ।
परस्वरक्तं बहुशत्रुपक्षं
　　क्षमादयाभ्यां परिवर्जितं च ॥ २५ ॥

सूर्येन्दुसौराः सुतगा मनुष्यं
　　कुर्वन्ति विड्व्याधिभयैर्विहीनम् ।
प्रपंचशल्यं व्यसनैरुपेतं
　　सुकातरं बन्धुपराङ्मुखं च ॥ २६ ॥

सूर्यारसौम्याः सुतगा मनुष्यं
　　कुर्वन्ति दुष्टं व्रणपीडितं च ।
निस्तेजसं दीनतरं निराशं
　　सदा विमुक्तं परतर्ककं च ॥ २७ ॥

सूर्यारजीवाः सुतगा मनुष्यं
　　कुर्वन्ति हीनानुगतं नृशंसम् ।
व्यङ्गं निराशं हतदानसक्तं
　　विरक्तदारं हतपौरुषं च ॥ २८ ॥

सूर्यारशुक्राः सुतगा मनुष्यं
　　कुर्वन्ति सर्वाशुभसंघभाजम् ।
महार्तिभाजं जनतानिरस्तं
　　निराभिभूतं कठिनस्वभावम् ॥ २९ ॥

---

ABCDFILORSW

25a शुभगा D　25b सेवा D　25d °दयाक्षा DF, °परं च C　26b विट्व्याधि° ABCLORSW, षट्व्याधि° DF　26d सुकांतरिं A, सुकांतसं L　27b °पीडितांगं W　27d °तर्कुकं ADOR　28a सुभगा D　28b मेहनिगतं F
29c °तानुरस्तं I, °तादिनेरत्र W

सूर्यारसौरा सुतगा मनुष्यं
कुर्वन्ति पापात्मजकन्यकाढ्यम् ।
विरक्तभार्यं श्रुतिशास्त्रहीनं
प्रद्वेषकं साधुजनस्य नित्यम् ॥ ३० ॥

सूर्यज्ञजीवाः सुतगा मनुष्यं
कुर्वन्ति पापात्मकमुग्रकोपम् ।
क्लीबं नृशंसं परदाररक्तं
सुदुःखितं दुःखितलोकमित्रम् ॥ ३१ ॥

सूर्यज्ञशुक्राः सुतगा मनुष्यं
कुर्वन्ति वन्ध्याजनकं कृतघ्नम् ।
भयाधिकं क्लेशयुतं सुपापं
विवर्जितं भोगधनाशनैश्च ॥ ३२ ॥

सूर्यज्ञसौराः सुतगा मनुष्यं
कुर्वन्ति सन्तानधनैर्विहीनम् ।
लम्बोदरं दीर्घकुकायसंघं
सुदीर्घजंघं पदवर्जितं च ॥ ३३ ॥

सूर्यामरेज्याभृगुजाः सुतस्था
नरं प्रकुर्वन्ति विधर्मरक्तम् ।
स्वधर्ममुक्तं कुहकानुरक्तं
मायेन्द्रजालादिशतैर्विवृद्धम् ॥ ३४ ॥

ABCDFILORSW

30a = 29a in DF 30b पापात्मकजेन्य° DF 30c °भार्या ABCIO, °भाजा W, °भाजं DFLRS श्रुत° FRS 31a = 28a in ABCD (शुभगा in D) IL 31b वंध्यात्मक° F 32b वंधा° I, मध्या° L 32c सपापं I 33a शुभगा D 33b °यनै° I 33c °कुकायकाढ्यं S, °कुकार्यकाद्य F, °कुकार्यधं R, °कुकार्यमुधं D 34a °मरेज्य° SW 34b °युक्तं W 34c स्वधर्ममुक्तं om. W °युक्तं ABCDILO कलहा° C 34d मायेंद्रजाना° R, मायेंद्रजना° F, मायेंजना° D, मायेंद्रजाता° S °मतै° ABCIOW, °मरै° DFRS °विवृद्धि C, °व वृद्धं DR

सूर्यामरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति सदा निरस्तम् ।
स्वबान्धवैर्वित्तनिपीडिताङ्गं
युद्धानुरक्तं च भयेन हीनम् ॥ ३५ ॥

सूर्यासुरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति निरस्तधैर्यम् ।
दुष्टप्रभावं च धिया विहीनं
विदेशसेवानुरतं सदैव ॥ ३६ ॥

चन्द्रारसौम्याः सुतगा मनुष्यं
कुर्वन्ति दीनं गतपौरुषं च ।
विधर्मिणं द्यूतनिषेवणं च
प्रतप्तकन्दर्पधिया समेतम् ॥ ३७ ॥

चन्द्रारजीवाः सुतगा मनुष्यं
कुर्वन्ति निःश्रीकमुरुप्रकोपम् ।
असह्ययं बन्धवधानुरक्तं
प्रज्ञाविहीनं बहुगर्वितं च ॥ ३८ ॥

चन्द्रारशुक्राः सुतगा मनुष्यं
कुर्वन्ति हीनानुगतं कुरूपम् ।
वाताधिकं कीर्तिविवर्जिताङ्गं
गतप्रतापान्मनुजैर्निरस्तम् ॥ ३९ ॥

---

ABCDFILORSW

35b प्रकुर्वंति सदा om. O सदा om. I 35c वृत्ति° L 35d च ]वि° F, तु D 36c °स्वभात्रं DFS 37a सुभगा D 37c °निषेविणं L च om. W 38b नःश्रीकं L, निश्रीक° W, भीः श्रीक° R, भीःश्राक° F, भीश्रीक° S 38b °कमु°—39a सुत° om. I 38c वंद° F, वेध° W 39d °प्रनापं W °र्निरक्तं R, °निरुक्तं S, °विरक्तं F

चन्द्रारसौराः सुतगा मनुष्यं
कुर्वन्ति सत्यार्थसुखैर्विहीनम् ।
प्रभूतनिद्रं च विरूपगात्रं
खलस्वभावं भयवर्जितं च ॥ ४० ॥

चन्द्रज्ञजीवाः सुतगा मनुष्यं
कुर्वन्ति तीर्थप्रवणं सुबुद्धिम् ।
प्रभूतविज्ञाप्तिसमृद्धधर्मं
मातापितृभ्यां दृढभक्तिभाजम् ॥ ४१ ॥

चन्द्रज्ञशुक्राः सुतगा मनुष्यं
कुर्वन्ति पीनाङ्गमलौल्यभाजम् ।
तपोभिरक्तं बहुतीर्थसङ्गा–
द्विमुक्तपापं प्रथितप्रभावम् ॥ ४२ ॥

चन्द्रज्ञसौराः सुतगा मनुष्यं
कुर्वन्ति धन्यं यशसा समेतम् ।
स्थिरस्वभावं व्रतधर्मयुक्तं
कलाधिकं कामविवर्जितं च ॥ ४३ ॥

चन्द्रामरेज्याभृगुजाः सुतस्था
नरं प्रकुर्वन्ति सुवक्त्रकण्ठम् ।
लम्बालकं धर्मपरं प्रधानं
हतारिपक्षं प्रियदर्शनं च ॥ ४४ ॥

ABCDFILORSW

40a सुभगा D 40b °युतं° ABCILOW 40c °निद्रा BCFRW च]-व° BLW 41b °प्रणवं DFOSW 41c °विज्ञप्त° ABCILOW 42b पानांग° DFO 43b धान्यं C 43c व्रतकर्म° D 44a °मरेज्य° SW 44c लंबालकात् DRS, लंबालका F

चन्द्रामरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति मतिप्रधानम् ।
ख्यातं कवीन्द्रं प्रवरं हतारिं
निसर्गसौख्यं सुदृशं सुवक्त्रम् ॥ ४५ ॥

चन्द्रामरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति गुणज्ञभाजम् ।
ज्योतिर्विदं रागविवर्जिताङ्गं
मदान्वितं धर्मकथानुरक्तम् ॥ ४६ ॥

भौमज्ञजीवाः सुतगा मनुष्यं
कुर्वन्ति धर्मध्वजमिष्टसत्यम् ।
सत्पात्ररक्तं बहुबुद्धिभाजं
सलज्जमुत्साहिनमेकवीरम् ॥ ४७ ॥

भौमज्ञशुक्राः सुतगा मनुष्यं
कुर्वन्ति सौभाग्ययुतं सुधर्मम् ।
द्विजप्रियं साधुकथानुरक्तं
सुवर्णवस्त्राभरणैः समेतम् ॥ ४८ ॥

भौमज्ञसौराः सुतगा मनुष्यं
कुर्वन्ति षण्ढं कुकलत्रभाजम् ।
दयाविहीनं त्वथ निर्गुणं च
श्रमार्तदेहं निजवर्गमुक्तम् ॥ ४९ ॥

ABCDFILORSW

45b-46a om. S 45b मति° om. F 45d निमग्न° DFR, मग्ना° BLW सुदृशं F, सुदशं I, सुदृढशं W, मृदमृदसं D 46b गुणाज्ञ° I °भावं DF 46c °विंद्दं DFLRW रागविवर्जिता° om. L, रागविवार्जितं C 46d मंदा° ABC-DFW, मदा° I 47a सुभगा C 47b °सभ्यं S, सत्यं F 47c सत्यानु° F 47d °मुत्साहन° BL 48a सौम° I 48d सुवर्ण° DF 49b षंढं C, खंढं DFLRS 49c दया° D 49d त्रपा° W, त्रिया° L °युक्त LW

भौमामरेज्याभृगुजाः सुतस्था
नरं प्रकुर्वन्ति धिया समेतम् ।
सुसूक्ष्मवस्त्राभरणैः समेतं
दृढप्रतिज्ञं परमर्दनं च ॥ ५० ॥

भौमामरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति दयासमेतम् ।
वाणिज्यविद्यागमसाधुयुक्तं
क्षमान्वितं देवगुरुप्रभक्तम् ॥ ५१ ॥

भौमासुरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति कुबुद्धिभाजम् ।
लज्जाविहीनं नयवर्जिताङ्गं
विमुक्तदारं बहुगर्वितं च ॥ ५२ ॥

सौम्यामरेज्याभृगुजाः सुतस्था
नरं प्रकुर्वन्ति सुरत्नभाजम् ।
विप्रानुरक्तं बहुशत्रुहीनं
विख्यातमुर्वीतलमण्डनं च ॥ ५३ ॥

सौम्यामरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति हितं गुरूणाम् ।
प्रभूतविद्यार्जनतत्परं च
कुलप्रधानं दृढसौहृदं च ॥ ५४ ॥

ABCDFILORSW

50 om. BLW 50a °मरेज्य° S 50b-51a om. D 51a = 52a in F 52a = 51a in ABCILOW 52b सुजंतृहीनं F 53 om. BLW 53a °मरेज्य° S 53b सुरसु° AIO, सुरेसु° C, सुरलाभ° D, सुलाभ° F 53c °शत्रुदानं FRS 53d °मंडलं D, भूषणं S 54c अभूत° W

सौम्यासुरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति विहीनपुत्रम् ।
स्थूलं पृथुग्रीवभुजं कुकर्णं
द्यूतानुरक्तं परवंचकं च ॥ ५५ ॥

जीवासुरेज्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति बहुप्रशस्तम् ।
धान्यान्वितं वासकरं परेषां
शस्त्रार्जने तत्परमानसं च ॥ ५६ ॥

एवं त्रिविकल्पाः ॥

रवीन्दुभौमेन्दुसुताः सुतस्था
नरं प्रकुर्वन्ति सुदूषणाढ्यम् ।
गुरुप्रकोपं नियमैर्विमुक्तं
व्यपेतलज्जं विकृतस्वभावम् ॥ ५७ ॥

रवीन्दुभौमामरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
प्रलम्बलिङ्गं सुव्रणोरुयुक्तं
विहीनवित्तं परदारलुब्धम् ॥ ५८ ॥

ABCDFILORSW

55a = 54a in CLW 55b-56a om. D 55c °ग्रीवमृजुं L, °ग्रीवपूजं B कुकर्मं F 55d °वंचनैकं ABFIORSW, °वंचकैकं L 56c धन्या° O, ध्यान्या° L 56d शास्त्रा° FSW col. इति श्रीवृद्धयवने त्रिविकल्पना संपूर्णा W 57c °विहीनं W 57d ध्यपेत° FS °लक्ष्मं I 58b सुख° C 58d-59c om. BLW 58d °लब्धं F

रवीन्दुभौमासुरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
गतघृणं सत्ययशोविहीनं
विदेशरक्तं गुणवर्जितं च ॥ ५९ ॥

रवीन्दुभौमार्कसुताः सुतस्था
नरं प्रकुर्वन्ति कृशं कृतघ्नम् ।
हर्षाविकारेण निपीडिताङ्गं
सुदीनवृत्तिं गतबन्धुवर्गम् ॥ ६० ॥

रवीन्दुसौम्यामरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
हर्षाधिकं कामनिपीडिताङ्गं
सदा कुलीनं नयवर्जितं च ॥ ६१ ॥

रवीन्दुसौम्यासुरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
पैशुन्यरक्तं निजधर्महीनं
प्रद्वेषकं साधुजनस्य नित्यम् ॥ ६२ ॥

रवीन्दुसौम्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति दयाविहीनम् ।
विनष्टबुद्धिं विगताभिमानं
भयान्वितं पापसमन्वितं च ॥ ६३ ॥

ABCDFILORSW

59b सुख° C मर्त्यं om. C after 59 W adds;
रवींदुभौमा असुरेंद्रपूज्याः
नरं प्रकुर्वंति पुरुषप्रधानं
दाता दयालुं गुणवान् कृतज्ञः
धर्मकृतं बांधववत्सलं च

60a-b = 62a-b in L 60c = 61c in L 61a = 62a in ABCILOW 61b संजनयंति मर्त्यं om. C 61d नव° C, भय° L, यव° I 62a = 61a in DF 62b संजनयंति मर्त्यं om. C 62c निजबंधु° L 62d-63b om. ADS

रवीन्दुजीवासुरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
रथार्थसक्तं विनयेन हीनं
विलेपितं स्नानविलेपनाद्यैः ॥ ६४ ॥

रवीन्दुजीवार्कसुताः सुतस्था
नरं प्रकुर्वन्ति चलस्वभावम् ।
सुलौल्ययुक्तं घृणया विहीनं
निसर्गदुष्टं प्रियसाहसं च ॥ ६५ ॥

रवीन्दुशुक्रार्कसुताः सुतस्था
नरं प्रकुर्वन्ति सुखैः प्रयुक्तम् ।
वृथाश्रमं मित्रजनैर्विहीनं
सन्तानहीनं रुषितं सदैव ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
ओजोविहीनं सुविरुद्धचेष्टं
सुनीचकर्माणमुरुप्रकोपम् ॥ ६७ ॥

सूर्यारसौम्यासुरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
विधर्मिणं नीतिमतिप्रहीणं
जिह्मस्वभावं विकृतानुरक्तम् ॥ ६८ ॥

---

ABCDFILORSW

64a °पूजितास्याः W 64b संजनयंति मर्त्यं om. C 64d त्रिलेपनं DFRS स्थान° I °लेपनाद्यैः CFRS 65a सुखस्था I 65b बजस्वभावं I °प्रभावं D 65c सुलौक्य° DRS 66b समेतं S 66d संताप° ACIO रुषतं O, ऋषितं R. धृषितं S, सुषितं F, क्षपितं D 67b संजनयंति मर्त्यं om. C 67 om. DF 68a = 67a in L 68b संजनयंति मर्त्यं om. C

सूर्यारसौम्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति विहीनसत्यम् ।
प्रमोषकं कामकथानुरक्तं
प्रेष्यं परैर्निर्जितपौरुषं च ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
बहुक्षतार्तं प्रविनष्टधर्मं
कुशास्त्रसेवानिरतं सदैव ॥ ७० ॥

सूर्यारजीवार्कसुताः सुतस्था
नरं प्रकुर्वन्ति सुतीव्रभावम् ।
महारुजार्तं कृतकस्वभावं
विहीनवर्णं श्रुतवर्जितं च ॥ ७१ ॥

सूर्यारशुक्रार्कसुताः सुतस्था
नरं प्रकुर्वन्ति विहीनवाहम् ।
चतुष्पदाच्छादनभोजनार्थै-
र्विवर्जितं च व्यसनान्वितं च ॥ ७२ ॥

सूर्यज्ञजीवासुरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
कुकीर्तिभाजं विगतप्रभावं
नीचार्जने तत्परमानसं च ॥ ७३ ॥

---

ABCDFILORSW

69c प्रमोदकं W, प्रपोषकं L 70b मर्त्यं om. C 70c बहुक्ष° ABLO, बहुन्त° W, बंधुक्ष° C °तार्थं L °धर्मं om. W 70d सुशास्त्र° W 71b °भार्ज O 72b °वार्चं L, °चारं S 72c °नार्थं S 72d च[1] om. F व्यसनसमन्वितं F, व्यसमन्वितं RS, व्यसनाशितं W च[2] om. W 73d नीचार्जितं F, नीचार्जे S, नीचार्ये D

सूर्यज्ञजीवार्कसुताः सुतस्था
नरं प्रकुर्वन्ति पराभिभूतम् ।
कुचैलमाशुद्धमलीकभाजं
दारिद्र्यदुःखार्दितमेव नित्यम् ॥ ७४ ॥

सूर्यज्ञशुक्रार्कसुताः सुतस्था
नरं प्रकुर्वन्ति कुवर्गभाजम् ।
कुस्त्रीकुसेवासु रतं विसंज्ञं
सुनिर्दयं विप्रपराङ्मुखं च ॥ ७५ ॥

सूर्यामरेज्याभृगुजार्कपुत्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
कुपुण्यरक्तं कुमतिप्रसक्तं
कुकाव्यसंयुक्तमपक्षपातम् ॥ ७६ ॥

चन्द्रारसौम्यामरपूजिताज्ञाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
सौभाग्यविद्याविनयैः समेतं
सत्पात्ररक्तं सुविचक्षणं च ॥ ७७ ॥

चन्द्रारसौम्यासुरपूजिताज्ञाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
विवेकविद्यागमशास्त्ररक्तं
क्षतारिपक्षं दृढसौहृदं च ॥ ७८ ॥

**ABCDFILORSW**

74c कुचील° D °माशुद्धि° C °मनीक° BL, °मर्तिकु° W, °मकील° DFRS °भाजं DF 75b कुन्जभाजं S 76a °मरेज्य° LS 76b-77a in marg. R 76b सुख° B 76c कुपण्य° DRS, कुपराप° F मतिप्रसक्तं D, च कर्मरक्तं F 76d कुकान्य° DFS 77a = 78a in F 77b संजनयंति मर्त्यं om. C 78d क्षतारि° B, सदारि° L

चन्द्रारसौम्यार्कसुताः सुतस्था
नरं प्रकुर्वन्ति विनीतवेषम् ।
स्वधर्मसम्पोषणमुग्रवीर्यं
दानप्रधानं बहुगौरवं च ॥ ७९ ॥

चन्द्रारजीवासुरपूजिताख्याः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
बहुश्रुतं त्राणकरं द्विजानां
गुणानुरक्तं प्रथिताभिमानम् ॥ ८० ॥

चन्द्रारजीवार्कसुताः सुतस्था
नरं प्रकुर्वन्ति सुशीलताढ्यम् ।
नानार्थशास्त्रैः सहितं प्रगल्भं
करिप्रधानं जनवल्लभं च ॥ ८१ ॥

चन्द्रारशुक्रार्कसुताः सुतस्था
नरं प्रकुर्वन्ति हितं द्विजानाम् ।
प्रभूतमत्याभरणं समृद्धं
क्षमान्वितं धर्मविधानदक्षम् ॥ ८२ ॥

चन्द्रज्ञजीवाभृगुजाः सुतस्था
नरं प्रकुर्वन्ति सुतार्थयुक्तम् ।
विलेपनाच्छादनभक्षणाढ्यं
महाधनं पुत्रधनैः समेतम् ॥ ८३ ॥

ABCDFILORSW

79b विनीता° C, विनीती° F 80b संजनयंति मर्त्यं om. C 80c बहुघूर्ण DFRS त्रास° F, त्रा° D 80d गुणानिमानं L 81b-82a om. B 81c °शार्थैः C 82c °मित्या° DFS, °मर्त्या° O 83a °जीव° W 83b सुतीर्थ° F °सुर्क W 83d पुत्रसुखैः DFRS

चन्द्रज्ञजीवार्कसुतास्तु नित्यं
सुतस्थिताः संजनयन्ति मर्त्यम् ।
सत्यप्रधानं बहुयज्ञभाजं
सुधर्मिणं पण्डितसंमतं च ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुताः सुतस्था
नरं प्रकुर्वन्ति विशालभाजम् ।
जितेन्द्रियं शौचपरं सुरूपं
सौभाग्यवीर्याढ्यमलोलुपं च ॥ ८५ ॥

चन्द्रेज्यशुक्रार्कसुताः सुतस्था
नरं प्रकुर्वन्ति नरेन्द्रपूज्यम् ।
शास्त्रार्जने तत्परमिष्टधर्मं
सुतप्रधानं बहुबुद्धिभाजम् ॥ ८६ ॥

भौमज्ञजीवासुरपूजिताङ्गाः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
अध्यात्मवेत्तारमरिप्रमुक्तं
सन्तुष्टचित्तं नृपवल्लभं च ॥ ८७ ॥

भौमज्ञजीवार्कसुताः सुतस्था
नरं प्रकुर्वन्ति सुशीलभाजम् ।
धर्मप्रधानं पितृकार्यदक्षं
क्षमान्वितं सर्वजनानुरक्तम् ॥ ८८ ॥

ABCDFILORSW

84a °स्तु नित्यं in marg. R, सु नित्यं L, सुतस्था CW 84b नरं प्रकुर्वंति जनयन्ति मर्त्यं W 84c मतिप्रधानं C 85a °ज्ञजीवा° cod. 85b विशील° DF 85d °वीर्यौधं S, °वीर्यधं F 86a = 85a in W 86c शस्त्रा° R °मिष्टभाजं C 86d °विधानं W बहुत्रुद्धि° L 87a सौम्यज्ञ° BCIL, चंद्रज्ञ° W 87c °प्रयुक्तं CLW, °प्रभुक्तं S 88a = 89a in DF 88b-89a om. W

भौमज्ञशुक्रार्कसुताः सुतस्था
नरं प्रकुर्वन्ति सुरूपगात्रम् ।
तृष्णाविहीनं नियमेन युक्तं
कुलप्रधानं मतिशुद्धिभाजम् ॥ ८९ ॥

भौमामरेज्याभृगुजार्कपुत्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
सुमिष्टलाभान्वितमिष्टसाधुं
सुभक्तिमृग्वेदगुरुद्विजानाम् ॥ ९० ॥

सौम्यामरेज्याभृगुजार्कपुत्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
सुशिल्पविद्यार्थचतुष्पदाढ्यं
श्रद्धाधिकं कीर्तिसमन्वितं च ॥ ९१ ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्याः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
विरूपदेहं मलदिग्धगात्रं
सन्तानमिष्टं बहुदोषयुक्तम् ॥ ९२ ॥

रवीन्दुभौमज्ञसिताः सुतस्था
नरं प्रकुर्वन्ति निशान्धमुग्रम् ।
कदर्थिताङ्गं गणिकाप्रसक्तं
प्रभूतरोगोपहतं सदैव ॥ ९३ ॥

ABCDFILORSW

89a सुखस्था C 89b स्वरूप° L 89c घृणा° C 89d °शुद्ध° ABCILOW 90a °मरेज्य° LW 90c-91b om. W 90c सुमिष्टाभाभान्वितापि° L 90d °युग्वेद° ABCILOR, °युग्धेद° DF, °धु-द° S 91a °मरेज्य° LS 91d श्रद्धाधिकं CL, शुद्धाधिकं F कीर्ति° om. C 92c मलदिग्ध° DFR 92d बहुदेव° A, बहुदुःख° F

रवीन्दुभौमज्ञदिनेशपुत्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
क्लीबं विवर्णं श्रुतिशास्त्रहीनं
सुनिष्ठुराङ्गं गुणवर्जितं च ॥ ९४ ॥

रवीन्दुभौमामरपूज्यशुक्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
श्रिया विहीनं प्रचुरप्रकोपं
वृथाटनं बन्धुजनप्रमुक्तम् ॥ ९५ ॥

रवीन्दुभौमामरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
कुसङ्गरक्तं कृतकोपचारं
चारित्रहीनं हृतसत्यमानम् ॥ ९६ ॥

रवीन्दुभौमासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
स्वबन्धुपुत्रार्थसुखैर्विहीनं
द्यूतानुरक्तं व्रतदूषकं च ॥ ९७ ॥

रवीन्दुसौम्यामरपूज्यशुक्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
दुष्टव्रणार्तं निजबन्धुमुक्तं
देवद्विजातिक्षतभक्तिकं च ॥ ९८ ॥

ABCDFILORSW

94c श्रुत° FW 95c व्यथा° F °प्रयुक्तं C, प्रभुक्तं S 96d हुत° COR, प्रत° D, गत° F सत्यभावं S 97a-b om. W 97a = 96a in DLO 97b-98a om. C 97d °द्वेषकं DFRS 98c °प्रणार्तं C °युक्तं L 98d °श्रुत° D

रवीन्दुसौम्यामरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
सदा कुशीलं गुरुभिर्निरस्तं
पराङ्मुखं साधुजनस्य नित्यम् ॥ ९९ ॥

रवीन्दुसौम्यासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
असद्व्ययानर्थयुतं व्ययार्तं
पानप्रसक्तं कृपया विहीनम् ॥ १०० ॥

रवीन्दुजीवासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
विहीनकोशं सुतमानहीनं
सुनिःप्रभं शोकसमन्वितं च ॥ १०१ ॥

सूर्यारसौम्यामरपूज्यशुक्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
कलत्रदोषोपहतं रुजार्तं
भयान्वितं व्यर्थसमुद्यमं च ॥ १०२ ॥

सूर्यारसौम्यामरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
विमूढबुद्धिं प्रमदाप्रमुक्तं
सुहृष्टचित्तं रणकातरं च ॥ १०३ ॥

ABCDFILORSW

100a = 99a in F  100d समेतं C  101c °हीनं om. DFR, in marg. add. R  101d कोश° C  च om. F  102b संजनयंति मर्त्यं om. C  102d °समुद्यतं C, °मनुद्यमं I  103b-104a om. D  103c मूढबुद्धि F  °प्रयुक्तं BL  103d सुदुष्ट° F

सूर्यारसौम्यासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
व्यपेतलज्जं जितसाधुलोकं
गतश्रियं पानपरं कृतघ्नम् ॥ १०४ ॥

सूर्यारजीवासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
शिरोर्तिदाघं क्षतपीडिताङ्गं
गुरुत्वहीनं विभवैः प्रमुक्तम् ॥ १०५ ॥

सूर्यज्ञजीवासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
नेत्रव्यथापीडितमुग्रदोषं
विरूपदेहं सततं कुचैलम् ॥ १०६ ॥

चन्द्रारसौम्यामरपूज्यशुक्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
उत्साहहीनं सततं नृशंसं
विचार्चिकामार्थसमन्वितं च ॥ १०७ ॥

चन्द्रारसौम्यामरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
बहुप्रतापं व्यसनैर्विमुक्तं
शूरं प्रभुं मानसमन्वितं च ॥ १०८ ॥

ABCDFILORSW

104a = 103a in IL  104a = 105a in W (°पूजि°)  104b मर्त्यं om. C  104d यानपरं IW, पानरतं C, पापनरं O  105b मर्त्यं om. C  105c °दाह° S  105d °दीनं C विसवैः DF  106b संजनयंति मर्त्यं om. C  106c °रोषं DS, °हेषं F  106d कुलीलं I  106d कुचैलं—107c सततं follows 108b संज° in A  107a °सौम्यासुर° F  107b संजनयंति मर्त्यं om. C मर्त्यं om. L  107c सुतरां DFRS  107d °मर्थं° BCDFIORW  108b संजनयंति मर्त्यं om. C मर्त्यं om. L

चन्द्रारसौम्यासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
दाक्षिण्यशीलं सुतवित्तभाजं
जितेन्द्रियं क्षान्तिपरं सदैव ॥ १०९ ॥

चन्द्रारजीवासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
सुमानिनं दुर्जनमप्रमेयं
प्रभूतकोशं सुतवत्सलं च ॥ ११० ॥

चन्द्रज्ञजीवासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
विस्तीर्णकीर्तिं कुलबन्धुमुख्यं
विनीतवेशाभरणं सुदान्तम् ॥ १११ ॥

भौमज्ञजीवासुरपूज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
प्रशस्तवाक्यं प्रणतं विनीतं
दयान्वितं दानरुचिं ससत्यम् ॥ ११२ ॥

एवं पंचविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
दारिद्रदुःखान्वितमल्पबुद्धिं
मलिम्लुचं निष्ठुरवाक्यरक्तम् ॥ ११३ ॥

ABCDFILORSW

109a=108a in C 109a चंद्रज्ञ° W 109b संजनयंति मर्त्यं om. C मर्त्यं om. L 10[illegible]d ख्याति° L, ज्ञाति° W 110b संजनयंति मर्त्यं om. C मर्त्यं om. L 111a=110a in D 111b मर्त्यं om. CL 111d °वेस्वा° B 112b संजनयंति मर्त्यं om. C मर्त्यं om. L 112d व्याधिकं F 113b-114a om. LW 113b मर्त्यं om. C 113c दरिद्र° cod.

रवीन्दुभौमज्ञसुरेज्यसौराः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
अरोगमोजोन्वितमुख्यदारं
प्रधानशक्तिं बहुपौरुषं च ॥ ११४ ॥

रवीन्दुभौमज्ञसितार्कपुत्राः
सुतस्थिताः संजनयन्ति मर्त्यम् ।
प्रियातिथिं चारुविशालनेत्रं
कलस्वनं नीतिसमन्वितं च ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
सुतस्थिताः पुण्यपरं श्रमार्तं
कुलप्रधानं नियतोपचारम् ॥ ११६ ॥

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
कृपाविहीनं न यशस्यभाजं
विदेशरक्तं परतर्ककं च ॥ ११७ ॥

सूर्यारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
हृतप्रभावं परदाररक्तं
विहीनकोशं रिपुनिन्दितं च ॥ ११८ ॥

ABCDFILORSW

114a = 113a in ABCIO  114b संजनयंति मर्त्यं om. CL  114c आरोग्य° ABCDFILRSW, अरोग्य° O  115b संजनयंति मर्त्यं om. CL  order in B: 116c-d, 115c-d, 116a-b  115c श्रिया° C  115d कुलेखनं AFO, कलास्पनं L  order in S: 117, 116  116a °भौमासुर° CILW  °शुक्राः FR  116b मर्त्यं om. L  116c-117b om. D  116c पण्य° FIORS  श्रया° L, श्रिया° W, भ्रमा° S  116d °प्रदानं F  117a °सौम्यासुर° S  °शुक्राः FR  117b मर्त्यं om. L  117c न om. DW, च C  117d °तर्कुकं ACOR  118a °शुक्राः FIR  118b मर्त्यं om. L  118c हृत° I  118d °निंदतं F, °निर्दितं BI, °मर्दितं W, °निर्जितं L

चन्द्रारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
अध्यात्मविद्यानिरतं सुमुख्यं
धनान्वितं बान्धवसंमतं च ॥ ११९ ॥

एवं षड्‌विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
सुतस्थिताः सर्वकलासु दक्षं
प्रभूतविद्यान्वितमीश्वरं च ॥ १२० ॥

एवं सप्तविकल्पाः ॥

इति श्रीवृद्धयवने सुताश्रययोगाध्यायः ॥

ABCDFILORSW

119a °शुक्राः FR  119b मर्त्यं om. L  120a °शुक्राः FR  120b मर्त्यं om. L  col. om. W  chapter col. श्री° om. DFR श्रीवृ° L °योगः RS

# पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

रिपुस्थितस्तीक्ष्णकरः सचन्द्रो
नरं प्रसूते विसुखं दरिद्रम् ।
स्वल्पायुषं रोगनिपीडिताङ्गं
सदातुरं शत्रुविवर्जितं च ॥ १ ॥

रिपुस्थितस्तीक्ष्णकरः सभौमो
नरं प्रसूते बहुबुद्धिभाजम् ।
शौर्यान्वितं शत्रुनिबर्हणं च
प्रशस्तवाक्यं जनसंमतं च ॥ २ ॥

सौम्यान्वितस्तीक्ष्णकरो रिपुस्थो
नरं प्रसूते प्रवराथभाजम् ।
प्रभूतवित्ताप्तयशोविशालं
मुनिर्भयं पार्थिवसंमतं च ॥ ३ ॥

जीवान्वितस्तीक्ष्णकरो रिपुस्थो
नरं प्रसूते रुजया समेतम् ।
स्वल्पायुषं सर्वजनैर्निरस्तं
प्रभूतशत्रुं गतसौहृदं च ॥ ४ ॥

शुक्रान्वितस्तीक्ष्णकरो रिपुस्थो
नरं प्रसूते सुनरां रुजार्तम् ।
व्यपेतलज्जं विधनं विरूपं
प्रभूतदुःखान्वितमाकुलं च ॥ ५ ॥

**ABCDFILORSW**

1b=2b in W  1c रंग° W  1d भोगविवर्जितं L  2b बहुदुःखिताँगं W  2c °निबर्हिणं FR, °निर्वाइणं D च om. R  2d प्रससूवाक्यं W  3b °लाभं AO  3c °विप्राप्त° D  3d °संमतं—4b रुजया om. O

सौरान्वितस्तीक्ष्णकरो रिपुस्थो
नरं प्रसूते विरुजं विपापम् ।
महामतिं शास्त्रधनैः समेतं
सुभृत्यभाजं सुधिया समेतम् ॥ ६ ॥

भौमान्वितः शीतकरो रिपुस्थो
नरं प्रसूते व्यथितं रुजार्तम् ।
विनष्टसंज्ञं प्रभया विहीनं
दौर्भाग्ययुक्तं वधबन्धभाजम् ॥ ७ ॥

सौम्यान्वितः शीतकरो रिपुस्थो
नरं प्रसूते कुलबन्धुबाह्यम् ।
धनेन हीनं कुकलत्रभाजं
भयातुरं वंचनतत्परं च ॥ ८ ॥

जीवान्वितः शीतकरो रिपुस्थो
नरं प्रसूते हतबुद्धिसत्यम् ।
स्वल्पायुषं व्याधिकदर्थिताङ्गं
गतानुरागं गुणवर्जितं च ॥ ९ ॥

शुक्रान्वितः शीतकरो रिपुस्थो
नरं प्रसूते कृशगात्रभाजम् ।
रोगार्तदेहं रिपुभिर्निरस्तं
समव्ययं पापरतं कुशीलम् ॥ १० ॥

ABCDFILORSW

6c महाधनं L 6d-7b om. BLW 6d सुदिया F 7b व्यथितं DF 7c विनिष्ट° ABIO, वनिष्ट° C 7d om. W 8b-9a om. L 8b °प्राह्यं W, °वाद्यं F 9a तीक्ष्णकरो W 9b प्रसूते om. L °बुद्धिभाजं W 9c व्याधि° om. L, व्या—°W 10a तीक्ष्णकरो W 10b-11a om. BLW 10b कृशमात्र° DF

सौरान्वितः शीतकरो रिपुस्थो
नरं प्रसूते कुधिया समेतम् ।
भीरुं विसंज्ञं परपीडिताङ्गं
विरूपदारं रतिवर्जितं च ॥ ११ ॥

सौम्यान्वितो भूतनयो रिपुस्थो
नरं प्रसूते निरुजं सुशीलम् ।
बहुप्रतापं प्रियवाक्सुनाढ्यं
सतामभीष्टं गुरुवत्सलं च ॥ १२ ॥

जीवान्वितो भूतनयो रिपुस्थो
नरं प्रसूतेऽल्पसुखं कुबुद्धिम् ।
पराभिभूतं व्रतदानहीनं
निसर्गभीरुं कलहप्रियं च ॥ १३ ॥

शुक्रान्वितो भूतनयो रिपुस्थो
नरं प्रसूते वनितासु रक्तम् ।
स्त्रीनिर्जितं पापरतं नृशंसं
खलानुरक्तं श्रुतवर्जितं च ॥ १४ ॥

सौरान्वितो भूतनयो रिपुस्थो
नरं प्रसूते दृढतासमेतम् ।
सुनिष्ठुराङ्गं जितशत्रुपक्षं
क्षमान्वितं धर्मविचक्षणं च ॥ १५ ॥

---

ABCDFILORSW

11b-12a om. D   11b प्रसूते om. L   कुप्रिया° B   11c परि° S
after 11 W adds: सौरान्वितः शीतकरो न नित्यं
नरं प्रसूते बहुशत्रुनाशं
पराक्रमं राज्यकृतं च लक्ष्मीं
चतुष्पदानां च समागमं च

12b प्रसूते om. L   12c °वाक्श्रुता° BDFRSW °वाक्यदक्षं L   12d श्रुता° L, सता° om. W   13b प्रसूते om. L   14b प्रसूते om. L   14d श्रुति° D
15b-16a om. S

जीवान्वितः सोमसुतो रिपुस्थो
नरं प्रसूते जडिमासमेतम् ।
विनष्टबुद्धिं नृपपीडिताङ्गं
धनप्रयुक्तं सुरतप्रियं च ॥ १६ ॥

शुक्रान्वितः सोमसुतो रिपुस्थो
नरं प्रसूते वनिताविरक्तम् ।
कन्यात्मकं सर्वजनैर्निरस्तं
वृथाटनं भक्तिविवर्जितं च ॥ १७ ॥

सारान्वितः सोमसुतो रिपुस्थो
नरं प्रसूते बहुवाहनाढ्यम् ।
भोगैः समेतं विविधप्रतापं
नरप्रियं सर्वकलासु दक्षम् ॥ १८ ॥

जीवान्वितो दैत्यगुरू रिपुस्थो
नरं प्रसूते विषयप्रसक्तम् ।
स्त्रीचंचलं पानपरं कृतघ्नं
पापप्रसक्तं परवंचकं च ॥ १९ ॥

जीवान्वितः सूर्यसुतो रिपुस्थो
नरं प्रसूते वनितानिरस्तम् ।
रोगान्वितं सत्यधनैर्विहीनं
कुकर्मरक्तं सततं च रुष्टम् ॥ २० ॥

॥ २१ ॥

एवं द्विविकल्पाः ॥

---

ABCDFILORSW

16b प्रसूते om. L जडिना° FL, जडना° CW 16c विनिष्ट° L 17b-18a om. LW 18d न स्व° BI, नय° W 19a देवगुरुः W 19b प्रसूते om. L 19c वान° CW, वाहन° L 19d पर°—20d °रक्तं om. L 20a जीवान्वितः B, शुक्रान्वितः in marg. B 20d न AI, नु BLW, मु DFR, सु° S °दुष्टं S 21 om. cod. col. एवं om. L

रवीन्दुभौमा रिपुगा मनुष्यं
कुर्वन्ति नीचं विकृतस्वभावम् ।
रोगाभिभूतं परवंचनोक्तं
कृपाविहीनं खलसङ्गमं च ॥ २२ ॥

रवीन्दुसौम्या रिपुगा मनुष्यं
कुर्वन्ति पापात्मकमुग्ररोगम् ।
विरक्तभृत्यं धनधान्यहीनं
भयान्वितं सत्यविवर्जितं च ॥ २३ ॥

रवीन्दुजीवा रिपुगा मनुष्यं
कुर्वन्ति नानाविधदुःखभाजम् ।
सदा विमुक्तं सुतभृत्यदारैः
सुदीनवृत्तिं विभवैर्विमुक्तम् ॥ २४ ॥

रवीन्दुशुक्रा रिपुगा मनुष्यं
कुर्वन्ति दीनाकृतिरिष्टतुष्टम् ।
प्रशान्तदर्पं विकृतस्वभावं
रौद्रं नृशंसं प्रियवर्जितं च ॥ २५ ॥

रवीन्दुसौरा रिपुगा मनुष्यं
कुर्वन्ति पापं प्रियलोकहीनम् ।
सुनिष्ठुरं निष्ठुरपाणिपादं
भयात्मकं गर्वितमातुरं च ॥ २६ ॥

ABCDFILORSW

22 om. L    22b कुर्वंति नीचं ]नरं विकुर्वंति W    22d खलु C, ख° I °संगतं DFRS, संगमतं I    order in DF: 23a, 24b-d, 23b-d, 24    23d सत्यसमन्वितं L    order in S: 25, 24    24b-25a om. W    25b दीर्घ-कृति° F    25c विजत° D    25d रौरं FRS,    26c °पाणिनादं C    26d गर्हित° RS, गार्हत° DF °मापुरं W, °मानुषं S

सूर्यारसौम्या रिपुगा मनुष्यं
कुर्वन्ति दीर्घायुषमिष्टसिद्धिम् ।
नानार्थभावं विजितारिपक्षं
प्रभूतमित्रं रणकोविदं च ॥ २७ ॥

सूर्यारजीवा रिपुगा मनुष्यं
कुर्वन्ति शूरं बहुशास्त्ररक्तम् ।
जितेन्द्रियं साधुसमागमोक्तं
स्थिरस्वभावं बहुशोकहीनम् ॥ २८ ॥

सूर्यारशुक्रा रिपुगा मनुष्यं
कुर्वन्ति नानाविधसौख्ययुक्तम् ।
स्त्रीणामभीष्टं सुरतप्रगल्भं
महाधनं नीतिविचक्षणं च ॥ २९ ॥

सूर्यारसौरा रिपुगा मनुष्यं
कुर्वन्ति भूनाथमकुत्सिता[illegible]न् ।
हस्त्यश्वकोशाढ्यमतिप्रगल्भं
धर्मार्जने तत्परमानसं च ॥ ३० ॥

सूर्यज्ञजीवा रिपुगा मनुष्यं
कुर्वन्ति कामात्मकमिष्टदोषम् ।
श्रद्धाविहीनं कुबलस्वभावं
दयाविहीनं परवंचकं च ॥ ३१ ॥

सूर्यज्ञशुक्रा रिपुगा मनुष्यं
कुर्वन्ति नानाविधदोषभाजम् ।
सुनिष्ठुरं सत्यदयाविहीनं
गतघृणं बुद्धिविवर्जितं च ॥ ३२ ॥

---

ABCDFILORSW

27b °युक्तो FIOR °सिद्धं W 27c °भावे F, °भावि RS, °भाजं W, °लाभं C 28b-29a om. L 30a °सांम्या F 30b कुर्वंति om. W 30d सत्पर° I 31c कवल° cod.

सूर्यज्ञसौरा रिपुगा मनुष्यं
कुर्वन्ति भृत्यात्मजदारहीनम् ।
सदा कुकर्माश्रितमुग्ररूपं
वाताधिकं वाक्यविलक्षणं च ॥ ३३ ॥

सूर्यामरेज्याभृगुजा रिपुस्था
नरं प्रकुर्वन्ति सुखौल्यभाजम् ।
सुवर्णवस्त्राभरणं कुरूपं
निस्त्रिंशचेष्टं मतिवर्जितं च ॥ ३४ ॥

सूर्यामरेज्यार्कसुता रिपुस्था
नरं प्रकुर्वन्ति विदग्धचेष्टम् ।
गीतप्रियं भोगबहुप्रजाभं
तडागकूपार्जनतत्परं च ॥ ३५ ॥

सूर्यासुरेज्यार्कसुता रिपुस्था
नरं प्रकुर्वन्ति सतामभीष्टम् ।
प्रियंवदं शास्त्ररतं प्रगल्भं
विद्याधिकं सत्यसमन्वितं च ॥ ३६ ॥

चन्द्रारसौम्या रिपुगा मनुष्यं
कुर्वन्ति नानाविधशोकभाजम् ।
विहीनसत्यं कुधिया समेतं
परान्नपुष्टं परतर्ककं च ॥ ३७ ॥

चन्द्रारजीवा रिपुगा मनुष्यं
कुर्वन्ति सत्यार्थविवर्जिताङ्गम् ।
प्रभूतवैराप्तमहाभिघातं
निरस्तधैर्यं प्रभुताविहीनम् ॥ ३८ ॥

---

ABCDFILORSW

order in S: 34-35, 33 33d °विचक्षणं L 34a °मरेज्य °LSW 34b सुशैल्य° D 34d निस्तृंश° ABCORSW, निस्त्रंश° D, निस्तंश° F, निस्वंस° I 35b-36a om. L 35c °प्रजातं D, °प्रभाजं FW, °प्रजाभं I 37d °पुष्टि L °तर्कुकं ADOR. 38b सत्या°—39b कुर्वति in marg. O 38c °भिगातं F, °भिधानं L, °विघातं I

चन्द्रारशुक्रा रिपुगा मनुष्यं
कुर्वन्ति दीनं निजबन्धुहीनम् ।
नष्टस्वभावं विजितं स्ववर्गे
निपीडिताङ्गं कफवातपित्तैः ॥ ३९ ॥

चन्द्रारसौरा रिपुगा मनुष्यं
कुर्वन्ति नष्टात्मजमुग्रवैरम् ।
सुदूषिताङ्गं कृपणस्वभावं
पराजितं शास्त्रपराङ्मुखं च ॥ ४० ॥

चन्द्रज्ञजीवा रिपुगा मनुष्यं
कुर्वन्ति स्वल्पायुषमुग्रतापम् ।
शास्त्रार्थहीनं परवादरक्तं
नास्तिक्यमार्गानुरतं सदैव ॥ ४१ ॥

चन्द्रज्ञशुक्रा रिपुगा मनुष्यं
कुर्वन्ति नानाविधरोगभाजम् ।
मन्दप्रभावं दयिताविहीनं
सदा दरिद्रार्दितमानसं च ॥ ४२ ॥

चन्द्रज्ञसौरा रिपुगा मनुष्यं
कुर्वन्ति दुःखार्दितचेष्टकामम् ।
परोपकारप्रविवर्जिताङ्गं
गुणैर्विहीनं निधनं सदैव ॥ ४३ ॥

ABCDFILORSW

39b हीनं C °दीनं D 39c नष्टस्वभृत्यै° D स्ववर्गै° O, स्वभृत्यै° FRS विजितारिवर्गं W 40a °सौम्या L मनुष्यं om. L 40c सुदृषितांगं S 41a मनुष्यं om. L 41b °पापं W 41c शास्त्रास्त्र° C °हीनं om. R परपाद° L 42a मनुष्यं om. L 42d दरिद्रं W °दित° FW 43b °चेष्टि° DRS, °रेष्ट° F °कामिं BC, °कर्मि L 43c °तांतं S

चन्द्रामरेज्याभृगुजा रिपुस्था
नरं प्रकुर्वन्ति निसर्गपापम् ।
प्रेष्यं प्रतापार्थयशोविहीनं
नराधमं बान्धवदूषितं च ॥ ४४ ॥

चन्द्रामरेज्यारविजा रिपुस्था
नरं प्रकुर्वन्ति मतिप्रहीनम् ।
प्रभूतदुःखं सततं नृशंसं
मायाविनं मानविवर्जितं च ॥ ४५ ॥

चन्द्रासुरेज्यारविजा रिपुस्था
नरं प्रकुर्वन्ति बहुप्रदुःखम् ।
विज्ञानविद्याविनयैर्विहीनं
सुरौद्रकर्माणमपीडितं च ॥ ४६ ॥

भौमज्ञजीवा रिपुगा मनुष्यं
कुर्वन्ति शूरं विजितारिपक्षम् ।
अक्षुद्रभावं प्रवणप्रधानं
धर्मध्वजं जीवदयासमेतम् ॥ ४७ ॥

भौमज्ञशुक्रा रिपुगा मनुष्यं
कुर्वन्ति मर्त्यं सुधिया समेतम् ।
हिरण्यमुक्ताफलरत्नभाजं
सुभूमिशास्त्रार्थयुतं सदैव ॥ ४८ ॥

---

ABCDFILORSW

44a °मरेज्य° CSW 44d °दूषिकं L 45a °मरेज्य° SW 45b-46a om. L 45b –विहीनं S 46a °सुरेज्य° S 46b °प्रयुक्तं C 46c °विनथै° B, °विनंमाषै° A 47c प्रणव° DFLOR, प्रणतं S 48a मनुष्यं om. L 48b सत्यं DFRS 48d °शस्त्रार्थ° L तदैव F

भौमज्ञसौरा रिपुगा मनुष्यं
　　कुर्वन्ति नानाविधभोगभाजम् ।
जितेन्द्रियं प्राप्तधनं सुरूपं
　　स्वदाररक्तं परदूषकं च ॥ ४९ ॥

भौमामरेज्याभृगुजा रिपुस्था
　　नरं प्रकुर्वन्ति सुवाहनाढ्यम् ।
धनार्जने तत्परमानसं च
　　प्रभूतमित्रं द्रविणान्वितं च ॥ ५० ॥

भौमामरेज्यार्कसुता रिपुस्था
　　नरं प्रकुर्वन्ति सुशीलभाजम् ।
जनानुरक्तं बहुशास्त्रभाजं
　　नयप्रधानं बहुसंमतं च ॥ ५१ ॥

भौमासुरेज्यार्कसुता रिपुस्था
　　नरं प्रकुर्वन्ति दयानुरक्तम् ।
स्त्रीणामभीष्टं परकार्यरक्तं
　　शिष्टानुगं धर्मसमन्वितं च ॥ ५२ ॥

सौम्यामरेज्याभृगुजा रिपुस्था
　　नरं प्रकुर्वन्ति सुरोगभाजम् ।
मातापितृभ्यां परिहीनमुग्रं
　　पापोन्मुखं दोषसमन्वितं च ॥ ५३ ॥

ABCDFILORSW

49a मनुष्यं om. L　49b °विवि° D　°रोग° C　49d सुदार° D, स्वदीन° F　°दूषणं W, °दूतिकं F　50a °मरेज्य° LSW　51b प्रसूते W　51d जनप्रधानं W　52a = 51a in BDLW　52b-53a om. LW　52c om. O　53a = 54a in ABCIO　53a °मरेज्यार्कभृगुजा S　53b नरं प्रकुर्वंति om. B　53c परहीन° FIRS

सौम्यामरेज्यार्कसुता रिपुस्था
नरं प्रकुर्वन्ति हितैर्विहीनम् ।
युद्धात्मकं कृष्णतनुं कुचैलं
चारित्रहीनं नयदूषकं च ॥ ५४ ॥

सौम्यासुरेज्यार्कसुता रिपुस्था
नरं प्रकुर्वन्ति दरिद्रताढ्यम् ।
गतप्रतापं विभवैर्विहीनं
पराङ्मुखं शास्त्रगुरुद्विजानाम् ॥ ५५ ॥

जीवासुरेज्यार्कसुता रिपुस्था
नरं प्रकुर्वन्ति विहीनगात्रम् ।
दीक्षाविहीनं नतिवित्तहीनं
सदातरं साधुपराङ्मुखं च ॥ ५६ ॥

एवं त्रिविकल्पाः ॥

रवीन्दुभौमेन्दुसुता रिपुस्था
नरं प्रकुर्वन्ति सदाभितप्तम् ।
व्यर्थश्रमं रोगभयैः समेतं
कुरूपनेत्रं कुमतिं सदैव ॥ ५७ ॥

रवीन्दुभौमामरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
सुस्थूलदन्तांह्रिगुदाभिनाशं
निर्लज्जमाशङ्कितमेव नित्यम् ॥ ५८ ॥

---

ABCDFILORSW

54c व्यद्धा° F, यद्धा° S 54d °दूषतं F, °रूपकं W 55 om. D 55a सौम्यामरे° ABCILOSW 55b = 56b in W 55b °गाढं C, °तपं F 56b °मानं L, corr. to °गात्रं $L^2$ 56c वीक्षा° LW, वीक्ष्य° B, वृक्षा° DFRS नतिवित्तहीनं om. D, विभवैर्विहीनं (55c) F मति° I col. एवं ] अथ W 58a °पूज्यतांगा F 58c °दंताद्रि° C, °दंतांह्न° B, °दंतंह्न° DR, °दंतंह° F, °दंतह्नन्° S, °दंताह्न° LW °गुदाक्षि° DFRS 58d °मांसकित° B, °नार्शंकित° I

रवीन्दुभौमासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
विरूपकेशं श्रुतशास्त्रहीनं
बह्वामिषं निष्ठुरवाक्यमुग्रम् ॥ ५९ ॥

रवीन्दुभौमार्कसुता रिपुस्था
नरं प्रकुर्वन्ति क्षताङ्गमार्तम् ।
तेजोविहीनं परवंचनोक्तं
सुवक्त्रवाचं वनिताजितं च ॥ ६० ॥

रवीन्दुसौम्यामरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
क्लीवं शठं बुद्धिविवर्जिताङ्गं
सुकातरं सर्वजनाभिभूतम् ॥ ६१ ॥

रवीन्दुसौम्यासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
रजोविकारैर्विविधैः समेतं
परान्नरक्तं लघुसौहृदं च ॥ ६२ ॥

रवीन्दुसौम्यार्कसुता रिपुस्था
नरं प्रकुर्वन्ति कुकर्मरक्तम् ।
मिथ्यानुरक्तं कृपणस्वभावं
विपन्नशीलं मतिवर्जितं च ॥ ६३ ॥

ABCDFILORSW

59c °कोशं D 59d बह्वासिनं L, बह्वाशिनं W, बह्वानिरं DFRS 60b=61b in DF 60b °मात्रं I 60d सुविक्लिवाचा DFRS वनिताजितं च om. A 61a °पूज्यतांगा F 61c पठं B, षटं I, पटुं LW, व्याठं A °विनर्जितं च W 61d °जनातिभूतं S, °जनानुभूतं W 62a °पूज्यतांगा F 62c रजोधिकोर° D, रुजोविकोर° F, रुजोविकारै° S 63c पापानुरक्तं L

रवीन्दुजीवासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
यशोविहीनं परदाररक्तं
सुनिर्घृणं वंचनतत्परं च ॥ ६४ ॥

रवीन्दुजीवार्कसुता रिपुस्था
नरं प्रकुर्वन्ति कृशाङ्गकं च ।
मूर्खानुरक्तं वधबन्धभाजं
विहीनवृत्तिं सुतरां नृशंसम् ॥ ६५ ॥

रवीन्दुशुक्रार्कसुता रिपुस्था
नरं प्रकुर्वन्ति कुकर्महृष्टम् ।
पराङ्मुखं देवगुरुद्विजानां
पराभिभूतं कठिनात्मकं च ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गा
नरं प्रकुर्वन्ति हृतारिपक्षम् ।
शूरं प्रगल्भं नृपपूजिताङ्गं
गुणप्रियं सत्यधिया समेतम् ॥ ६७ ॥

सूर्यारसौम्यासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
कृपाधिकं कल्पतरुं प्रगल्भं
शौचान्वितं प्रीतिकरं द्विजानाम् ॥ ६८ ॥

ABCDFILORSW

64a °पूज्यतांगा F 64b सुतस्थिताः L मर्त्यं om. D 64d सनिर्घृणं FL 65b कुशांककं F 65d °वृत्तं O 66b °दृष्टं ABCIS, °दुष्टं FLW 67b हतारि° I 67c °पूजितास्यं W 68b–70a om. S 68b मर्त्यं om. D 68c °तनुं ABFILORW 68d प्रीतिपरं D

सूर्यारसौम्यार्कसुता रिपुस्था
नरं प्रकुर्वन्ति सताममीष्टम् ।
शूरं महाविज्ञतमं सुरूपं
प्रसन्नचित्तं जनवल्लभं च ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
कृषिप्रधानं नियमेन युक्तं
श्रद्धासमेतं नृपसंमतं च ॥ ७० ॥

सूर्यारजीवार्कसुतास्तु नित्यं
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
धूर्तस्वभावं प्रियधूर्तवर्गं
बहुप्रभाकीर्तिसमन्वितं च ॥ ७१ ॥

सूर्यारशुक्रार्कसुता रिपुस्था
नरं प्रकुर्वन्ति विदग्धभाजम् ।
विदग्धगोष्ठीनिरतं यशस्यं
सुसंमतं धर्मपरं सदैव ॥ ७२ ॥

सूर्यज्ञजीवासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
प्रधानबुद्धिं जितशत्रुपक्षं
सुरूपदेहं सुभगं मनोज्ञम् ॥ ७३ ॥

ABCDFILORSW

69a-b=68a-b in F   70b मर्त्यं om. D   70c कृपा° W   70d यद्धा° CD   71b संजनयंति मर्त्यं om. CD   72b विदग्धभाजं om. A   72c °कोष्ठी° CDIO, °कोष्ठा° ABLW   72d सुसंमतपरं सदैव भावं W  सत्यपरं L   73a जितांगा–74a °जीवार्कसु° om. B   73a °पूज्यतांगा F   73b संजनयंति मर्त्यं om. CD   73d मनुज्ञं A, मनुष्यं CDILW

सूर्यज्ञजीवार्कसुता रिपुस्था
    नरं प्रकुर्वन्ति सुशुद्धभावम् ।
विद्याविनीतं स्तुतिकीर्तिजं च
    प्रभूतवाहान्वितमोजसाढ्यम् ॥ ७४ ।

सूर्यज्ञशुक्रार्कसुता रिपुस्था
    नरं प्रकुर्वन्ति सुतार्थभाजम् ।
प्रभूतभोगान्वितमिष्टसाधुं
    विद्यार्जने तत्परमानसं च ॥ ७५ ॥

सूर्यामरेज्याभृगुजार्कपुत्रा
    रिपुस्थिताः संजनयन्ति मर्त्यम् ।
प्रगल्भविद्यं प्रमदास्वमीष्टं
    सुसंपदं नीतिसमन्वितं च ॥ ७६ ॥

चन्द्रारसौम्यामरपूजिताङ्गा
    रिपुस्थिताः संजनयन्ति मर्त्यम् ।
प्रज्ञाधिकं कल्पतरुं समर्थं
    महाप्रभावं भयवर्जितं च ॥ ७७ ॥

चन्द्रारसौम्यासुरपूजिताङ्गा
    रिपुस्थिताः संजनयन्ति मर्त्यम् ।
विहीनकोशं विकलाङ्गभाजं
    जनप्रमुक्तं तरलं पटुं च ॥ ७८ ॥

ABCDFILORSW

74b °भाजं CD 74c °विहीनं BCDILW °कीर्तितं च I, °कीर्तिभाजं S 74d °वातान्वित° F 75a = 74a in D 75c °योगान्वित° S order in FRS: 76a-b, 77c-d, 77a-b, 76c-d 76a °मरेज्य° SW 76b संजनयंति मर्त्यं om. D 76c °विद्या CF च महास्व° F 76d सुसंमतं L 77b संजनयंति मर्त्यं om. CD 77a प्रजा° I समर्घं CD 78b संजनयंति मर्त्यं om. CD 78d °प्रयुक्तं CD पुटं BDI, पटं ACFLOR

चन्द्रारसौम्यार्कसुता रिपुस्था
नरं प्रकुर्वन्ति रुजार्तदेहम् ।
विदेशसेवानिरतं कुबुद्धिं
कदर्यताढ्यं सुकृशाङ्गकं च ॥ ७९ ॥

चन्द्रारजीवासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
दयाविहीनं पिशुनस्वभावं
सुनिर्दयं शास्त्रपराङ्मुखं च ॥ ८० ॥

चन्द्रारजीवार्कसुता रिपुस्था
नरं प्रकुर्वन्ति दरिद्रताढ्यम् ।
भाग्यैर्विहीनं नियतारिभूतं
प्रचण्डरूपं चलमातुरं च ॥ ८१ ॥

चन्द्रारशुक्रार्कसुता रिपुस्था
नरं प्रकुर्वन्ति विहीनसत्यम् ।
पित्ताधिकं कुत्सितसङ्गयुक्तं
सुनिर्दयं निष्ठुरमानसं च ॥ ८२ ॥

चन्द्रज्ञजीवासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
स्वल्पायुषं क्लेशकदर्थिताङ्गं
गतघृणं पापमतिं सदैव ॥ ८३ ॥

ABCDFILORSW

79c निदेश° D, विशेष° W 79d कदर्थ° IW, कदर्य° F, कंदर्प° O सुक्तशागकं L, कृशांगतं W order in W: 81, 80 80b संजनयंति मर्त्यं om. CD 81b दरिद्रभाजं C 81c भोग्यै° W, भोगै° C, भागै° O नित्यता° F °भूमं D 81d °मातुरं BLW 82b = 81b in W (तां च) 82c: विहीनसत्यं विरोधचेष्टा W 82d = 82c in W 83a = 80a in S 83b संजनयंति मर्त्यं om. C 83c क्लेश° ] लोक° DF

चन्द्रज्ञजीवार्कसुता रिपुस्था
नरं प्रकुर्वन्ति कृतप्रभावम् ।
निष्ठानुरक्तं कृतकस्वभावं
मायाविनं द्वेषपरं गुरूणाम् ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुता रिपुस्था
नरं प्रकुर्वन्ति पराश्रितं च ।
खलस्वभावं वनिताविमुक्तं
सुनिष्ठुरं पापमतिं सदैव ॥ ८५ ॥

चन्द्रामरेज्याभृगुजार्कपुत्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
द्वेष्यं नृशंसं सुतदारहीनं
नीचाश्रयं कामनिपीडिताङ्गम् ॥ ८६ ॥

भौमज्ञजीवासुरपूजिताङ्गा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
विलासबुद्धिं नयनाभिरामं
नृपप्रियं गर्वविवर्जितं च ॥ ८७ ॥

भौमज्ञजीवार्कसुता रिपुस्था
नरं प्रकुर्वन्ति सुतार्थयुक्तम् ।
नानार्थयुक्तं सुगुणैः समेतं
विदग्धवाक्यं प्रियदर्शनं च ॥ ८८ ॥

भौमज्ञशुक्रार्कसुता रिपुस्था
नरं प्रकुर्वन्ति हुताशभक्तम् ।
यज्ञव्रताराधनतत्परं च
प्रभूततीर्थार्जितभूरिधर्मम् ॥ ८९ ॥

---

ABCDFILORSW

84b कृतस्व° F 86a °मरेज्य° LSW 86b संजनयंति मर्त्यं om. C 86c द्वेषं CW 87a भौमज्ञशुक्रसुरपूज्यतांगा F 87b संजनयंति मर्त्यं om. C 87d °समन्वितं RS, विवर्जि in marg. R2 88b = 89b in R, corr. in marg. R2 88 om. D 88c-d om. FR, in marg. R2

भौमामरेज्याभृगुजार्कपुत्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
शौर्यान्वितं वेदविदां वरिष्ठं
प्रभूतयज्ञार्जितभूरिकीर्तिम् ॥ ९० ॥

सौम्यामरेज्याभृगुजार्कपुत्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
कुदानवृत्तिं मलिनस्वभावं
प्रपंचशीलं वनितार्जितं च ॥ ९१ ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्या
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
विरूपदेहं विनयेन हीनं
पराभिभूतं परवंचकं च ॥ ९२ ॥

रवीन्दुभौमज्ञसिता रिपुस्था
नरं प्रकुर्वन्ति बहुप्रकोपम् ।
पैशून्यचौर्यप्रवरं कृतघ्नं
प्रद्वेषरक्तं बहुदुखिताङ्गम् ॥ ९३ ॥

रवीन्दुभौमज्ञदिनेशपुत्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
कुकर्मसेवार्तियुतं हृतस्वं
नेत्रांघ्रिवक्त्रार्तियुतं सदैव ॥ ९४ ॥

---

ABCDFILORSW

90a °मरेज्य° LSW  90b संजनयंति मर्त्य om. C  90c सूर्यान्वितं D °विदं F  91a °मरेज्य° LSW  91b संजनयंति मर्त्यं om. C  91c-d = 92c-d in DF  91c सुदीनवृत्तिं RS  col.: चतुर्थविकल्पः W  92b संजनयंति मर्त्यं om. C  93d प्रवृष° I  order in FRS: 94a-b, 96c-d, 95a-b, 94c-d, 96a-b, 95c-d  94b संजनयंति मर्त्यं om. C  94c-d om. D  94c हृतस्वं—94d om. LW  94d नेत्रांघ्रि° F, नेत्राघ्रि° O, नेत्रांद्रि° C

रवीन्दुभौमामरपूज्यशुक्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
शिरोर्तिदाघज्वरपीडिताङ्गं
विवेकहीनं नितरां विरूपम् ॥ ९५ ॥

रवीन्दुभौमामरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
गुह्याङ्गरोगार्दितमिष्टचौर्यं
पराङ्मुखं साधुसमागमस्य ॥ ९६ ॥

रवीन्दुभौमासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
सौन्दर्यहीनं जडतासमेतं
विवेकविद्यारहितं सदैव ॥ ९७ ॥

रवीन्दुसौम्यामरपूज्यशुक्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
तेजोविहीनं कपटस्वभावं
विहीनकोशं कुकृतानुरक्तम् ॥ ९८ ॥

रवीन्दुसौम्यामरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
कुचेलमाधिप्रचुरं क्षताङ्गं
सत्येन हीनं विकलं सुदीनम् ॥ ९९ ॥

ABCDFILORSW

order in ABCILOW: 96, 95; order in D: 96c-d, 95a-b ( 95c-96b om. ) 95b संजनयंति मर्त्यं om. CL 95c °दाह° S °ह्वर° B 96b संजनयंति मर्त्यं om. C मर्त्यं om. L 96c गुह्याय° W, गुह्यं च I °मिष्टपौर्यं D 97a-b om. D 97a °भौमामर° F 97b संजनयंति मर्त्यं om. CL 98b संजनयंति मर्त्यं om. CL 98c कुलतानुरक्तं DF 99b संजनयंति मर्त्यं om. CL

रवीन्दुसौम्यासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
सुनिष्ठुरं पापमतिं नृशंसं
जनातिगं हानियुतं सदैव ॥ १०० ॥

रवीन्दुजीवासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
सुतार्थहीनं नियमैर्विहीनं
विनिर्जितं नीचजनेन नित्यम् ॥ १०१ ॥

सूर्यारसौम्यामरपूज्यशुक्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
गतघृणं स्वल्पधनं कुपुत्रं
व्यथान्वितं रोगकदर्थिताङ्गम् ॥ १०२ ॥

सूर्यारसौम्यामरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
व्यपेतलज्जं घृणया विहीनं
नीचानुरक्तं विकृतानुकारम् ॥ १०३ ॥

सूर्यारसौम्यासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
क्षतप्रदग्धं गतशौचसत्यं
शीलेन हीनं विकृतप्रधानम् ॥ १०४ ॥

---

ABCDFILORSW

100a °सौम्यासुरपूज्य° om. A, °सौम्यामरपूज्य° BCDILW  100b संजनयंति मर्त्य om. CL  100c-102b om. D  100d नानातिगं L  101a = 100a in L  101b मर्त्यं om. L  101c सुतीर्थ° FW विमुक्त FS  101d सुनिर्जितं FRS  102a = 103a in ABCILOW  102b संजनयंति मर्त्यं om. L  102d °कपर्थि° D, °कादर्थि° C  103b संजनयंति मर्त्यं om. L  103c-104b om. D  103d °नुरक्तं F  104a = 103a in BCILOW  104b संजनयंति मर्त्यं om. C  104c °सत्यशौचं DFRS °सत्वं W

सूर्यारजीवासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
विरक्तपौरं विगताभिमानं
मूर्खं विधर्मानुरतं कुशीलम् ॥ १०५ ॥

सूर्यज्ञजीवासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
भृत्यव्यपेतं परदारलुब्धं
भयान्वितं दीनतमं नृशंसम् ॥ १०६ ॥

चन्द्रारसौम्यामरपूज्यशुक्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
ओजोविहीनं मलिनस्वभावं
कामानुरागं गुणवर्जितं च ॥ १०७ ॥

चन्द्रारसौम्यामरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
सुमूत्रकृच्छ्रार्दितकायमार्तं
श्रिया विहीनं नितरां जराढ्यम् ॥ १०८ ॥

चन्द्रारसौम्यासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
नवार्तमत्यद्भुतवातभाजं
सदा कृतघ्नं नियमैर्विहीनम् ॥ १०९ ॥

ABCDFILORSW

105b संजनयंति मर्त्यं om. CL   105c-106b om. D   105d विदर्मानुगतं L   कुचौलं L, corr. to कुशंलं L[2], विशीलं S   106b संजनयंति मर्त्यं om. L   106c भृत्य° om. L, भृत° ABIOW, श्रुत° RS, श्रुता° DF   व्यपेतलजं L   °लब्धं L   106d दानरतं W   107 om. D   107a=108a in F   107b संजनयंति मर्त्यं om. L   107c ऊजो° L, तेजो BFW   108b संजनयंति मर्त्यं om. CL   108c सुसूत्र° BW, सुम्नल° S   108d प्रिया° F   जडा° S, जजा° F, जना° W   109a=108a in BCILOW   109b संजनयंति मर्त्यं om. CL   109c-110b om. I

चन्द्रारजीवासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
जनैर्विमुक्तं परदाररक्तं
पापप्रसक्तं परदेशरक्तम् ॥ ११० ॥

चन्द्रज्ञजीवासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
प्रभूतशत्रुं सुतदारहीनं
धनप्रयुक्तं जडतासमेतम् ॥ १११ ॥

भौमज्ञजीवासुरपूज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
श्रुतार्थपुत्रादिविवर्जिताङ्गं
विद्याविहीनं परवर्जितं च ॥ ११२ ॥

एवं पंचविकल्पाः ॥

सूर्येन्दुभौमज्ञसुरेज्यशुक्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
प्रभग्नहस्तांघ्रियुगं कुकार्ये
विभीषणं शत्रुपराजितं च ॥ ११३ ॥

सूर्येन्दुभौमज्ञसुरेज्यसौरा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
बहुव्यथं पानपरं गताशं
विहीनवस्त्राभरणं सदैव ॥ ११४ ॥

ABCDFILORSW

order in W: 110a-b, 112c-d, 110a-111d 110b संजनयंति मर्त्यं om. CL 110c यानैं° L 110d om. DF 111b संजनयंति मर्त्यं om. CL 111c-112b om. D 112b संजनयंति मर्त्यं om. CL 112c °पुत्राम्न° DFR, °पुत्रान्वि° BLW, °पुत्रार्थ° S °वर्जित च F 112d om. F 113b संजनयंति मर्त्यं om. CL 113c प्रलम्न° W, प्रगल्भ° DF 114b संजनयंति मर्त्यं om. CL 114c बहुयथं BW

रवीन्दुभौमज्ञसितार्कपुत्रा
रिपुस्थिताः संजनयन्ति मर्त्यम् ।
प्रभाविहीनं कृतकस्वभावं
विवर्जिताङ्गं नियमेन हीनम् ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र–
शनैश्चराः संजनयन्ति मर्त्यम् ।
क्षमाविहीनं परवंचनोक्तं
सुरोगभाजं विजितं खलाद्यैः ॥ ११६ ॥

॥ ११७ ॥

सूर्यारसौम्यामरपूज्यशुक्र–
शनैश्चराः संजनयन्ति मर्त्यम् ।
सुवक्त्रबुद्धिं विदयं सुदीनं
स्वबन्धुदारै रहितं प्रभूग्रम् ॥ ११८ ॥

चन्द्रारसौम्यामरपूज्यशुक्र–
शनैश्चराः संजनयन्ति मर्त्यम् ।
सुदुष्टभावं विनयेन हीनं
वृथाटनं मानविवर्जितं च ॥ ११९ ॥

एवं षड्विकल्पाः ॥

ABCDFILORSW

115b संजनयंति मर्त्यं om. CL मर्त्यं om. W 115d विनयेन D order in S: 116a-b, 118c-d, 116c-d, 118a-d 116a °शुक्राः FLRW order in DF: 116b, 118c-d, 116c-d, 118a-b 116d खलाढ्यैः O 117 om. cod. 118a °शुक्राः FRW 118b मर्त्यं om. L 118d प्रमुग्रं ABCD₂ F₂ILORS, प्रसुग्रं W, प्रमुख्यं D, प्रमुखं F 119a °शुक्राः FOR 119b मर्त्यं om. L

रवीन्दुभौमज्ञसुरेज्यशुक्र—
शनैश्चराः संजनयन्ति मर्त्यम् ।
सत्यान्वितं पुण्यपरं प्रगल्भं
धनान्वितं कीर्तिसमन्वितं च ॥ १२० ॥

एवं सप्तविकल्पाः ॥

## इति श्रीवृद्धयवने शत्रुभावाश्रययोगाध्यायः

ABCDFILORSW

120 om. BCDFILO 120a सूर्यारिचंद्रबुधशुक्रसुरेज्य- W °शुक्राः R 120b संविनयेन हीनं [illegible] 120c-d in W:

धनं धान्यं बहुलप्रतापं
राज्यार्थलाभं बहुकीर्तियुक्तं

120c सत्येन युक्तं S, सत्येन युक् R col. om. BCILO chapter col. श्री° om. DFIR शत्रवाश्रय° FS, शत्रुश्रय° DR

# षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

कामाश्रितस्तीक्ष्णकरः सचन्द्रो
नरं प्रसूते व्यथया समेतम् ।
सदातुरं धर्मविवर्जिताङ्गं
गुणैर्विहीनं बहुमाययाढ्यम् ॥ १ ॥
कामाश्रितस्तीक्ष्णकरः सभौमो
नरं प्रसूते परवादरक्तम् ।
दानेन हीनं क्षतपीडिताङ्गं
गुरुद्विजानां निरतं नृशंसम् ॥ २ ॥
कामाश्रितस्तीक्ष्णकरः ससौम्यो
नरं प्रसूते कुकलत्रभाजम् ।
नपुंसकं कामसुखैर्विहीनं
निरर्थवाक्यं निजबन्धुयुक्तम् ॥ ३ ॥
कामाश्रितस्तीक्ष्णकरः सजीवो
नरं प्रसूतेऽल्पसुखं कृतघ्नम् ।
नृशंसवाक्यं परपाकपुष्टं
मायाप्रसक्तं बहुदुःखितं च ॥ ४ ॥
कामाश्रितस्तीक्ष्णकरः सशुक्रो
नरं प्रसूते परपाकभाजम् ।
सेवानुरक्तं बहुपापयुक्तं
विमुक्तशान्तं धनवर्जितं च ॥ ५ ॥

ABCDFILORSW

1b च व्ययं C 1d °मानभाजं F 2a स्वसौम्यो F 2b परदार° ADL 2c क्षित° D, क्षय° BCILSW 2d नितरं B 3d निज°—4c °वाक्यं om. BCILW, but 4a-d follows 4c in I 4c °पाप° FW °कष्टं W, °युक्तं S for 4d W has :

कामाश्रितस्तीक्ष्णकरो गुरुश्च
नरं प्रसूते बहुलं प्रतापं
धनं धान्यं बहुरत्नलाभं
वस्त्रादिलभं बहुकीर्तियुक्तं

5b प्रसूते om. L °पाप° F 5d विमुक्तवंतं L, विमुक्ततं BW

कामाश्रितस्तीक्ष्णकरः ससौरो
नरं प्रसूते रतसौख्यहीनम् ।
सुदुष्टदारं बहुशत्रुपक्षं
रोगातुरं भीतिसमन्वितं च ॥ ६ ॥

कलत्रगः शीतकरः सभौमो
नरं प्रसूते जठरार्तिभाजम् ।
विवेकशास्त्रार्थविहीनमुग्रं
खलप्रसङ्गात्समहाभयं च ॥ ७ ॥

कलत्रगः शीतकरः ससौम्यो
नरं प्रसूते शुभदारभाजम् ।
भोगान्वितं सत्यदयासमेतं
प्रभूतपुत्रं प्रियबन्धुवर्गम् ॥ ८ ॥

कलत्रगः शीतकरः सजीवो
नरं प्रसूते बहुशास्त्ररक्तम् ।
प्रभूतवित्तं सुभगं मनोज्ञं
नरेन्द्रपूजासहितं सदैव ॥ ९ ॥

कलत्रगः शीतकरः सशुक्रो
नरं प्रसूते शुभदाररक्तम् ।
नानार्थभोगैः सजनैः समेतं
प्रभूतसौख्यं मतिसंमतं च ॥ १० ॥

ABCDFILORSW

6b प्रसूते om. L 6d नीति° W 7b प्रसूते om. L 8a = 11a in CI 8b सुतदार° C 8c सभ्य° S 9d °पूज्य° F 10b = 8b in DFRS 10b प्रसूते om. L 10c °भागैः I 10d मतसंयुतं DFRS

कलत्रगः शीतकरः ससौरो
नरं प्रसूते रुजया समेतम् ।
सुकातरं कामपरं नृशंसं
स्वभृत्ययुक्तं परदाररक्तम् ॥ ११ ॥

सौम्यान्वितो भूमिसुतः कलत्रे
नरं प्रसूते कुटिलं हृदिस्थम् ।
कौटिल्ययुक्तं शुभया विहीनं
निरस्तपुत्रं विकलं सदैव ॥ १२ ॥

जीवान्वितो भूमिसुतः कलत्रे
नरं प्रसूते प्रियदुष्टसङ्गम् ।
व्यर्थाश्रमं पापकदर्थिताङ्गं
नरेन्द्रसेवाप्तमहारिसंघम् ॥ १३ ॥

शुक्रान्वितो भूतनयः कलत्रे
नरं प्रसूते जनतानिरस्तम् ।
विहीनकोशं क्षतजार्तदेहं
पराभिभूतं नयधर्महीनम् ॥ १४ ॥

कामाश्रितो भूतनयः ससौरो
नरं प्रसूते बहुरोगभाजम् ।
क्षीणाङ्गमार्तं पिशुनस्वभावं
सुदुष्टकर्माणमतिप्ररूढम् ॥ १५ ॥

---

ABCDFILORSW

11a = 8a in F    11b प्रसूते om. L    11d सुभृत्य° L    12b हृदिस्तं FR    12c शुतया A, सुतया O, म्युभया S, शतधा CI, यतधा LW, यत्तथा B विनीतं BCDFILRW    12d विकलं om. BLW    13b प्रसूते om. L    14b °भिरामं W    15a ससौम्यो F    15c तीक्ष्णांग° BILOW, तीक्ष्णंग° AC °मार्ति LO, °मार्त्यं S

कामाश्रितः सोमसुतः सजीवो
नरं प्रसूते बहुबुद्धिसत्यम् ।
सुगर्वितं लौल्ययुतं प्रदग्धं
महाव्ययं कामनिपीडिताङ्गम् ॥ १६ ॥

कामाश्रितः सोमसुतः सशुक्रो
नरं प्रसूते सुकलत्रभाजम् ।
श्रद्धान्वितं भोगसमृद्धगात्रं
त्रपाविहीनं दयिताकृतघ्नम् ॥ १७ ॥

कामाश्रितः सोमसुतः ससौरो
नरं प्रसूते कुकलत्रभाजम् ।
कामार्तदेहं व्यसनैः समेतं
पराभिभूतं गुणवर्जितं च ॥ १८ ॥

कामाश्रितो देवगुरुः सशुक्रो
नरं प्रसूते बहुरोगयुक्तम् ।
वित्तेश्वरं भव्यतनुं प्रशस्तं
कीर्त्यान्वितं ब्राह्मणदेवभक्तम् ॥ १९ ॥

कामाश्रितो देवगुरुः ससौरो
नरं प्रसूते वनितार्जिताङ्गम् ।
स्त्रीवित्तभक्षं क्षतबुद्धिसत्यं
मिषान्वितं पापसमन्वितं च ॥ २० ॥

ABCDFILORSW

16b °सम्यं S, °नित्यं D, °भाजं C 16c लौम्य° D °युक्तं F 17d कया° D, नया° F 18b प्रसूते om. L मुकलत्र° DFS after 18b DF repeat 17c-d 19a कामाथितो F 19b प्रसूते om. L बहुभोग° DF 19c वित्तस्थिरं S ° तनं L, °तम F प्रशक्तं C 19d °भाजं S 20a दैत्यगुरुः W 20c °वृत्त° O °भक्तक्षं F, °भक्तं D 20d मित्रा° ABCILOW पापासमन्वितं om. DF

कामाश्रितो दैत्यगुरुः ससौरो
नरं प्रसूते बहुशत्रुताढ्यम् ।
अभक्ष्यभक्षं परदाररक्तं
व्यपेतलज्जं परपोषकं च ॥ २१ ॥

एवं द्विकल्पाः ॥

सूर्येन्दुभौमा यदि कामसंस्था
नरं प्रकुर्वन्ति रुजार्तदेहम् ।
लौल्यान्वितं कामनिपीडिताङ्गं
गुणैर्विहीनं वनिताजितं च ॥ २२ ॥

रवीन्दुसौम्या यदि कामसंस्था
नरं प्रकुर्वन्ति सुतैर्विहीनम् ।
कुस्त्रीषु रक्तं कठिनस्वभावं
क्षमान्वितं भाग्यसमन्वितं च ॥ २३ ॥

रवीन्दुजीवाश्च कलत्रसंस्था
नरं प्रकुर्वन्ति रुजार्तदेहम् ।
स्त्रीचंचलं कामपरं नृशंसं
कुपुण्यसेवानिरतं सदैव ॥ २४ ॥

सूर्येन्दुशुक्रा यदि कामसंस्था
नरं प्रकुर्वन्ति विनष्टदारम् ।
ईर्ष्याप्रकोपार्जितभूरिवैरं
विदेशभाजं गुरुभिर्विरुद्धम् ॥ २५ ॥

ABCDFILORSW

21b प्रसूते om. L 21c अभक्ष° cod. 22c श्रमा° D 22d वनितार्जितं F 23b प्रकुर्वंति om. L 23d श्रमा° FRS भाग° O 24c कान° C 24d कुपण्य° S 25b प्रकुर्वंति om. L विनिष्ट° BI 25c इर्ष्यो° F, सृष्या° W

सूर्येन्दुसौरा यदि कामसंस्था
नरं प्रकुर्वन्ति मतिप्रहीनम् ।
साधुप्रहीनं खललोकरक्तं
भण्डस्वभावं नयशास्त्रमुक्तम् ॥ २६ ॥

सूर्यारसौम्या यदि कामसंस्था
नरं प्रकुर्वन्ति गतप्रभावम् ।
भोगैर्विमुक्तं परपाकरक्तं
पराश्रयं पापमतिं सदैव ॥ २७ ॥

सूर्यारजीवा यदि कामसंस्था
नरं प्रकुर्वन्ति पराभिभूतम् ।
कुसंगतं दुःकृतकर्मरक्तं
निन्द्यं सतां सर्वजनैर्विहीनम् ॥ २८ ॥

सूर्यारशुक्रा यदि कामसंस्था
नरं प्रकुर्वन्ति विशिष्टहीनम् ।
गतघृणं पापमतिं रुजाढ्यं
विवेकविद्यारहितं सदैव ॥ २९ ॥

सूर्यारसौरा यदि कामसंस्था
नरं प्रकुर्वन्ति कुरूपदेहम् ।
कुशीलदारं कुमतिं कृतघ्नं
भयान्वितं कामतनुं नृशंसम् ॥ ३० ॥

---

ABCDFILORSW

26b-27a om. C 26b प्रकुर्वंनि om. L मति° ] विनिश्चति° W 26c °प्रदीनं W खलु D °योक° A 26d षंढ° W, जड° L बहुशास्त्र° L 27b प्रकुर्वंति om. L 27c विरक्तं L 28d निष्वं B, नियं F 29b प्रकुर्वंति om. L 30a = 27a in BCL 30a सप्तमस्था W 30b प्रकुर्वंति om. L नयेन हीनं W after 30b W adds: सन्तानहीनं...बंधुवर्गं वैरं
धनव्ययं कांतिभयं विवादं
सूर्यारसौम्या यदि कामसंस्था (27a)
then follows 30b-d

कामस्थिताः सूर्यबुधामरेज्या
नरं प्रकुर्वन्ति कुबुद्धिभाजम् ।
भयान्वितं मृष्टजनैर्विमुक्तं
कृपाविहीनं निधनं कुचेलम् ॥ ३१ ॥

कामस्थिताः सूर्यबुधासुरेज्या
नरं प्रकुर्वन्ति खलेषु रक्तम् ।
सुनिर्घृणं चौर्यपरं कुदारं
विज्ञानहीनं कुधिया समेतम् ॥ ३२ ॥

कामस्थिताः सूर्यबुधार्कपुत्रा
नरं प्रकुर्वन्ति विरूपगात्रम् ।
सदातुरं कुत्सितदाररक्तं
सुकातरं रन्ध्रपरं खलं च ॥ ३३ ॥

कामस्थिताः सूर्यसुरेज्यशुक्रा
नरं प्रकुर्वन्ति दयाविहीनम् ।
रोगानुरागं निजदारमुक्तं
कुसङ्गतं शास्त्रपराङ्मुखं च ॥ ३४ ॥

कामस्थिताः सूर्यसुरेज्यसौरा
नरं प्रकुर्वन्ति विरक्तदारम् ।
विरक्तपौरं गतमानसत्यं
दीनस्वभावं भयकातरं च ॥ ३५ ॥

ABCDFILORSW

31a सूर्यसुतामरेज्या S 31b-32a om. BCILW 31c सृष्ट° O, सुष्ट° F, सृष्ट° DR, सुष्टु° S 32a = 31a in S 32b प्रकुर्वंति om. L 32d-33d om. D 32d विद्या° CW °विहीनं CILW 33 om. BCILW 33b सदानुरक्तं F 33d रंध्रपरं om. O खलं च om. A 34a कामाश्रिताः LW 34b प्रकुर्वंति om. L 34c °दाररक्तं F 35a कामाश्रिताः LW

कामाश्रिताः सूर्यसितार्कपुत्रा
नरं प्रकुर्वन्ति सुकामयुक्तम् ।
प्रभूतसौख्यं सुरतप्रगल्भं
जितेन्द्रियं दानवरैः समेतम् ॥ ३६ ॥

कामाश्रिताश्चन्द्रकुजज्ञसंज्ञा
नरं प्रकुर्वन्ति कुरूपवेषम् ।
सुबुद्धिसन्दीनतमं नृशंसं
विनष्टदारं मतिवर्जितं च ॥ ३७ ॥

कामाश्रिताश्चन्द्रकुजामरेज्या
नरं प्रकुर्वन्ति हितं सुसत्यम् ।
विदग्धदारं रणरागभाजं
धर्मान्वितं कामपरं सदैव ॥ ३८ ॥

कामाश्रिताश्चन्द्रकुजासुरेज्या
नरं प्रकुर्वन्ति कुचैलमुग्रम ।
पराङ्मुखं साधुजनस्य नित्यं
सुनिष्ठुरं गर्हितसर्वकृत्यम् ॥ ३९ ॥

कामाश्रिताश्चन्द्रकुजार्कपुत्रा
नरं प्रकुर्वन्ति सुसाधुरक्तम् ।
मायाविहीनं श्रुतशास्त्ररक्तं
हितं गुरूणां प्रणतं सुराणाम् ॥ ४० ॥

ABCDFILORSW

order in W: 37, 36 36a सूर्यसुतार्कपुत्रा CIL 36b प्रकुर्वंति om. L, प्रसूते W 37a °कुजानृसंज्ञा RS, °कुजामरेज्या F, °कुजकुजज्ञा D 37b प्रकुर्वंति om. L 37c °संदान° AFIL, °दान° D 38b प्रकुर्वंति om. L हितं om. F सुसत्यं om. O 38c रणरंग° CD 38d धर्माश्रितं CD order in W: 39a 40b-d, 40a, 39b-d 40b प्रसूते W ससाधु° DI, सासाधु° W 40c श्रुति° L 40d प्रणवं FR

कामाश्रिताश्चन्द्रबुधामरेज्या
नरं प्रकुर्वन्ति सुभोगभाजम् ।
विदग्धवाक्यं वनितास्वभीष्टं
शास्त्रानुरक्तं रणकोविदं च ॥ ४१ ॥

कामाश्रिताश्चन्द्रबुधासुरेज्या
नरं प्रकुर्वन्ति सुरेज्ययाढ्यम् ।
विशिष्टपुण्यं गुरुतासमेतं
सुशीलचेष्टं विनयान्वितं च ॥ ४२ ॥

कामाश्रिताश्चन्द्रबुधार्कपुत्रा
नरं प्रकुर्वन्ति धरान्वितं च ।
प्रभूतकोशान्नचयैः समेतं
श्रद्धासमेतं तनयप्रधानम् ॥ ४३ ॥

कामाश्रिताश्चन्द्रसुरेज्यशुक्रा
नरं प्रकुर्वन्ति सुधर्मरक्तम् ।
स्त्रीणामभीष्टं भयवर्जिताङ्गं
गुणाधिकं कीर्तिसमन्वितं च ॥ ४४ ॥

कामाश्रिताश्चन्द्रसुरेज्यसौरा
नरं प्रकुर्वन्ति नरेन्द्रपूज्यम् ।
मन्त्रप्रधानं गजवाजिभाजं
जितेन्द्रियं तीर्थसमाश्रयं च ॥ ४५ ॥

ABCDFILORSW

41b-42a om. W 41b सुरोग° C 42 om. CO 42b प्रकुर्वंति om. L °माढ्यं AI, °साढ्यं DFRS 42d विशालचेष्टं D 43d श्रद्धासमेतं om. LO 44c गुणवर्जि° CD 45b प्रकुर्वंति om L 45c मंद्र° CD 45d तीर्थश्रमाचर्यं L च om. A

चन्द्रासुरेज्यार्कसुताः कलत्रे
नरं प्रकुर्वन्ति रतप्रगल्भम् ।
प्रभूतशास्त्रार्थविशिष्टबुद्धिं
गुणप्रधानं धनसंयुतं च ॥ ४६ ॥

भौमज्ञजीवा यदि कामसंस्था
नरं प्रकुर्वन्ति सतां सदोक्तम् ।
प्रभूतहर्म्यं प्रणतारिपक्षं
क्षमासमेतं सुजनानुगं च ॥ ४७ ॥

भौमज्ञशुक्रा यदि कामसंस्था
नरं प्रकुर्वन्ति धनप्रधानम् ।
कृषीवलं पुण्यपरं प्रगल्भं
सुसंस्तुतं बन्दिभिरेव नित्यम् ॥ ४८ ॥

भौमज्ञसौरा यदि कामसंस्था
नरं प्रकुर्वन्ति कदर्यताढ्यम् ।
गतश्रियं मांसरतं सुतीव्रं
वधात्मकं कीर्तिविवर्जितं च ॥ ४९ ॥

भौमामरेज्याभृगुजाः कलत्रे
नरं प्रसूतेऽतिविशालनेत्रम् ।
त्रपान्वितं कीर्तिसुखैः समेतं
प्रियापरं ब्राह्मणसंमतं च ॥ ५० ॥

ABCDFILORSW

46b रति° C, रते S 46d गुरु° C °प्रधानं धन° om. D नय° L °संकनं F 47b प्रकुर्वंति om. L 47d °नुरागं S, °नुरक्तं W 48b प्रकुर्वंति om. L 48d सुस्तुश्रुतं D, सुसंरक्तत W, सुरक्ततं L 49b प्रकुर्वंति om. L 49c गताश्रियं C, गताश्रितं W 49d वध्या° L 50a °मरेज्य° LW 50b प्रसूते om. L पिविशाल° FR, सुविशाल° S 50c कृपा° BW 50d प्रियावहं AFORS

भौमामरेज्यार्कसुताः कलत्रे
नरं प्रकुर्वन्ति बहुप्ररोषम् ।
प्रभूतवैरं विधिना विहीनं
रोगार्दिताङ्गं खललोकभाजम् ॥ ५१ ॥

भौमासुरेज्यार्कसुताः कलत्रे
नरं प्रकुर्वन्ति शुभान्वितं च ।
सुराज्यभृत्यं परपक्षहीनं
नयान्वितं बान्धवपूजितं च ॥ ५२ ॥

सौम्यामरेज्याभृगुजाः कलत्रे
नरं प्रकुर्वन्ति नृपप्रधानम् ।
सुभूरिकोशं बहुसौख्ययुक्तं
विशिष्टदारं जनवत्सलं च ॥ ५३ ॥

सौम्यामरेज्यार्कसुताः कलत्रे
नरं प्रकुर्वन्ति यशोनिधानम् ।
नानार्थशास्त्रैः सदनैश्च युक्तं
पुण्यप्रधानैकतरं जनानाम् ॥ ५४ ॥

सौम्यासुरेज्यार्कसुताः कलत्रे
नरं प्रकुर्वन्ति नरेन्द्रपूज्यम् ।
जितारिपक्षं क्षितिवित्तलाभं
सदा सुधर्मं प्रवरं विदग्धम् ॥ ५५ ॥

ABCDFILORSW

51b-52a om. L    51d रोगार्हितांगं F  खलु C    52a = 55a in F
52b प्रकुर्वंति om. L  सुभातिसंज्ञं FRS    52d भया° L    53a °मरेज्य° W
53d °वल्लभं CD    54 om. BW    54a = 55a in D    54b-55a om. L
54b यशोतिधारं F    54d पण्य° IORS    °प्रधानं कितरं FRS    55b-56a om. S
55b प्रकुर्वंति om. L

जीवासुरेज्यार्कसुताः कलत्रे
　　नरं प्रकुर्वन्ति चतुष्पदाढ्यम् ।
सत्यानुरक्तं बहुलर्द्धिसत्यं
　　शीलान्वितं ब्राह्मणसंमतं च ॥ ५६ ॥

एवं त्रिविकल्पाः ॥

सूर्येन्दुभौमेन्दुसुताः कलत्रे
　　नरं प्रकुर्वन्ति हतप्रतापम् ।
गतघृणं पापकथानुरक्तं
　　व्यर्थश्रमं मन्युसमन्वितं च ॥ ५७ ॥

सूर्येन्दुभौमामरपूजिताङ्गा
　　नरं प्रकुर्वन्ति सतामभीष्टम् ।
दयान्वितं भूरिकलत्रभाजं
　　प्रभूतपुत्रं सुहृदामभीष्टम् ॥ ५८ ॥

सूर्येन्दुभौमासुरपूजिताङ्गा
　　नरं प्रकुर्वन्ति कलत्रहीनम् ।
परापवादोत्सुकमल्पसौख्यं
　　सुनिष्ठुरं धर्मपराङ्मुखं च ॥ ५९ ॥

सूर्येन्दुभौमार्कसुताः कलत्रे
　　नरं प्रकुर्वन्ति सुदुष्टदारम् ।
सन्तानहीनं विधनं नृशंसं
　　पुण्यैः प्रमुक्तं कृतकस्वभावम् ॥ ६० ॥

ABCDFILORSW

56b प्रकुर्वंति om. L 56c बहुपद्धि° FRS 56d ब्राह्मणतत्परं FRS 57b प्रकुर्वंति om. L 58b प्रकुर्वंति om. L 59a = 58a in D 59b om. L 59c °वादोत्सुकनल्पसत्यं FRS 60b प्रकुर्वंति om. L °दानं S 60c विधनं om. A, विधिनं BW 60d प्रयुक्तं cod.

सूर्येन्दुसौम्यामरपूजिताङ्गाः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
नानाकलत्रैः कृतकस्वभावैः
समन्वितं निन्द्यतमं सदैव ॥ ६१ ॥

सूर्येन्दुसौम्यासुरपूजिताङ्गाः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
सुकुष्ठभाजं कुकलत्रसंघैः
समन्वितं तीव्रतमं कफाढ्यम् ॥ ६२ ॥

सूर्येन्दुसौम्यार्कसुताः कलत्रे
नरं प्रकुर्वन्ति कुलोकरक्तम् ।
वेश्यापतिं पापमतिं कृतघ्नं
पित्तार्दितं दुष्टमतिं विसंज्ञम् ॥ ६३ ॥

सूर्येन्दुजीवासुरपूजिताङ्गाः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
मलीमसं शास्त्रविहीनकृत्यं
विद्वेषरक्तं मतिवर्जितं च ॥ ६४ ॥

सूर्येन्दुजीवार्कसुताः कलत्रे
नरं प्रसूते स्वसुतैर्विहीनम् ।
बह्वानृतं शास्त्रकथानुरक्तं
कृशाङ्गयष्टिं कलहप्रियं च ॥ ६५ ॥

ABCDFILORSW

61c °स्वभावं D 61d नेंद्य° D, नघु° D 62b संजनयंति मर्त्यं om. DL 62c सुकष्ट° RSW सुकलत्र° W °संख्यैः B, °संस्थैः W 62d कटाक्ष्यं L 63c कृतज्ञं C 63d विसंघज्ञं F, विसंघं corr. to विसंज्ञं R 64b संजनयंति मर्त्यं om. L 65b श्वसुतै° LRW, श्वसुते° F, त्रसुतै° S 65c बहनृतं S, बह्वानृतं D, बह्वाशिनं L 65d °प्रहृष्टं FRS

सूर्येन्दुशुक्रार्कसुताः कलत्रे
नरं प्रकुर्वन्ति निशान्धमुग्रम् ।
बहुव्ययं हानियुतं गतस्वं
श्रुतप्रमुक्तं कुधिया समेतम् ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गाः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
व्यथाधिकं लाभसुखैर्विहीनं
सुनिर्दयं कामसमन्वितं च ॥ ६७ ॥

सूर्यारसौम्यासुरपूजिताङ्गाः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
सदाश्रमं दुष्टतरं कृशाङ्गं
कलत्रदोषार्दितमानसं च ॥ ६८ ॥

सूर्यारसौम्यार्कसुताः कलत्रे
नरं प्रकुर्वन्ति कुरूपदारम ।
दुश्चेष्टितासक्तगुरुप्रकोपं
प्रज्ञाविहीनं नियमैर्विहीनम् ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्गाः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
सुनिर्घृणं कामकथानुरक्तं
मायापटुं कामपरं कुविघ्नम् ॥ ७० ॥

---

ABCDFILORSW

66c बहुव्ययं om. A °व्यथं FR, °व्य° BL 66d °प्रयुक्तं CD सुधिया W, धिया F 67b-68a om. L 67b=68b in S 67b मर्त्यं om. C 67c व्यया° I 68a=67a in CDIW 68c दुष्टरतं D 69c दुच्चेष्टिता° I, दुश्रेष्टिता° C 69d °विहीनैर्नियमै° ABCFIOS 70b कामस्थिताः RS मर्त्यं om. D 70d °पटं CD, °परं ALW, °पटुं FI कामपरं om. A, पानरतं FRS कुविघ्नं A

सूर्यारजीवार्कसुताः कलत्रे
नरं प्रकुर्वन्ति धिया विहीनम् ।
विद्वेषितारं जनताविरुद्धं
पैशुन्यरक्तं बहुदोषभाजम् ॥ ७१ ॥

सूर्यारशुक्रार्कसुताः कलत्रे
नरं प्रकुर्वन्ति विहीनकोशम् ।
व्यपेतलज्जं परुषस्वभावं
पापप्रसिद्धं विरतं स्ववर्गे ॥ ७२ ॥

सूर्येन्दुपुत्रामरपूज्यशुक्राः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
ओजोविहीनं कृतकस्वभावं
प्रियामिषं शत्रुपराजितं च ॥ ७३ ॥

सूर्येन्दुपुत्रामरपूज्यसौराः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
व्यपेतबुद्धिं श्रुतशास्त्रहीनं
दौर्भाग्ययुक्तं कलहप्रियं च ॥ ७४ ॥

॥ ७५ ॥

सूर्यामरेज्याभृगुजार्कपुत्राः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
बहुप्रकोपं परुषस्वभावं
सुतार्थहीनं परवंचकं च ॥ ७६ ॥

ABCDFILORSW

71c विद्वेष° FLRW जनिता° D 72c °लज्यं D पुरुष° C 72d °प्रवृतं W विशं A श्ववर्गे BI 73 om. F 73a : सूर्येन्दुपूज्यशुका विनयेन मर्त्यं W 73b कामस्थिताः BRS संजनयंति मर्त्यं om. D 74c श्रुति° L 75 om. cod. 76a °मरेज्य° LW 76c पुरुष° C 76d सुतीर्थ° W, स्वतीर्थ° L

चन्द्रारसौम्यामरपूजिताङ्गाः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
कल्याणवन्तं सुभगं मनोज्ञं
प्रसन्नचित्तं प्रभुतासमेतम् ॥ ७७ ॥

चन्द्रारसौम्यासुरपूजिताङ्गाः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
सुरूपदारं नयनाभिरामं
बहुप्रजं नीतिसमन्वितं च ॥ ७८ ॥

चन्द्रारसौम्यार्कसुताः कलत्रे
नरं प्रकुर्वन्ति सुधीरचित्तम् ।
उदारचेष्टं सुधिया समेतं
सुसंमतं देवगुरुद्विजानाम् ॥ ७९ ॥

चन्द्रारजीवासुरपूजिताङ्गाः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
ईर्ष्याविहीनं नियमैः समेतं
सुनिःस्पृहं धर्मपरं विदग्धम् ॥ ८० ॥

चन्द्रारजीवार्कसुताः कलत्रे
नरं प्रकुर्वन्ति मनोज्ञरूपम् ।
स्त्रीवल्लभं चारुविशालनेत्रं
प्रियंवदं पार्थिवसंमतं च ॥ ८१ ॥

ABCDFILORSW

77b कलत्रगाः FS सजनयंति FRS जनयंति मर्त्यं om. C 77c कल्याणचेष्टं FRS 78 om. W 78b जनयंति मर्त्यं om. CD 79c मयेतं A 79d-80c om. W 79d सुसंमतं om. D 80b मर्त्यं om. D 81c चारविलास° W

चन्द्रारशुक्रार्कसुताः कलत्रे
नरं प्रकुर्वन्ति सतामभीष्टम् ।
सत्यान्वितं ज्ञातिरतं प्रगल्भं
भयेन हीनं सुनयं सुशीलम् ॥ ८२ ॥

चन्द्रज्ञजीवासुरपूजिताङ्घ्राः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
प्रियातिथिं धर्मपरं सुशीलं
प्रकर्षसत्यं गुरुवत्सलं च ॥ ८३ ॥

चन्द्रज्ञजीवार्कसुताः कलत्रे
नरं प्रकुर्वन्ति सतामभीष्टम् ।
सुतान्वितं धर्मरुचिं प्रसन्नं
सुरूपदारं सुधिया समेतम् ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुताः कलत्रे
नरं प्रकुर्वन्ति विनीतवेषम् ।
विज्ञातकर्माणमतिप्रगल्भं
विधानदक्षं क्षतशत्रुपक्षम् ॥ ८५ ॥

चन्द्रामरेज्याभृगुजार्कपुत्राः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतलज्जं शुभदारभाजं
जितेन्द्रियं पापविमुक्तदेहम् ॥ ८६ ॥

भौमज्ञजीवासुरपूजिताङ्घ्राः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
सम्पन्नभाग्यं गुरुतासमेतं
नरेन्द्रतुल्यं शुभदं सुसत्यम् ॥ ८७ ॥

---

ABCDFILORSW

83 om. W 83b जनयंति मर्त्यं om. C 84d स्वरूप° L 85b विहीन° F, विनिप्त° I °शेषं CD 85c विद्यात° FRS 85d जितशत्रु° C 86a °मरेज्य° SW 87 om. B 87a सौम° AO, सौम्य° IW

भौमज्ञजीवार्कसुताः कलत्रे
नरं प्रकुर्वन्ति महाकलत्रम् ।
धर्मध्वजं सत्यसुखैः समेतं
प्रियानुकम्पं परमर्दनं च ॥ ८८ ॥

भौमज्ञशुक्रार्कसुताः कलत्रे
नरं प्रकुर्वन्ति विशिष्टरक्तम् ।
भव्याकृतिं धन्यतमं सुरूपं
कुलप्रधानं विनयान्वितं च ॥ ८९ ॥

भौमामरेज्याभृगुजार्कपुत्राः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
बहुप्रतापं प्रभुताबलाढ्यं
सुसंस्तुताङ्गं गतपातकं च ॥ ९० ॥

सौम्यामरेज्याभृगुजार्कपुत्राः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
विदग्धदारं रिपुभिर्विहीनं
रिपुप्रधानं सुनयं सदैव ॥ ९१ ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्याः
कलत्रगाः संजनयन्ति मर्त्यम् ।
क्लीबं कुरूपं कुधिया समेतं
दरिद्रताढ्यं कठिनस्वभावम् ॥ ९२ ॥

---

ABCDFILORSW

88c °मुखैः I  88d °मर्दकं DW  89c भया° F, भिव्या° S °कृतं CD 90a °मरेज्य° LSW  90b जनयंति मर्त्य om. C  90c-91b om. D  90c प्रचुरावलाढ्यं FRS  90d सुभं BCFR, शुभ° ILSW °श्रुतांगं LW  91a °मरेज्य° LSW  91b जनयंति मर्त्य om. C

रवीन्दुभौमज्ञसिता मनुष्यं
कलत्रसंस्था जनयन्ति मर्त्यम् ।
मन्दस्वभावं कफपीडिताङ्गं
मतिप्रहीनं विकृतं कुदारम् ॥ ९३ ॥

रवीन्दुभौमज्ञदिनेशपुत्राः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
कुपुत्रकन्याजनकं कृशाङ्गं
यूकाकृतिं धर्मविहीनकृत्यम् ॥ ९४ ॥

रवीन्दुभौमामरपूज्यशुक्राः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
स्त्रीचंचलं कामकथाप्रसक्तं
भीरुस्वभावं बहुदोषभाजम् ॥ ९५ ॥

रवीन्दुभौमामरपूज्यसौराः
कलत्रगाः संजनयन्ति मर्त्यम् ।
तेजोविहीनं निकृतिप्रधानं
प्रमादभाजं जनताविरुद्धम् ॥ ९६ ॥

रवीन्दुभौमासुरपूज्यसौराः
कलत्रगाः संजनयन्ति मर्त्यम् ।
ईर्ष्याधिकं कामनिपीडिताङ्गं
विरुद्धदारं मतिवर्जितं च ॥ ९७ ॥

ABCDFILORSW

order in D: 94,93 93b जनयंति मर्त्यं om. C 93d मतिर्विहीनं C, प्रतिप्रहारी F, प्रतीप्रही RS order in W: 95,94 94b = 96b in D 94b जनयंति मर्त्यं om. C 94c-95b om. B 94d मूका° LRSW, मूखा° F 95b जनयंति मर्त्यं om. C 95c °प्रसन्नं W, °नुरक्तं D 96a = 97a in W 96b = 95b in CW 96b मर्त्यं om. D 96c निकृत° F, विकृत° C °स्वभावं C 97a = 96a in C 97a °शुक्राः F 97b = 95b in F 97b संजनयंति मर्त्यं om. C

रवीन्दुसौम्यामरपूज्यशुक्राः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
लज्जाविहीनं व्रतशास्त्रहीनं
पराभिभूतं स्वजनैर्विहीनम् ॥ ९८ ॥

रवीन्दुसौम्यामरपूज्यसौराः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
यशोविहीनं परवंचनोक्तं
प्रभूतशत्रुं परतर्ककं च ॥ ९९ ॥

रवीन्दुसौम्यासुरपूज्यसौराः
कलत्रगाः संजनयन्ति मर्त्यम् ।
दुष्टाशयं यानविनाशनार्थं
हृद्रोगिणं गर्वसमन्वितं च ॥ १०० ॥

रवीन्दुजीवासुरपूज्यसौराः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
दयाविहीनं परपाकपुष्टं
प्रसिद्धिहीनं कुकलत्रिणं च ॥ १०१ ॥

सूर्यारसौम्यामरपूज्यशुक्राः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभाविहीनं विधनं विपुत्रं
कृतघ्नचेष्टं परुषस्वभावम् ॥ १०२ ॥

ABCDFILORSW

98b जनयंति मर्त्यं om. C 98c वरशास्त्र° W 98d om. D 98d विरुद्धं S 99b = 100b in C 99b मर्त्यं om. CD 99d °तर्कुकं OR, °तर्कीकं I 100a = 99a in I 100b °संस्थाः C मर्त्यं om. C 100c पान° ORS, यानि° D 100d सर्व° D 101c पाकपुष्टं I, विरमाककुष्टं F 101d प्रसिद्ध° CDORS, श्रासिद्ध° F कुकलत्रगं F, कुकलत्रर्णं R 102b मर्त्यं om. C 102c विधिनं B 102d °कष्टं पुरुष° I

सूर्यारसौम्यामरपूज्यसौराः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
निर्लज्जमश्रोत्रियमिष्टपापं
निसर्गदुष्टाशयमातुरं च ॥ १०३ ॥

सूर्यारसौम्यासुरपूज्यसौराः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
मूर्खप्रधानं प्रिययाल्पकृत्यं
कुपुण्यरक्तं कुमतिं सदैव ॥ १०४ ॥

सूर्यारजीवासुरपूज्यसौराः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
विश्रीकमार्तं व्यसनैरुपेतं
सुकातरं बान्धवनिन्दितं च ॥ १०५ ॥

सूर्यज्ञजीवासुरपूज्यसौराः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
सुदुष्टदारं विनयेन हीनं
सदा क्षुधार्तं मतिवर्जितं च ॥ १०६ ॥

चन्द्रारसौम्यामरपूज्यशुक्राः
कलत्रगाः संजनयन्ति मर्त्यम् ।
दयासमेतं सुनयं सुसत्यं
सतामभीष्टं सुकलत्रभाजम् ॥ १०७ ॥

ABCDFILORSW

103a = 104a in L  103b-104b in L  103b जनयंति मर्त्यं om. C  103c °मश्रोत्रयं CIO  103d °मासरं W  104a = 103a in D  104b मर्त्यं om. C  105c विश्रीकमार्तं om. F  निःश्रीक° W, निश्रीक ILOS  °मार्ति° ABI  106a °सौम्या C  106b कलत्रगा C  जनयंति मर्त्यं om. C  106c विजयेन O  106d सठा AC  क्षुधा° om. I  107b मर्त्यं om. CD  107c-108b om. BILW

चन्द्रारसौम्यामरपूज्यसौराः
कलत्रगाः संजनयन्ति मर्त्यम् ।
सुधर्मरक्तं प्रमदास्वभीष्टं
विदग्धवाक्यं प्रभुतासमेतम् ॥ १०८ ॥

चन्द्रारसौम्यासुरपूज्यसौराः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
क्षमान्वितं शीलधनं प्रशस्त-
मतिप्रगल्भं प्रियबान्धवं च ॥ १०९ ॥

चन्द्रारजीवासुरपूज्यसौराः
कलत्रगाः संजनयन्ति मर्त्यम् ।
तीर्थप्रसक्तं निरुजं विहीनं
दीर्घायुषं शास्त्रपरं सदैव ॥ ११० ॥

चन्द्रज्ञजीवासुरपूज्यसौराः
कामाश्रिताः संजनयन्ति मर्त्यम् ।
नरेन्द्रपूज्यं जितसर्वदुष्टं
प्रमादहीनं विविधोपचारैः ॥ १११ ॥

भौमज्ञजीवासुरपूज्यसौराः
कलत्रगाः संजनयन्ति मर्त्यम् ।
विद्वेषहीनं प्रियधर्मकृत्यं
सुसंस्तुतं साधुजनेन नित्यम् ॥ ११२ ॥

एवं पंचविकल्पाः ॥

ABCDFILORSW

108b संजनयंति मर्त्यं om. C 109b = 108b in F 109c प्रशस्त-C, प्रसक्त-L 110b = 109b in W 110b मर्त्यं om. CD 111b मर्त्यं om. CD 111c जितशत्रु° D 111d प्रसाद° W, प्रशाद° L 112a °पूजितांगाः L 112b मर्त्यं om. CDL 112d सुसंस्कृतं BLW

रवीन्दुभौमज्ञसुरेज्यशुक्राः
कलत्रगाः संजनयन्ति मर्त्यम् ।
विहीनसत्यं विधनं रुजार्तं
नरेन्द्रपीडार्दितमानसं च ॥ ११३ ॥

रवीन्दुभौमज्ञसुरेज्यसौराः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
प्रेष्यं प्रभूतारिजनैः कुचेलं
कुचैलभार्तं परवंचकं च ॥ ११४ ॥

रवीन्दुभौमज्ञसितार्कपुत्राः
कलत्रसंस्था जनयन्ति मर्त्यम् ।
रोगाभिभूतं जरया समेतं
सुदुष्टदारार्ततनुं सदैव ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
क्लेशाभिभूतं विनयप्रमुक्तं
क्षुधार्तदेहं भयसंयुतं च ॥ ११६ ॥

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
निरर्थमस्निग्धमसौख्यभाजं
सुरौद्रकार्यं कृपणस्वभावम् ॥ ११७ ॥

ABCDFILORSW

113b संजनयंति मर्त्यं om. C मर्त्यं om. L order in D: 114a-b, 115a-c जरया, 114c-115d 114a=113a in F 114b=113b in F 114b मर्त्यं om. D 114c कुचेलं om. FS °जनं SW 115b जनयंति मर्त्यं om. CL 115c जडया R, जडता° FS, जदया B, सुदया° W, दयया L 116a °शुक्राः FR 116b मर्त्यं om. DL 116c °प्रयुक्तं CFL 117a °शुक्राः FIR 117b मर्त्यं om. DL 117c °मास्निग्ध° ABCDILR

सूर्यारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
कलत्रसंस्थाः परदाररक्तं
पराभिभूतं मतिवर्जितं च ॥ ११८ ॥

चन्द्रारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
कलत्रसंस्था नृपतिं मनोज्ञं
प्रभूतकोशं सततं प्रहृष्टम् ॥ ११९ ॥

एवं षड्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
पृथ्वीपतिं भूरियशः प्रतापं
सुधर्मरक्तं दृढवाक्यरक्तम् ॥ १२० ॥

एवं सप्तविकल्पाः ॥

इति श्रीवृद्धयवने कामाश्रययोगाध्यायः

ABCDFILORSW

118a °शुक्राः FIR 118b मर्त्यं om. CDL 118c-119b om. I 119a °शुक्राः FR 119b मर्त्यं om. CDL col. om. LW 120a °शुक्राः FIR 120b मर्त्यं om. DL 120c पृथ्वी° C, पृश्वा° R, पृश्व° S 120d °वाक्यसक्तं I, °वाक्यमिष्टं FRS col. सप्त° om. W chapter col. श्री° om. FLRS सप्तमोऽध्यायः W

# सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

तीक्ष्णद्युतिश्चन्द्रयुतोऽष्टमस्थो
नरं प्रसूते बहुरोगभाजम् ।
स्वल्पायुषं स्निग्धमतिं प्रहृष्टं
व्यपेतलज्जं रणकातरं च ॥ १ ॥

तीक्ष्णद्युतिर्भौमयुतोऽष्टमस्थो
नरं प्रसूते रुधिरार्द्रदेहम् ।
लौल्यान्वितं पापसमृद्धिरक्तं
विसंज्ञमोजोरहितं गतस्वम् ॥ २ ॥

तीक्ष्णद्युतिः सौम्ययुतोऽष्टमस्थो
नरं प्रसूते कृतकस्वभावम् ।
परान्नपुष्टं परदेशभाजं
प्रतापहीनं विगताभिभूतम् ॥ ३ ॥

दिवाकरो जीवयुतोऽष्टमस्थो
नरं प्रसूते गतमानवित्तम् ।
सदा नृशंसं परदाररक्तं
सुदुष्टचित्तं मतिवर्जितं च ॥ ४ ॥

---

ABCDFILORSW

1b-2a om. A 1c स्निग्ध° I, मन्द° F प्रदुष्टं W 2b प्रसूते om. L रुधिर° B °र्तदेहं FRS, °भिदेहं W 2c लौला° I 2d विसंग° I 3a सोम° LW, संम्य° S °पातो F 3b-4a om. LW 3b कृतक° I 3d °भुति FR 4b प्रसूते om. LS °चित्तं OW 4d सुहृष्ट° I

दिवाकरः शुक्रयुतोऽष्टमस्थो
नरं प्रसूते कुधनं कुरूपम् ।
कुदेशरक्तं कुनृपान्नयुक्तं
कुकर्मसेवानिरतं जितं च ॥ ५ ॥

दिवाकरः सौरयुतोऽष्टमस्थो
नरं प्रसूतेऽतिकफप्रधानम् ।
वाताधिकं सत्यदयाविहीनं
नित्यं विदेशार्जनतत्परं च ॥ ६ ॥

चन्द्रोऽष्टमस्थः क्षितिजेन युक्तो
नरं प्रसूते विधनं विसंज्ञम् ।
रुजार्तदेहं गतमानबुद्धिं
पराजिताङ्गं परतर्ककं च ॥ ७ ॥

चन्द्रोऽष्टमस्थः शशिजेन युक्तो
नरं प्रसूते कुमतिं व्यथार्तम् ।
क्लीबस्वभावं परवंचनोक्तं
महारुजार्तं कृपणस्वभावम् ॥ ८ ॥

जीवान्वितः शीतकरोऽष्टमस्थो
नरं प्रसूते गतपुण्यकृत्यम् ।
स्वल्पायुषं दीनतमं विमूढं
खंजं कुमित्रार्जनतत्परं च ॥ ९ ॥

---

ABCDFILORSW

5a प्रज्ञयुतो W 5b प्रसूते om. L स्वरूपं F 5c कुनृपान्नयुक्तं om. D °युतं O, °रक्तं BCLW 5d युतं I after 5 W adds:

दिवाकर शुक्रयुतोऽष्टमस्थो (5a)
नरं प्रसूते कफवातयुक्तं
संतानसौख्यं बहुलप्रतापं
व्यापारलाभं महतीं प्रतिष्ठां

6b प्रसूते om. L 7 om. D 7c गतगान° FRS 7d तर्कुकं ALOR
9b प्रसूते om. L 9d षंजं FR

शुक्रान्वितः शीतकरोऽष्टमस्थो
नरं प्रसूते सुनृशंसभाजम् ।
भयान्वितं पापमतिं सुमन्युं
परापवादे निरतं सदैव ॥ १० ॥

सौरान्वितः शीतकरोऽष्टमस्थो
नरं प्रसूते कुतपोनुरक्तम् ।
व्यर्थश्रमं सर्वसुखैर्विहीनं
प्रशान्तदर्पं प्रमदानिरस्तम् ॥ ११ ॥

सौम्यान्वितो भूमिसुतोऽष्टमस्थो
नरं प्रसूते गलगण्डभावम् ।
अकालवृद्धं वनिताविहीनं
कृतघ्नताढ्यं सुनृशंसभावम् ॥ १२ ॥

जीवान्वितो भूमिसुतोऽष्टमस्थो
नरं प्रसूते कुधनैः समेतम् ।
विहीनवित्तं बहुशत्रुपक्षं
पराजिताङ्गं कृपणस्वभावम् ॥ १३ ॥

शुक्रान्वितो भूमिसुतोऽष्टमस्थो
नरं प्रसूते कृतकानुरक्तम् ।
सत्येन हीनं च दयाविहीनं
प्रतापहीनं जडतासमेतम् ॥ १४ ॥

ABCDFILORSW

10a=9a in L 10b-11a om. B 10b प्रसूते om. L सुनृपसु° D, कुनशंश° F °भावं FLRSW 10c °मन्यं FL, °मनुं A 11b कुजना° F 11c व्यर्था° ABCDL 12b गनुगंड° RS, तनुगांड° F 13b प्रसूते om. L सुधनैः W 14b प्रसूते om. L कृपण° W °स्वभावं FW 14c हीनं om. D च दयाविहीनं om. A °हतस्वं FR, °हतस्वं S 14d प्रतापहीनं om. D

सौरान्वितो भूमिसुतोऽष्टमस्थो
नरं प्रसूते विकृतं विमुक्तम् ।
सुदुष्टदारं मतिवर्जिताङ्गं
गुणैर्विहीनं परदेशभाजम् ॥ १५ ॥

सौम्योऽष्टमस्थो गुरुणा प्रयुक्तो
नरं प्रसूते गतबन्धुवर्गम् ।
विनष्टबुद्धिं परवंचनैकं
कुसुङ्गतेनार्दितमानसं च ॥ १६ ॥

सौम्योऽष्टमस्थो भृगुणा समेतो
नरं प्रसूते च सुरूपगात्रम् ।
नयेन हीनं परमानभाजं
परान्नरक्तं परसेवकं च ॥ १७ ॥

सौम्योऽष्टमस्थोऽर्कसुतेन युक्तो
नरं प्रसूते निरपत्रपाङ्गम् ।
बह्वाशिनं पापमतिं कुचैलं
पैशुन्यरक्तं मतिवर्जितं च ॥ १८ ॥

जीवोऽष्टमस्थो भृगुणा प्रयुक्तो
नरं प्रसूते बहुशत्रुवर्गम् ।
अकार्यवैरं रभसाविहीनं
स्वल्पप्रजं शास्त्रपराङ्मुखं च ॥ १९ ॥

---

ABCDFILORSW

15b प्रसूते om. L वियुक्तं F, विपुत्रं RS 16a मृगुणा S 16b = 15b in F 16c विनिष्ट° L, विनिष्ठुरं W 16c °कं—29d कीर्तिविव° om. B 16d °संगमेनार्दित° FRS, °संगमं निंदित° W 17a गुरुणा LW 17b स्वरूप° L 17c परपान° FRS 18b प्रसूते om. L °पत्रथांगं CD 18c °सिनं LO, °शाये FRS 19b प्रसूते om. L, प्रयुक्ते S

जीवोऽष्टमस्थो रविपुत्रयुक्तो
नरं प्रसूते धनधान्यहीनम् ।
प्रभूतवैरान्वितमातुरं च
विद्वेषरक्तं नितरां नृशंसम् ॥ २० ॥

शुक्रोऽष्टमस्थो रविपुत्रयुक्तो
नरं प्रसूते परदारभाजम् ।
परान्नरक्तं परसेवयाढ्यं
सदानृतं नीतिविवर्जितं च ॥ २१ ॥

एवं द्विविकल्पाः ॥

सूर्येन्दुभौमाष्टमगा मनुष्यं
कुर्वन्ति सत्याढ्यजनैर्विमुक्तम् ।
निःश्रीकमुग्रं गुणहीनमार्तं
बहुव्ययं कुत्सितसङ्गमं च ॥ २२ ॥

सूर्येन्दुसौम्याष्टमगा मनुष्यं
कुर्वन्ति दीनं कुधिया समेतम् ।
प्रभाविहीनं सुनिकृष्टसङ्गं
सदा कुशीलं सरुजं सपापम् ॥ २३ ॥

सूर्येन्दुजीवाष्टमगा मनुष्यं
कुर्वन्ति पापान्वितमिष्टदुष्टम् ।
व्यर्थश्रमं पानकथानुरक्तं
मित्रैर्निरस्तं कुकलत्रभाजम् ॥ २४ ॥

---

ABCDFILORSW

20b प्रसूते om. L • 21b प्रसूते om. L 21c °सेवानाद्यं W 21d सदानुतं W 22a °भौमाष्टमे करोति मर्त्यं W 22b कुर्वन्त्यसत्या° S, कुतर्कमभ्या° F शताढ्यं जनै° W 22d °व्ययं FLR 23a = 22a in W 23b दीनं ] दुष्टा D, मर्त्यं C 23c °संगं—24b °मिष्ट° om. A 23d सुरापं DIW 24c पाप° C 24d °भागं I

सूर्येन्दुशुक्राष्टमगा मनुष्यं
कुर्वन्ति नाथै रहितं कुचेष्टम् ।
बहुप्रकोपं विनयेन हीनं
परान्नरक्तं परवंचकं च ॥ २५ ॥

सूर्येन्दुसौराष्टमगा मनुष्यं
कुर्वन्ति सत्यार्थसुतैर्विहीनम् ।
आलस्यनिद्राव्यसनैरुपेतं
प्रतापहीनं भयसङ्कुलं च ॥ २६ ॥

सूर्यारसौम्या जनयन्ति मर्त्यं
स्थानेऽष्टमे मित्रधनैर्विहीनम् ।
कुचैलमस्निग्धमनाथवन्तं
पानप्रियं प्रीतिविवर्जितं च ॥ २७ ॥

सूर्यारजीवा जनयन्ति मर्त्यं
स्थानेऽष्टमे सत्ययशोविहीनम् ।
विशीलमार्तं कृपणस्वभावं
व्ययाधिकं कामनिपीडिताङ्गम् ॥ २८ ॥

सूर्यारशुक्राष्टमगा मनुष्यं
कुर्वन्ति शौचप्रणयेन हीनम् ।
नितान्तमस्निग्धमुरुप्रभावं
भयाकुलं कीर्तिविवर्जितं च ॥ २९ ॥

॥ ३०-५८ ॥

ABCDFILORSW

25b नाथं L    26b कुर्वंति om. L    28c विशाल° CDFIRW, विलास° L    29c °मास्निग्ध° I    °गुरु° CDILW, °मरु° FO    29d प्रीति° S    30-58 om. ABCDFILOSW, but I supplies App. I; 30—LXVII 17d °ष om. R    एवं त्रिविकल्पाः LW

रवीन्दुभौमासुरपूजिताङ्गाः
सदाष्टमस्था जनयन्ति मर्त्यम् ।
कुस्त्रीषु रक्तं कुसुतार्थभाजं
कुशीलमत्युग्रगुरुप्रदुष्टम् ॥ ५९ ॥

रवीन्दुभौमार्कसुता मनुष्यं
मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
प्रजाविहीनं कुमतिं कुरूपं
पराभिभूतं मतिवर्जितं च ॥ ६० ॥

रवीन्दुसौम्यामरपूजिताङ्गाः
सदाष्टमस्था जनयन्ति मर्त्यम् ।
विदग्धताहीनमतिं क्षुधार्तं
विहीनलज्जं जयवर्जितं च ॥ ६१ ॥

रवीन्दुसौम्यासुरपूजिताङ्गाः
सदाष्टमस्था जनयन्ति मर्त्यम् ।
द्यूतप्रियं निर्धनमल्पसत्यं
विदेशभाजं जनतातिगं च ॥ ६२ ॥

रवीन्दुसौम्यार्कसुता मनुष्यं
मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
व्यपेतभोगं गुरुभिर्निरस्तं
विसंस्थुलाङ्गं लघुतासमेतम् ॥ ६३ ॥

---

ABCDFILORSW

59b सप्तमस्था L  59c-61b om. B  59c F ends with कुस्त्री° °भावं DILW  60b=59b in AC  60b रिष्फाश्रिताः S  60c कुरूपं—61b जनयंति om. I  61a=59a in DLOW  61b-62a om. S  61c क्षुतार्तं C  61d भयवर्जितं ACW  62a=61a in D  62c °सत्यं D, °सल्यं AC  63b=62b in AC  63b नित्यं BIW  63c °गं—LXX 8c °स्य om. O  63d विसंछु° A, विशस्थ° CD, विशंप्लु° BLW, विसं—° I

रवीन्दुजीवासुरपूजिताङ्गाः
सदाष्टमस्था जनयन्ति मर्त्यम् ।
क्रियाविहीनं परकर्मसक्तं
सुनिर्घृणं साधुपराङ्मुखं च ॥ ६४ ॥

रवीन्दुजीवार्कसुता मनुष्यं
मृत्युस्थिताः संजनयन्ति रूक्षम् ।
क्षतप्रतापं मतिवित्तहीनं
सदातुरं कातरमार्तिभाजम् ॥ ६५ ॥

रवीन्दुशुक्रार्कसुता मनुष्यं
सदा प्रकुर्वन्ति हि मृत्युसंस्थाः ।
सुदुष्टवाक्यं बहुपापरक्तं
नीचानुगं शत्रुभिरर्दितं च ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गाः
सदाष्टमस्था जनयन्ति मर्त्यम् ।
कष्टप्रियं दीप्तिविहीनकायं
विहीनदारं रतपीडिताङ्गम् ॥ ६७ ॥

सूर्यारसौम्यासुरपूजिताङ्गा
मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
मातापितृभ्यां प्रविमुक्तमार्तं
सत्यप्रमुक्तं जडतासमेतम् ॥ ६८ ॥

ABCDILSW

64 om. D    64c ह्रिया S, दया° AC    65b मृत्युस्थि° om. AC मर्त्यं W    65c क्षित° AC    65d °मार्त° L    66d नीचानुरक्तं C    67c कष्टाश्रितं S दंत° W, वित्त° L °कायं om. W, °कार्यं ABCDIL    67d रति° a. 68a = 67a in W    68d = 67c in C    68d °प्रयुक्तं DIW, °युक्तं AB जनता° D.

सूर्यारसौम्यार्कसुता मनुष्यं
मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
लौल्यात्मकं द्रोहपरं कुमित्रं
त्रपाविहीनं धनवर्जितं च ॥ ६९ ॥

॥ ७०-७२ ॥

सूर्यज्ञजीवासुरपूजिताश्च
मृत्युस्थिताः सजनयन्ति मर्त्यम् ।
मूर्खं कृतघ्नं जडतासमेतं
सुनिष्ठुरं पापमतिं सदैव ॥ ७३ ॥

सूर्यज्ञजीवार्कसुता मनुष्यं
मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
सुकातरं कामनिपीडिताङ्गं
खलस्वभावं कुधनैः समेतम् ॥ ७४ ॥

॥ ७५-१२० ॥

## इति श्रीवृद्धयवने मृत्युस्थानाश्रययोगाध्यायः ॥ ]

ABCDILSW

69b मर्त्यं om. L 69d क्रया° D 70-72 om. cod. 73b संजनयंति मर्त्यं om. L 74b मर्त्यं om. L 74d रवल्प° D after 74 B adds : अत्र तृतिनं; D : चतुर्विकल्पाः; L : अत्र त्रुतिररित; and S : सूर्यज्ञशुक्राश्च यदा समेता and 74b-d 75-120 om. cod, but I supplies App. II and W App. III

# अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

धर्माश्रितस्तीक्ष्णकरः सचन्द्रो
नरं प्रसूते विनयप्रधानम् ।
महामनुष्यं प्रचुरप्रतापं
सतामभीष्टं नयकोविदं च ॥ १ ॥

धर्माश्रितस्तीक्ष्णकरः सभौमो
नरं प्रसूते प्रथिताभिमानम् ।
जितारिपक्षं क्षतदोषरक्तं
प्रभासमेतं नयकोविदं च ॥ २ ॥

धर्माश्रितस्तीक्ष्णकरः ससौम्यो
नरं प्रसूते विधया समेतम् ।
सुतेन युक्तं विदुषामभीष्टं
प्रभूतमित्रं सुतरां सुसत्यम् ॥ ३ ॥

धर्माश्रितस्तीक्ष्णकरः सजीवो
नरं प्रसूते द्विजदेवरक्तम् ।
प्रभूतवित्तं विनयेन युक्तं
सुरूपगात्रं प्रणतारिपक्षम् ॥ ४ ॥

शुक्रान्वितस्तीक्ष्णकरश्च धर्मे
नरं प्रसूते गुरुतासमेतम् ।
स्वभावशुद्धं सुधिया समेतं
विख्यातकीर्तिं बहुसौहृदं च ॥ ५ ॥

सौरान्वितो धर्मगतो दिनेशो
नरं प्रसूते धनबुद्धिभाजम् ।
सुसंस्तुतं भूरिकलत्रभाजं
विशेषभाजं जितशत्रुवर्गम् ॥ ६ ॥

ABCDILSW

2a = 3a in D 3b प्रसूते om. L विधिया cod. 3c हीनं L °मनिष्टं W 4b प्रसूते om. L 4d स्वरूप° L 5b प्रसूतं om. L 5c °शुद्धि W order in A: 5c सु°, 6b °द्धिभाजं—7b श्रुतार्थयु°, 5c °धिया—6b धनबु°, 7b °क्तं 5d विख्याति° D 6b प्रसूते om. L 6c °कलत्रसौन्दर्यं S

भौमान्वितः शीतकरश्च धर्मे
श्रुतार्थयुक्तं जनयेन्मनुष्यम् ।
महाधनं नीतिपरं प्रगल्भं
मिष्टान्नपानान्वितमोजसाढ्यम् ॥ ७ ॥

सौम्यान्वितः शीतकरश्च धर्मे
नरं प्रसूते सुतसौख्यभाजम् ।
जितेन्द्रियं धर्मपरं प्रशस्तं
नृपप्रियं बान्धवपूजितं च ॥ ८ ॥

जीवान्वितः शीतकरश्च धर्मे
नरं प्रसूतेऽतिधनं प्रगल्भम् ।
भोगप्रियं शौर्ययुतं कृतज्ञं
शास्त्रानुरक्तं बहुबुद्धिभाजम् ॥ ९ ॥

धर्माश्रितः शीतकरः सशुक्रो
नरं प्रसूते महतामभीष्टम् ।
वन्द्यं श्रुताढ्यं प्रभया समेतं
सदानुरक्तं निजबान्धवानाम् ॥ १० ॥

मन्दान्वितो धर्मगतः शशाङ्को
नरं प्रसूते व्रतदानरक्तम् ।
सतामभीष्टं बहुपुत्रदारं
नरेन्द्रपूज्यं धनिनं श्रुतज्ञम् ॥ ११ ॥

ABCDILSW

7d °पानाभिन्वितोज° A, °यान्वितमोज° BW   8b सुत° om. BW   9c कृतघ्नं D   10a धर्मान्वितः ABCDILW   10c सुताढ्यं DW   11d ध्वनिनं D कृतज्ञं L

धर्माश्रितो भूतनयः ससौम्यो
नरं प्रसूते बहुभृत्यवर्गम् ।
कलत्रसौख्यान्वितमुख्यपुत्रं
प्रसन्नवाक्यं कृतकैर्विहीनम् ॥ १२ ॥
धर्माश्रितो भूतनयः सजीवो
नरं प्रसूते गुणवर्गभाजम् ।
महाप्रसादं द्विजदेवभक्तं
कृषीबलं नीतिसमन्वितं च ॥ १३ ॥
धर्माश्रितो भूतनयः सशुक्रो
नरं प्रसूतेऽतिथिपूजयोक्तम् ।
सुरूपदेहं नयनाभिरामं
कुलप्रधानं नियमैः समेतम् ॥ १४ ॥
धर्माश्रितो भूतनयः ससौरो
नरं प्रसूते व्यसनैर्विहीनम् ।
सत्यार्जने तत्परमेकवीरं
सदानुरक्तं निजबान्धवानाम् ॥ १५ ॥
जीवान्वितः सोमसुतश्च धर्मे
नरं प्रसूते स्थिरबुद्धिमिष्टम् ।
कृपासमेतं श्रुतशास्त्ररक्तं
कृषिप्रधानं सततं सुशीलम् ॥ १६ ॥
धर्माश्रितः सोमसुतः सशुक्रो
नरं प्रसूते भूनकैः समेतम्
सुपुण्यभाजं विहिताभिमानं
प्रभूतमित्रं वनितामभीष्टम् ॥ १७ ॥

ABCDILSW

12b-13a om. D  12b प्रसूते om. L  12d वृन्तकं° C  13-14 om. I  14a = 13a in S  14a धर्मान्वितो ABLW  15a धर्मान्वितो L  15b प्रसूते om. L  16a वीर्ये L  16c श्रुति° D  17b प्रसूते om. L भूनकैः B

धर्माश्रितः सोमसुतः ससौरो
नरं प्रसूते सुभगं मनोज्ञम् ।
सुभूमिभाजं सुधियान्नभाजं
महाधनं पार्थिववल्लभं च ॥ १८ ॥

धर्माश्रितो देवगुरुः सशुक्रो
नरं प्रसूतेऽर्थयशोनिधानम् ।
सुपुत्ररक्तं विभवैः समेतं
मायाविहीनं सुतवल्लभं च ॥ १९ ॥

धर्माश्रितो देवगुरुः ससौरो
नरं प्रसूते प्रभुतासमेतम् ।
गीतप्रियं धर्मपरं सुशीलं
हितं सदा साधुविचेष्टितानाम् ॥ २० ॥

धर्माश्रितो दैत्यगुरुः ससौरो
नरं प्रसूते बहुपुण्यभाजम् ।
विद्याधिकं कीर्तिपरं प्रगल्भं
प्रशान्तचित्तं जनवल्लभं च ॥ २१ ॥

एवं द्विविकल्पाः ॥

धर्माश्रिता भास्करचन्द्रभौमा
नरं प्रकुर्वन्ति सतामभीष्टम् ।
पुण्यप्रियं शास्त्रकथानुरक्तं
सुनिर्मलाङ्गं गुणरक्तचित्तम् ॥ २२ ॥

ABCDILSW

18b प्रसूते om. L  20a धर्मान्वितो ABDILW  20b प्रसूते om. AL  प्रभुजा° S  20d तदा C  21b प्रसूते om. L  21d सुशांतिचित्तं W  22d गण° B

रवीन्दुसौम्या जनयन्ति मर्त्यं
धर्माश्रिताः सत्यपरं मनोज्ञम् ।
विशालनेत्रं विभुतासमेतं
प्रसन्नमूर्तिं सुतवल्लभं च ॥ २३ ॥

रवीन्दुजीवा जनयन्ति मर्त्यं
धर्माश्रिता धर्मविधानदक्षम् ।
विद्याप्रियं पापकथाविरक्तं
सत्याधिकं कामविवर्जितं च ॥ २४ ॥

रवीन्दुशुक्रा जनयन्ति मर्त्यं
धर्माश्रितास्तीर्थकथानुरक्तम् ।
नरं प्रकुर्वन्ति सुतार्थहीनं
चौरस्वभावं व्यथया समेतम् ॥ २५ ॥

रवीन्दुसौरा जनयन्ति मर्त्यं
धर्माश्रिता धर्मकथानुरक्तम् ।
हितं गुरूणां नियमैरुपेतं
सतामभीष्टं श्रुतलालसं च ॥ २६ ॥

सूर्यारसौम्या जनयन्ति मर्त्यं
धर्माश्रिताः पापरतं नृशंसम् ।
सत्येन हीनं कुधिया समेतं
परान्नरक्तं परसेवकं च ॥ २७ ॥

सूर्यारजीवा जनयन्ति मर्त्यं
धर्माश्रिता धर्मबहिःकृतं च ।
चारित्रहीनं कुकलत्रभाजं
सदा विरक्तं निजबान्धवानाम् ॥ २८ ॥

ABCDILSW

order in DS: 24a, 25b-d, 25a, 24b-d    24c कामकथा° S    °नुरक्तं L    25b °स्तीक्ष्ण° S    26a = 23a in ABDILW    26b कर्म° L    order in D: 28a, 29b-d, 29a, 28b-d    28b धर्माश्रिता om. A    °बहिष्कृतं W

सूर्यारशुक्रा जनयन्ति मर्त्यं
धर्माश्रिता धर्मविवर्जिताङ्गम् ।
गुणैर्विहीनं विविधोपचारं
चारित्रहीनं मतिवर्जितं च ॥ २९ ॥

सूर्यारसौरा जनयन्ति मर्त्यं
पुत्रैर्विहीनं गतयौवनं च ।
पापानुरक्तं प्रबलं कुचैलं
महाव्ययं धर्मविहीनकृत्यम् ॥ ३० ॥

सूर्यज्ञजीवा यदि धर्मसंस्था
नरं प्रकुर्वन्ति धनैः समेनम् ।
प्रभूतमित्रं प्रणतं द्विजानां
सुबुद्धिभाजं नयकोविदं च ॥ ३१ ॥

सूर्यज्ञशुक्रा यदि धर्मसंस्था
नरं प्रकुर्वन्ति विहीनवाक्यम् ।
सत्यान्वितं धर्मपरं कृतज्ञं
जितेन्द्रियं पापपराङ्मुखं च ॥ ३२ ॥

सूर्यज्ञसौरा यदि धर्मसंस्थाः
कृषीबलं धर्मपरं सदैव ।
सुकान्तियुक्तं बलसंप्रयुक्तं
विशालनेत्रं नयकोविदं च ॥ ३३ ॥

सूर्यामरेज्याभृगुजा मनुष्यं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
गुणप्रधानं धनधान्यभाजं
महामनुष्यं सुभगं सदैव ॥ ३४ ॥

---

ABCDILSW

30b गतशौचनं W 32c कृतघ्नं B 34a °मरेज्य° DLSW 34a °भृगुजा—34d °मनुष्यं om. D

सूर्यामरेज्यार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
विदेशरक्तं बहुसार्थवाहं
व्यथाधिकं कामविवर्जितं च ॥ ३५ ॥

सूर्यासुरेज्यार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
विरक्तपौरं विनयेन हीनं
निसर्गपापं विकृतानुकारम् ॥ ३६ ॥

चन्द्रारसौम्या जनयन्ति मर्त्यं
धर्माश्रिताः सत्ययशोर्थभाजम् ।
प्रसिद्धमोजःसहितं विधिज्ञं
महाप्रभावं गुरुतासमेतम् ॥ ३७ ॥

चन्द्रारजीवा यदि धर्मसंस्थाः
कुर्वन्ति मर्त्यं सुतसौख्ययुक्तम् ।
मित्रानुरक्तं सुप्रिया समेतं
जितेन्द्रियं बान्धवसंमतं च ॥ ३८ ॥

चन्द्रारशुक्रा यदि धर्मसंस्था
नरं प्रकुर्वन्ति वरान्नभाजम् ।
सत्यान्वितं शौचदयासमेतं
नरेन्द्रपूज्यं वरभोगभाजम् ॥ ३९ ॥

चन्द्रारसौरा यदि धर्मसंस्था
नरं प्रकुर्वन्ति जनानुरक्तम् ।
लज्जाधिकं कामविवर्जिताङ्गं
गुणप्रधानं नृपसंमतं च ॥ ४० ॥

ABCDILSW

order in W: 36a, 37b, 37c प्रसिद्धमोजो°, 36c विनयेन हीनं, 36d-37d 36a=35a in CILW 36d विसर्ग° S 37c विषज्ञं D, विज्ञं C 37d मतिप्र° CD 39a °संख्या C 39d नरस्य पूज्यं W, जितेंद्रियज्यं L 40a °सौम्या D 40d °शंसितं S, °तासतं W

चन्द्रज्ञजीवा यदि धर्मसंस्था
नरं प्रकुर्वन्ति विदग्धभाजम् ।
विशिष्टरक्तं कृपया समेतं
सुतार्थयुक्तं विधिना समेतम् ॥ ४१ ॥

चन्द्रज्ञशुक्रा यदि धर्मसंस्था
नरं प्रकुर्वन्ति सुरूपमुग्रम् ।
विशालकीर्तिं नयनाभिरामं
सदा प्रियं ब्राह्मणतर्ककानाम् ॥ ४२ ॥

चन्द्रज्ञसौरा यदि धर्मसंस्था
नरं प्रकुर्वन्ति सतामभीष्टम् ।
सुधीसुभाजं जितशत्रुवर्गं
गुणाधिकं कीर्तिसमन्वितं च ॥ ४३ ॥

चन्द्रामरेज्याभृगुजा मनुष्यं
कुर्वन्ति कीर्त्या सहितं सुधर्मम् ।
नयप्रधानं व्यसनैर्विमुक्तं
प्रसिद्धकर्माणमलोलुपं च ॥ ४४ ॥

चन्द्रामरेज्यार्कसुता मनुष्यं
कुर्वन्ति धर्मे सुतरां नयज्ञम् ।
प्रतापभाजं सुतरां प्रसिद्धं
प्रभूतकोशं सुतसंयुतं च ॥ ४५ ॥

ABCDILSW

41a = 43a in W  41d सुतीर्थ° L  विधिसा L, corr. to विधिना L2
42 om. BCILW  42d °तर्कुकानां A, °संमतं च  4,c सुधा° L, सुधी° B
44a °मरेज्य° LSW  44c विनयं° CL  45b सुसरां I  45d श्रुत° S

चन्द्रासुरेज्यार्कसुता मनोज्ञं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
प्रज्ञाधिकं क्रोधविवर्जिताङ्गं
प्रभासमेतं प्रथिताभिमानम् ॥ ४६ ॥
भौमज्ञजीवा यदि धर्मसंस्था
नरं प्रकुर्वन्ति धनप्रधानम् ।
हितं गुरूणां नयधर्मयुक्तं
श्रुताधिकं बान्धववर्जितं च ॥ ४७ ॥
भौमज्ञशुक्रा यदि धर्मसंस्था
नरं प्रकुर्वन्ति धिया समेतम् ।
सुतार्थसौख्यैर्विविधैः समेतं
क्षमान्वितं कामपराङ्मुखं च ॥ ४८ ॥
भौमज्ञसौरा यदि धर्मसंस्था
नरं प्रकुर्वन्ति दयासमेतम् ।
तीर्थानुरक्तं प्रचुरान्नपानं
सत्यानुरक्तं सुमतिं सदैव ॥ ४९ ॥
भौमामरेज्याभृगुजा मनोज्ञं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
बहुप्रतापं प्रथिताभिमानं
श्रुतानुरक्तं बहुधर्मभाजम् ॥ ५० ॥
भौमामरेज्यार्कसुता मनोज्ञं
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
रुजाविहीनं सुधनं सुशीलं
कृपासमेतं भयवर्जितं च ॥ ५१ ॥

**ABCDILSW**

46a मनुष्यं S 46b मर्त्यं om. L 46c °वर्जितं च D 48b-49a om. W 48b=49b in CD 48c °सोख्यै° C, °युक्तै° L 49a=48a in BCIL 49a °सौरा om. A 49b प्रकुर्वंति om. L 49d सत्यान्न° cod. order in W: 51, 50 50a °मरेज्य° LSW 50b नित्यं S 51a मनुष्यं S 51b धर्माश्रिताः SW नित्यं S 51d भव° S

भौमासुरेज्यार्कसुता मनोज्ञं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतकोशं गजवाजिभाजं
जितेन्द्रियं शौर्यसमन्वितं च ॥ ५२ ॥

सौम्यामरेज्याभृगुजा मनोज्ञं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
धराधिनाथं प्रणतारिपक्षं
हस्त्यश्वयानैर्विविधैः समेतम् ॥ ५३ ॥

सौम्यामरेज्यार्कसुता मनोज्ञं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
असह्यं राजपरं कृतघ्नं
जनैर्विमुक्तं भ्रियसाध्वसं च ॥ ५४ ॥

सौम्यासुरेज्यार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति धीरम् ।
सङ्ग्रामरक्तं घृणया समेतं
बहुप्रजं सत्ययशोविधानम् ॥ ५५ ॥

जीवासुरेज्यार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति कान्तम् ।
उदारचित्तं प्रणतं सुरूपं
प्रसिद्धभाजं सुतवल्लभं च ॥ ५६ ॥

एवं त्रिविकल्पाः ॥

**ABCDILSW**

52a = 51a in ABCILW 5.a मनुष्यं S 52c °कोपं BW, को L 52d रूपसमन्वितं S order in D: 54,53 53a = 54a in BCILW 53a मनुष्यं S 54a मनुष्यं S, मनोरमं B 54b नित्यं S 54c कृतज्ञं C 54d °साहसं C 55a = 54a in L 55b मर्त्यं CL 56b कामं ABCDILW 56c-d om. S 56c सरूपं BCIW. स्वरूपं DL 56d प्रसिद्धि° W

रवीन्दुभौमेन्दुसुता मनोज्ञं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
व्रताश्रितं धर्मपरं प्रसिद्धं
हुताशभक्तं प्रियबान्धवं च ॥ ५७ ॥
रवीन्दुभौमामरपूजिताङ्गा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
रुजाविहीनं सुधनं सुशीलं
प्रतापहीनं परदाररक्तम् ॥ ५८ ॥
रवीन्दुभौमासुरपूजिताङ्गा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
तेजोविहीनं श्रुतधर्महीनं
निरस्तलज्जं परतर्ककं च ॥ ५९ ॥
रवीन्दुभौमार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
मतिप्रहीनं जडतासमेतं
सन्तानहीनं बहुमन्युयुक्तम् ॥ ६० ॥
रवीन्दुसौम्यामरपूजिताङ्गा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
प्रभूतपुत्रं बहुवित्तभाजं
कृषीबलं पार्थिववल्लभं च ॥ ६१ ॥
रवीन्दुसौम्यासुरपूजिताङ्गा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
बहुप्रतापं यशसा समेतं
निधानभाजं जनवल्लभं च ॥ ६२ ॥

ABCDILSW

57a मनुष्यं S 57b मर्त्यं om. C 57c व्रतोच्छ्रितं W, व्रतान्वितं S 58b धर्माश्रिताः L सजनयंति मर्त्यं om. C 59b मर्त्यं om. L 59d °तर्कुकं L 60b मर्त्यं om. C, निर्त्यं BIW 61b संजनयंति मर्त्यं om. C 62b मर्त्यं om. C

रवीन्दुसौम्यार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
गीतप्रियं पापकथाविरक्तं
प्रसिद्धकर्माणमलोलुपं च ॥ ६३ ॥

रवीन्दुजीवासुरपूजिताङ्गा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
बहुश्रुतं तीर्थपरं सुधर्मं
महाधनं नीतिविशारदं च ॥ ६४ ॥

रवीन्दुजीवार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
नानाधनैः संयुतमिष्टधर्मं
प्रधानकृत्यं जनशंसितं च ॥ ६५ ॥

रवीन्दुशुक्रार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
सतामभीष्टं सुनयेन युक्तं
बहुप्रजं मानसमन्वितं च ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
क्षतारिपक्षं विभुतासमेतं
सुयानवस्त्राभरणैरुपेतम् ॥ ६७ ॥

ABCDILSW

63b मर्त्यं BDW 64b मर्त्यं om. CL 64c बहुश्रुतं] महाधनं D 65b नित्यं om. C, मर्त्यं DLS 65d °संशितं S, °संमतं L 66b नित्यं om. C, मर्त्यं DLSW 67b धर्मस्थिताः C संजनयंति मर्त्यं om. C मर्त्यं om. D 67d रुपेतं—68a सूर्यारसौ° om. A 67d समेतं SW, सुपेतं B

सूर्यारसौम्यासुरपूजिताङ्का
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
हयैर्विहीनं कृतकस्वभावं
सुनिर्घृणं विप्रपराङ्मुखं च ॥ ६८ ॥

सूर्यारसौम्यार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
बहुप्रसादं प्रियहृद्यवाक्यं
सुतार्थयानैर्विविधैः समेतम् ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्का
धर्माश्रिताः संजनयन्ति नित्यम् ।
गुणानुरक्तं प्रियसाधुकृत्यं
विनीतदारं बहुसौहृदं च ॥ ७० ॥

सूर्यारजीवार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
स्थिरस्वभावं विगतारिपक्षं
कृतज्ञमुत्साहिनमोजसाढ्यम् ॥ ७१ ॥

सूर्यारशुक्रार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
वित्तश्रियं पापकथानुरक्तं
तृष्णाधिकं कामनिपीडितं च ॥ ७२ ॥

**ABCDILSW**

68a = 67a in BCILW  68b संजनयंति मर्त्यं om. CD  order in **W**: 69a-b, 70c-d, 69c-d, 70a-b  69b संजनयंति नित्यं om. CD  मर्त्यं LS  69c °प्रतापं D  70b संजनयंति नित्यं om. D  संजनयंति om. C  नित्यं om. L, मर्त्यं S  71b संजनयंति नित्यं om. D  संजनयंति om. C  नित्यं om. L  72a = 74a in D  72b संजनयंति om. C  नित्यं om. L  72c °श्रियं AS, °त्रियं W, °श्रवं L  72d °पीडितांगं CLS

सूर्यज्ञजीवासुरपूजिताङ्गा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
क्षमान्वितं सत्यदयासमेतं
विचित्रवाक्यं भयवर्जिताङ्गम् ॥ ७३ ॥

सूर्यज्ञजीवार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
चलस्वभावं परदाररक्तं
सुनिर्घृणं बान्धवदूषितं च ॥ ७४ ॥

सूर्यज्ञशुक्रार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
लौल्यात्मकं कामकथासु दक्षं
सुकृष्टभाजं जडतासमेतम् ॥ ७५ ॥

सूर्यामरेज्याभृगुजार्कपुत्रा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
कल्याणकर्माणमुदारवाक्यं
नृपाज्ञयाधिष्ठितमुग्रवीर्यम् ॥ ७६ ॥

चन्द्रारसौम्यामरपूजिताङ्गा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
प्रियातिथिं बुद्धिजनैः समेतं
कुलप्रधानं नयसंयुतं च ॥ ७७ ॥

॥ ७८ ॥

ABCDILSW

73b संजनयंति मर्त्यं om. CD मर्त्यं om L  74b संजनयंति नित्यं om. C नित्यं om. L, मर्त्यं W  74c बलं L  74d हृषितं A  75b संजनयंति नित्यं om. C नित्यं om. L  75c लोभात्मकं W  76a °मरेज्य° LSW  76b संजनयंति मर्त्यं om. C मर्त्यं om. L  77b संजनयंति मर्त्यं om. C मर्त्यं om. L  78 om. cod.

चन्द्रारसौम्यार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम्।
सुबाहुवक्त्रं नयनाभिरामं
बहुश्रुतं पार्थिववल्लभं च ॥ ७९ ॥

चन्द्रारजीवासुरपूजिताङ्गा
धर्माश्रिताः संजनयन्ति मर्त्यम्।
बहुप्रजं पार्थिवकृत्यदक्षं
तीर्थानुरक्तं बहुशास्त्रदक्षम् ॥ ८० ॥

चन्द्रारजीवार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम्।
गुणप्रियं पार्थिवमानभाजं
जितेन्द्रियं धर्मविशारदं च ॥ ८१ ॥

चन्द्रारशुक्रार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम्।
यशोन्वितं धर्मपरं प्रगल्भं
विद्याधिकं पार्थिवमानपुष्टम् ॥ ८२ ॥

चन्द्रज्ञजीवासुरपूजिताङ्गा
धर्माश्रिताः संजनयन्ति मर्त्यम्।
महानरेन्द्रं विजितारिपक्षं
हस्त्यश्वकोशैर्विविधैः समेतम् ॥ ८३ ॥

ABCDILSW

79b संजनयंति om. C    79c सुबाहुनेत्रं L    80b संजनयंति om. C मर्त्यं om. L    81b संजनयंति om. C मर्त्यं W    82a=81a in BCILW 82b संजनयंति om. C नित्यं om. L    82d °मानदुष्टं S    83 om. I 83a °पूजिताश्च W    83b संजनयंति मर्त्यं om. D संजनयंति om. C    83d हस्त्यादि° W

चन्द्रज्ञजीवार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
उदारचेष्टं प्रियसाधुकृत्यं
विचक्षणं धर्ममतिं सदैव ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
प्रियात्मकं साधुसमागमोक्तं
मायाप्रधानं सुविचक्षणं च ॥ ८५ ॥

चन्द्रामरेज्याभृगुजार्कपुत्रा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
देवद्विजाराधनतत्परं च
प्रसिद्धभाजं विजितेन्द्रियं च ॥ ८६ ॥

भौमज्ञजीवासुरपूजितार्का
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
लज्जाधिकं सत्यदयासमेतं
भयेन हीनं गुणलालसं च ॥ ८७ ॥

भौमज्ञजीवार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
सुतार्थभोगैर्विविधैः समेतं
सुरम्यगात्रं जनसंमतं च ॥ ८८ ॥

ABCDILSW

84b संजनयंति नित्यं om. D संजनयंति om. C नित्यं om. L, मर्त्यं W 85b-86a om. D 85b मर्त्यं W 86a °मरेज्य° LSW 86b संजनयंति मर्त्यं om. C 86d प्रसिद्धि° W °भावं C 87b संजनयंति om. C मर्त्यं om. L 87d हीनं om. LW 88b संजनयंति om. C नित्यं om. L, मर्त्यं BSW 86c-89b om. D 88d °रम्य°–89c गीतानु° om. A

भौमज्ञशुक्रार्कसुता मनुष्यं
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
गीतानुरक्तं विविधोपचारं
चारित्रभाजं सुनयात्मकं च ॥ ८९ ॥

भौमामरेज्याभृगुजार्कपुत्रा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
विज्ञानरक्तं विभुतासमेतं
दानात्मकं पापविवर्जितं च ॥ ९० ॥

सौम्यामरेज्याभृगुजार्कपुत्रा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
विज्ञानविद्यागमशास्त्रलुब्धं
विचक्षणं क्षान्तिसमन्वितं च ॥ ९१ ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्या
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
नीरोगदेहं विधिना समेतं
सुरूपगात्रं प्रभया समेतम् ॥ ९२ ॥

रवीन्दुभौमज्ञसिता मनुष्यं
धर्माश्रिताः संजनयन्ति नित्यम् ।
नानार्थशास्त्रैः सुजनैः समेतं
धनान्वितं बान्धवसंमतं च ॥ ९३ ॥

ABCDILSW

89b संजनयंति om. C मर्त्यं om. L, नित्यं CIS 89c °चारं om. A, चारैः W 90a °मरेज्य° S °मरेज्यार्कसुतश्च शुक्रो BCDILW 90b संजनयंति om. C मर्त्यं om. DL, नित्यं C 90c जिज्ञानु° S, विवान° BW, विचार° L 91a °मरेज्य° LSW 91b धर्मस्थिताः L संजनयंति om. C मर्त्यं om. L, नित्यं C 91d ख्याति° W 92b संजनयंति मर्त्यं om. D संजनयंति om. C नित्यं C 92c-93d om. C 92d-94c om. I 92d स्वरूप° L 93a °शत्रुरारिपूज्या D 93b मर्त्यं DSW 93d बांधवसंमतं om. A

रवीन्दुभौमज्ञदिनेशपुत्रा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
विज्ञानविद्यं सुविशालकीर्तिं
सुरूपदेहं नयकोविदं च ॥ ९४ ॥

रवीन्दुभौमामरपूज्यशुक्रा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
विप्रप्रियं धर्मपरं सुशीलं
प्रभूतवित्तं भयवर्जितं च ॥ ९५ ॥

रवीन्दुभौमामरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
उदारचित्तं प्रियया समेतं
महामनुष्यं दृढसौहृदं च ॥ ९६ ॥

रवीन्दुभौमासुरपूज्यसौरा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
श्रद्धान्वितं दानरतं प्रसन्नं
विशुद्धकर्माणमलोलुपं च ॥ ९७ ॥

रवीन्दुसौम्यामरपूज्यशुक्रा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
दृढप्रतापं मतिहीनमुग्रं
श्रुतव्यपेतं विनयातिगं च ॥ ९८ ॥

---

**ABCDILSW**

94a = 92a in D 94b संजनयंति मर्त्यं om. CD 94c विद्यात° S सुविलाश° L 94d स्वरूप° L °देयं D नृप° I 95b संजनयंति मर्त्यं om. C मर्त्यं om. L 95c-97b om. BLW 95c-96b om. ACDI 96c प्रियता° S, प्रभया D 96d महा° om. I 97b संजनयंति मर्त्यं om. C मर्त्यं om. D 98b संजनयंति मर्त्यं om. C मर्त्यं om. L

रवीन्दुसौम्यामरपूज्यसौरा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
मातापितृभ्यां प्रणतं सुरूपं
महाधनं ब्राह्मणसंमतं च ॥ ९९ ॥

रवीन्दुसौम्यासुरपूज्यसौरा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
व्रतानुरक्तं स्वकुलप्रधानं
नीरोगदेहं जनसंमतं च ॥ १०० ॥

रवीन्दुजीवासुरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
नानार्थभाजं वनितास्वभीष्टं
धर्मध्वजं कीर्तिसमन्वितं च ॥ १०१ ॥

सूर्यारसौम्यामरपूज्यशुक्रा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
विभूतिभाजं सुधिया समेतं
प्रभूतमित्रं जितशत्रुपक्षम् ॥ १०२ ॥

सूर्यारसौम्यामरपूज्यसौरा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
कृतज्ञमुत्साहिनमिष्टधर्मं
मतिप्रधानं नयनाभिरामम् ॥ १०३ ॥

ABCDILSW

99b संजनयंति मर्त्यं om. CD मर्त्यं om. L 99c स्वरूपं L order in S: 100a-b, 101c-d, 100c-101b 100b धर्माश्रिताः S, धर्मान्विताः BLW संजनयंति मर्त्यं om. CD मर्त्यं om. L 100c सुकुल° LW 100d = 101c in W 101b संजनयंति मर्त्यं om. CD मर्त्यं om. L 101d कर्म° L 102b संजगयंति मर्त्यं om. C मर्त्यं om. L 102c विभूत° C 102d शत्रुवर्गं L 103a = 104a in D 103b धर्माश्रिताः S संजनयंति मर्त्यं om. CD मर्त्यं om. L

सूर्यारसौम्यासुरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
श्रुतप्रधानं नियमैः समेतं
हुताशपूजानिरतं सदैव ॥ १०४ ॥

सूर्यारजीवासुरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
विद्यार्जने तत्परमिष्टधर्मं
सुशीलतायुक्तमनातुरं च ॥ १०५ ॥

सूर्यज्ञजीवासुरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
व्यपेतलज्जं कुधिया समेतं
रुजार्तदेहं रणकातरं च ॥ १०६ ॥

चन्द्रारसौम्यामरपूज्यशुक्रा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
सुबुद्धिभाजं विजितारिपक्षं
घृणान्वितं ब्राह्मणतत्परं च ॥ १०७ ॥

चन्द्रारसौम्यामरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
रोगैर्विमुक्तं प्रियदेवकृत्यं
सुपात्ररक्तं नृपतेरभीष्टम् ॥ १०८ ॥

चन्द्रारसौम्यासुरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
भयेन युक्तं सुतदारभाजं
कुटुम्बभक्तं सततं सुसत्यम् ॥ १०९ ॥

---

ABCDILSW

104b संजनयंति मर्त्यं om. CD मर्त्यं om. L 105b संजनयंति मर्त्यं om. CD मर्त्यं om. L 105c °मिष्टमिष्टं L 105d °सक्त° W, °शुक्ल° ABCDS °मनारुजं S 106b संजनयंति मर्त्यं om. CD मर्त्यं om. L 107b संजनयंति मर्त्यं om. C मर्त्यं om. L 107d °तर्पणं AS 108b संजनयंति मर्त्यं om. CD मर्त्यं om. L 108d सुपात्रदारं W 109b मर्त्यं om. L 109c भयेन I

चन्द्रारजीवासुरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
महाविवेकाध्ययनैः समेतं
हितं गुरूणां द्विजदेवभक्तम् ॥ ११० ॥

चन्द्रज्ञजीवासुरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
मायाविहीनं सुधिया समेतं
धर्मान्वितं पापपराङ्मुखं च ॥ १११ ॥

भौमज्ञजीवासुरपूज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
नरेन्द्रपूज्यं वनितास्वभीष्टं
सुतप्रगल्भं भयशोकहीनम् ॥ ११२ ॥

एवं पंचविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्रा
धर्मस्थिताः संजनयन्ति मर्त्यम् ।
पापात्मकं पापकथानुरक्तं
कुमित्ररक्तं जनगर्हितं च ॥ ११३ ॥

रवीन्दुभौमज्ञसुरेज्यसौरा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
ईर्ष्याधिकं कीर्तिविवर्जिताङ्गं
निरस्तधैर्यं मतिवर्जितं च ॥ ११४ ॥

ABCDILSW

110b संजनयंति मर्त्यं om. D मर्त्यं om. L 110d °देवरक्तं S 111a-b om. L 111b संजनयंति मर्त्यं om. D मर्त्यं om. C 111c-d om. W 112b संजनयंति मर्त्यं om. D मर्त्यं om. CL 113b धर्माश्रिताः C, धनस्थिताः W संजनयंति मर्त्यं om. CD मर्त्यं om. L 113d मित्रप्ररक्तं D 114b संजनयंति मर्त्यं om. CD मर्त्यं om. L 114d °धर्मं S

रवीन्दुभौमज्ञसितार्कपुत्रा
धर्माश्रिताः संजनयन्ति मर्त्यम् ।
कामात्मकं तुच्छमतिं गतस्वं
भयाधिकं कामपरं सदैव ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
बिचित्ररोगं गुरुभक्तिहीनं
विरक्तपौरं परुषस्वभावम् ॥ ११६ ॥

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
मायान्वितं त्रासपरं कुरूपं
शीलेन हीनं बहुगर्वितं च ॥ ११७ ॥

सूर्यारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
धर्माश्रिताः प्राणिवधे निरुक्तं
बह्वाशिनं पापमतिं नृशंसम् ॥ ११८ ॥

चन्द्रारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
धराधिनाथं सुगजैः समेतं
निधानभाजं भयवर्जितं च ॥ ११९ ॥

एवं षड्विकल्पाः ॥

**ABCDILSW**

115b संजनयंति मर्त्यं om. C मर्त्यं om. L 115c कफा° S 116b मर्त्यं om. L 116c गुरुशक्ति° BS 117b मर्त्यं om. L 117c त्रासयुतं S 117d °गर्जितं C 118b मर्त्यं om. L 118c प्राण° BCDIL, प्रास्त° A 119b मर्त्यं om. CL

रवीन्दुभौमज्ञसुरेज्यशुक्र–
शनैश्चराः संजनयन्ति मर्त्यम्।
प्रभूतसौख्यं नृपतिं प्रगल्भं
नीरोगदेहं सुधिया समेतम् ॥ १२० ॥

एवं सप्तविकल्पाः ॥

**इति श्रीवृद्धयवने धर्माश्रययोगाध्यायः ॥**

ABCDILSW

120b मर्त्यं om. CL 120d सरोग° D chapter col. श्री° om. S

# नवचत्वारिंशोऽध्यायः ॥ ४९ ॥

कर्माश्रितस्तीक्ष्णकरः सचन्द्रो
नरं प्रसूते पटुताविहीनम् ।
निसर्गदुष्टं कुधिया समेतं
विनीतदारं वनितानुरक्तम् ॥ १ ॥

कर्माश्रितस्तीक्ष्णकरः सभौमो
नरं प्रसूते बहुपीड्यभाजम् ।
भयेन युक्तं बहुकीर्तियुक्तं
नृपप्रियं बान्धवसंमतं च ॥ २ ॥

कर्माश्रितस्तीक्ष्णकरः ससौम्यो
नरं प्रसूते सुधिया समेतम् ।
विख्यातकर्माणमलौल्यभाजं
जनप्रियं सत्यरतं कृतज्ञम् ॥ ३ ॥

कर्माश्रितस्तीक्ष्णकरः सजीवो
नरं प्रसूते सुहितं जनानाम् ।
परोपकारार्थकमद्भुतार्थं
सुवाहनाढ्यं प्रियवल्गुवाक्यम् ॥ ४ ॥

कर्माश्रितस्तीक्ष्णकरः सशुक्रो
नरं प्रसूते प्रथिताभिमानम् ।
विशुद्धकार्यं सुभगं सुशीलं
भयव्यपेतं सुतरां विधिज्ञम् ॥ ५ ॥

---

ABCDILSW

2b प्रसूते om. L °पीड्वभार्जं D, °पीडितांगं W 2c अयेन BLS, जयिन्व W 3b प्रसूते om. L चिधिया S, तिधिया ACDI, धिया B 4b प्रसूते om..L 4c °कारात्मकं S 5b-6a om. ABCILW

कर्माश्रितस्तीक्ष्णकरः ससौरो
नरं प्रसूतेऽतिधनं प्रगल्भम् ।
विशालनेत्रं सुभुजं सुवक्त्रं
सुदीर्घकेशं सुधिया समेतम् ॥ ६ ॥

मेषूरणस्थो हिमगुः सभौमो
नरं प्रसूते नृपमानभाजम् ।
जितारिवर्गं बहुकर्मभाजं
धनान्वितं धर्मपरं सदैव ॥ ७ ॥

मेषूरणस्थो हिमगुः ससौम्यो
नरं प्रसूते सुहितं द्विजानाम् ।
सदोद्यमे पुण्यतरं दृढज्ञं
विख्यातकीर्तिं धृतकर्मदक्षम् ॥ ८ ॥

मेषूरणस्थो हिमगुः सजीवो
नरं प्रसूते धृतिपुष्टिभाजम् ।
विवेकसत्यार्जनसौख्यरक्तं
नरप्रधानं गतकल्मषं च ॥ ९ ॥

**ABCDILSW**

6b प्रसूते om. L 6c सुभुजं om. A 6d °कांसं W after 6 W adds:

कर्माश्रितस्तीक्ष्णकरः ससौरि-
भाग्योदयं राजजनप्रधानं ।
वस्त्रैः प्रयुक्तं हितशत्रुपक्षं
विवेकताज्ञानदयासमेतं ॥

7a = 8a in D 7b प्रसूते om. L 7d कुसीदवाप्तद्रविणं सदैव S धर्मान्वितं W 8 om. BL 8a हिमगुश्च सौम्यो W 8b-d in W:

नरं प्रसूते धनधान्यलाभं ।
व्यापारकीर्तिं महितप्रतिष्ठा-
स्त्रीपुत्रलाभं क्रयविक्रयं च ॥

8b धनानां CDI 8c सदोद्यते D, सदाज्ञया C पुण्यपरं S 8d विख्याति° D धृति° I 9b हृति° L 9c-10b प्रसूते om. D

मेषूरणस्थो हिमगुः सशुक्रो
नरं प्रसूते निधिबुद्धिभाजम् ।
कृषिप्रधानं सुरताप्तसौख्यं
नरेन्द्रपूज्यं महिमासमेतम् ॥ १० ॥

मेषूरणस्थो हिमगुः ससौरो
नरं प्रसूते विनयप्रधानम् ।
प्रभूतमित्रं प्रथितप्रतापं
द्विजानुरक्तं दृढसौहृदं च ॥ ११ ॥

नभस्तलस्थः क्षितिजः ससौम्यो
नरं प्रसूते क्षितिबुद्धियुक्तम् ।
मनोर्थशास्त्रान्वितमिष्टसत्यं
गीतप्रियं धर्मसमन्वितं च ॥ १२ ॥

नभस्तलस्थः क्षितिजः सजीवो
नरं प्रसूते विविधोपचारम् ।
चारित्रभाजं श्रुतिशास्त्रभाजं
धर्मस्थितं प्रीतिकरं नराणाम् ॥ १३ ॥

नभस्तलस्थः क्षितिजः सशुक्रो
नरं प्रसूते विविधान्नपानम् ।
सुतीर्थसेवासु रतं प्रसन्नं
दयासमेतं विनयाधिकं च ॥ १४ ॥

ABCDILSW

10 om. W 10b प्रसूते om. L 10c सुरतप्त° C, सुरतानि° D, सुरानात° I, रणताप्र° S 11b प्रसूते om. L 11c प्रथिताभिमानं L 11d दृढपौरुषं जं S 12b °युद्धि° L °भाजं D order in D: 13a, 14b, 14a, 13b-d, 14c-d 13b प्रसूते om. L 13c °शास्त्ररक्तं S 14b प्रसूते om. L 14c सुतार्थ ABCD 14d °समेतं विनया° om. LW

नभस्तलस्थः क्षितिजः ससौरो
नरं प्रसूते श्रुतशीलभाजम् ।
मायाविहीनं पशुपुत्रभाजं
सदानुरक्तं निजबान्धवानाम् ॥ १५ ॥

नभस्तलस्थः शशिजः सजीवो
नरं प्रसूते नृपतुल्यवीर्यम् ।
मन्त्रिप्रधानं सुतदारसौख्यैः
सदा समृद्धं प्रियदर्शनं च ॥ १६ ॥

नभस्तलस्थः शशिजः सशुक्रो
नरं प्रसूते सुभगं मनोज्ञम् ।
प्रियातिथिं धर्मकथानुरक्तं
प्रसन्नमूर्तिं दृढसौहृदं च ॥ १७ ॥

नभस्तलस्थः शशिजः ससौरो
नरं प्रसूते जनतानुरक्तम् ।
प्रसिद्धकर्माणमतिप्रधानं
सदानुरक्तं द्विजदेवतानाम् ॥ १८ ॥

नभस्तलस्थः सुरराजमन्त्री
शुक्रेण युक्तो जनयेन्मनुष्यम् ।
विप्रानुरक्तं बहुबुद्धिभाजं
सत्यान्वितं तीर्थपरं सदैव ॥ १९ ॥

नभस्तलस्थः सुरराजमन्त्री
सौरेण युक्तो जनयेन्मनुष्यम् ।
श्रुतप्रधानं नियमैः समेतं
बहुप्रतापं जनवल्लभं च ॥ २० ॥

ABCDILSW

15b प्रसूते om. L   श्रुति° DIW   15c °पुत्रलाभं W   16b प्रसूते om. L   16c °सौख्यं W   17a क्षितिजः C   17b प्रसूते om. L   18b प्रसूते om. L   19b = 20b in D   19c बहु° ] द्वि° BW, सु° L   19d संध्यान्वितं S   20c सुत° I

नभस्तलस्थो भृगुजः ससौरो
नरं प्रसूते बहुबुद्धिभाजम् ।
निसर्गशुद्धं विभुतासमेतं
महामनुष्यं सुजनानुरक्तम् ॥ २१ ॥

एवं द्विविकल्पाः ॥

रवीन्दुभौमा जनयन्ति मर्त्यं
कर्माश्रिताः शत्रुबलैर्विहीनम् ।
सङ्ग्रामरक्तं नृपतेरभीष्टं
विनीतवाक्यं प्रियसाधुकृत्यम् ॥ २२ ॥

रवीन्दुसौम्या यदि कर्मसंस्था
नरं प्रकुर्वन्ति विहीनपापम् ।
प्रजानुरक्तं विभवैः समेतं
सुरूपदेहं बहुगौरवं च ॥ २३ ॥

रवीन्दुजीवा यदि कर्मसंस्था
नरं प्रकुर्वन्ति धिया प्रधानम् ।
सुरक्षिताङ्गं विविधोपचारं
कुलप्रधानं सुधिया समेतम् ॥ २४ ॥

रवीन्दुशुक्रा यदि कर्मसंस्था
नरं प्रकुर्वन्ति सुतार्थभाजम् ।
सुसाधुसेवासु रतं नयज्ञं
प्रभूतकोशं वनिताप्रगल्भम् ॥ २५ ॥

ABCDILSW

21b प्रसूते om. L 21c °शुद्धिं D, °बुद्धिं C 22 om. D 22b कामाश्रितं W 23a काम° L 24b प्रकुर्वंति om. L 25b प्रकुर्वंति om. L सुतीर्थ° IL 25c °सेवानिरतं LW

रवीन्दुसौरा यदि कर्मसंस्था
नरं प्रकुर्वन्ति शुचिं सदैव ।
भयेन हीनं नियतं कुकृत्ये
प्रभूतधान्यागमलालसं च ॥ २६ ॥

सूर्यारसौम्या जनयन्ति मर्त्यं
कर्माश्रिता धर्ममतिं सुविज्ञम् ।
प्रभूतमित्रार्जनमानपुष्टं
सतामभीष्टं विनयप्रधानम् ॥ २७ ॥

सूर्यारजीवा जनयन्ति मर्त्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
विचित्रवाक्यं कृतकैर्विहीनं
सतामभीष्टं विनयप्रधानम् ॥ २८ ॥

सूर्यारशुक्रा जनयन्ति मर्त्यं
कर्माश्रिताः सत्ययशोनिधानम् ।
भूपालमानार्जितभूरिवित्तं
सौभाग्यवृत्त्या सहितं सदैव ॥ २९ ॥

सूर्यारसौरा जनयन्ति मर्त्यं
कर्माश्रिताः कल्पतरुं मनोज्ञम् ।
तेजोन्वितं शास्त्रपरं प्रधानं
स्ववर्गमध्ये सुसुखं सदैव ॥ ३० ॥

सूर्यज्ञजीवा जनयन्ति मर्त्यं
कर्माश्रिताः कर्मविवर्जिताङ्गम् ।
व्यपेतमन्युं व्रतिनामभीष्टं
सुयज्ञधर्मार्जिनतत्परं च ॥ ३१ ॥

---

ABCDILSW

26b प्रकुर्वंति om. L 26c दीनं I 26d-27b om. A 27a मर्त्यं om. S 27b-28a om. D 27b कामा° C शुचिज्ञं W 27c °वित्तार्जन° C 29a = 28a in D 29d °भृत्या ABI, °भृत्यैः LW, °नीत्या S 30a मर्त्यं om. L 30d सुवर्ग° L 31a मर्त्यं om. L 31c व्यपेतमानं W

सूर्यज्ञशुक्रा जनयन्ति मर्त्यं
कर्माश्रिताः क्षान्तियुतं सुरूपम् ।
विदग्धगोष्ठीषु रतं सुनीतं
विद्यापरं ब्राह्मणसंमतं च ॥ ३२ ॥

सूर्यज्ञसौरा जनयन्ति मर्त्यं
श्रिया समेतं बहुयज्ञदक्षम् ।
क्षमान्वितं सत्यदयासमेतं
सुभूरिवित्तं बहुकृत्यदक्षम् ॥ ३३ ॥

॥ ३४ ॥

सूर्यामरेज्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
प्रशस्तवाक्यं विनयप्रधानं
महागुरुं देवगुरुप्रभक्तम् ॥ ३५ ॥

सूर्यासुरेज्यार्कसुता मनुष्यं
कर्माश्रिताः कीर्तिकरं कृतज्ञम् ।
विद्याविवेकागमशास्त्रलुब्धं
निरीहमुत्साहिनमप्रमत्तम् ॥ ३६ ॥

चन्द्रारसौम्या जनयन्ति मर्त्यं
कर्माश्रिताः कर्मविहीनमिष्टम् ।
विरोधमुत्साहिवरं सुनित्यं
धर्मप्रधानं जनसंमतं च ॥ ३७ ॥

ABCDILSW

32b सदैव W 33b बहुयज° D, बहुजज्ञ° I, बहुजिज्ञ° S, बहुज° A 34 om. cod. 35b नित्यं om. L 35c परास्त° S 35d महाधनं S °प्रभुक्तं D, °प्रभावं W 36a = 35a in S 36d °प्रसक्तं W 37c °मुत्साह° LS °परं S

चन्द्रारजीवा जनयन्ति मर्त्यं
कर्माश्रिताः सत्यधनं मनोज्ञम् ।
नरेन्द्रपूज्यं प्रणतं प्रगल्भं
सुयानभाजं सुतदाररक्तम् ॥ ३८ ॥

चन्द्रारशुक्रा जनयन्ति मर्त्यं
कर्माश्रितास्तीर्थकथानुरक्तम् ।
सौभाग्यभाजं विजितारिसंघं
देवद्विजानामतिवल्लभं च ॥ ३९ ॥

चन्द्रारसौरा जनयन्ति मर्त्यं
कर्माश्रिताः कान्तियुतं कथाढ्यम् ।
प्रभूतलज्जं नरदेवपूज्यं
परोपकारे चतुरं सदैव ॥ ४० ॥

चन्द्रज्ञजीवा जनयन्ति मर्त्यं
कर्माश्रिताः स्थाननरेन्द्रपूज्यम् ।
स्थिरस्वभावं विभवेन युक्तं
श्रुतोत्सुकं नीतिविचक्षणं च ॥ ४१ ॥

चन्द्रज्ञशुक्रा जनयन्ति मर्त्यं
कर्माश्रिताः प्राणिदयासमेतम् ।
ह्रयाधिकं कामरुजाविहीनं
नितान्तमुत्साहितमोजसाढ्यम् ॥ ४२ ॥

चन्द्रज्ञसौरा जनयन्ति मर्त्यं
कर्माश्रिताः सत्यधनं निरीहम् ।
सुसंमतं वाक्यविधिप्रगल्भं
स्थिरस्वभावं विभुनासमेतम् ॥ ४३ ॥

ABCDILSW

38a मर्त्यं om. L   38b-40a om. BLW   41a मर्त्य om. L   41c विनयेन W, तिभूवेन L   42a मर्त्य om. L   42b प्राण° D   42c दया° D   43a मर्त्यं om. L   43b सत्यनतं विहीनं D   43d विरुजा° S

चन्द्रामरेज्याभृगुजा मनुष्यं
कुर्वन्ति भूपं बहुवीर्यभाजम् ।
कर्माश्रिताः पुत्रसुहृत्समेतं
प्रभूतसंख्यार्जितभूरिवित्तम् ॥ ४४ ॥

चन्द्रामरेज्यार्कसुता मनुष्यं
नरेन्द्रपूज्यं जनयन्ति नित्यम् ।
विद्याविनीतं पशुपुत्रयुक्तं
गुणानुरक्तं सुधिया समेतम् ॥ ४५ ॥

चन्द्रासुरेज्यार्कसुता मनुष्यं
कुर्वन्ति विद्याविनयेन युक्तम् ।
कर्माश्रिताः साधुसमागमोक्तं
सुनीतिभाजं नृपपूजितं च ॥ ४६ ॥

भौमज्ञजीवा जनयन्ति मर्त्यं
कर्माश्रिताः सत्यरतं विनीतम् ।
पुण्याधिकं कल्पतरुं सुमुख्यं
कुलप्रधानं नयनाभिरामम् ॥ ४७ ॥

भौमज्ञशुक्रा जनयन्ति मर्त्यं
कर्माश्रिता भूरिधनैः समेतम् ।
बहुप्रतापं विजितारिपक्षं
क्षमान्वितं तीर्थकथानुरक्तम् ॥ ४८ ॥

भौमज्ञसौरा जनयन्ति मर्त्यं
कर्माश्रिताः कीर्तिकलत्रभाजम् ।
प्रभूतयानं प्रमदाभिरामं
कुलप्रधानं सततं सुशीलम् ॥ ४९ ॥

---

ABCDILSW

44a = 45a in S   44a °मरेज्य° LW   44b रूपं ABCDISW   45b मर्त्यं CD   45c विहीनं BCDILW   46c °समागमं च W   order in D: 48,47   48a मर्त्यं om. L   49a मर्त्यं om. L   49c प्रभूतयानं om. W   49d कुशीलं S

भौमामरेज्याभृगुजा मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
सदा प्रगल्भं प्रचुरप्रतापं
हितं गुरूणामथ बान्धवानाम् ॥ ५० ॥

भौमामरेज्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
सुरौद्रकर्मासुभूरिलाभं
यशोर्थभाजं नयकोविदं च ॥ ५१ ॥

भौमासुरेज्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति तीव्रम् ।
प्रचण्डकर्माणमतिप्रतप्तं
प्रभूतकोशं स्वकुलप्रधानम् ॥ ५२ ॥

सौम्यामरेज्याभृगुजा मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
महानरेन्द्रं प्रचुरप्रतापं
धर्मध्वजं सत्यसमन्वितं च ॥ ५३ ॥

सौम्यामरेज्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
धीरं प्रभूतद्रविणं नयज्ञं
सदानुरक्तं निजबान्धवानाम् ॥ ५४ ॥

सौम्यासुरेज्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
उद्यानवापीनिरतं सुधर्म्यं
प्रभूतयज्ञं च यशःप्रभावम् ॥ ५५ ॥

ABCDILSW

50a °मरेज्य° LW 50d दितं W 51b नित्यं om. L, मर्त्यं W 52a=51a in BCILW 52b मर्त्यं W 52c प्रपंचकर्माण° W 53a °मरेज्य° SW 53b-54a om. D 54b साधुं S 55a=54a in BCILW 55b धर्माश्रिताः ABCISW नित्यं om. L 55c सुधर्मं AIW 55d वयस° LW, प्रथशः° S

जीवासुरेज्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
निसर्गशुद्धं सुमतिं प्रगल्भं
वन्द्यं सतामार्तिविवर्जिताङ्गम् ॥ ५६ ॥

एवं त्रिविकल्पाः ॥

रवीन्दुभौमेन्दुसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
विद्याविधानं बहुवित्तभाजं
सुतप्रधानं परवर्जितं च ॥ ५७ ॥

रवीन्दुभौमामरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतभृत्यं प्रभया समेतं
सतामभीष्टं नृपवल्लभं च ॥ ५८ ॥

रवीन्दुभौमासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
हयैः समेतं बहुबुद्धिभाजं
व्यपेतमन्युं द्विजदेवभक्तम् ॥ ५९ ॥

रवीन्दुभौमार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
नानार्थशास्त्रैः सहितं कृतज्ञं
प्रभूतवस्त्राभरणं सुशीलम् ॥ ६० ॥

ABCDILSW

56b नित्यं om. L 56c °शुद्धिं D 56d °वर्जितं च W 57b नित्यं om. L, मर्त्यं ABDIW 57c °निधानं LS 57d परि° CDSW 58a = 59a in D 58b-59a om. BI 58c °नृत्यं D, °वित्तं L 59a = 58a in L 59b संजनयंति मर्त्यं om. D मर्त्यं om. L

रवीन्दुसौम्यामरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
विदग्धवाक्यं कृतनिश्चयं च
प्रहीनपापं सुतरां प्रगल्भम् ॥ ६१ ॥
रवीन्दुसौम्यासुरपूजिताङ्गाः
कर्माश्रिता संजनयन्ति मर्त्यम् ।
विवेकिनं सर्वकलासु दक्षं
क्षमान्वितं वीर्यसमन्वितं च ॥ ६२ ॥
रवीन्दुसौम्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
कृतज्ञमुत्साहिनमिष्टपौरं
प्रशंसितं साधुजनेन नित्यम् ॥ ६३ ॥
रवीन्दुजीवासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
गुणप्रधानं प्रथितप्रभावं
मेधाविनं धर्मसमन्वितं च ॥ ६४ ॥
रवीन्दुजीवार्कसुता मनुष्यं
कर्माश्रिता. संजनयन्ति नित्यम् ।
प्रभूतमित्रं सुतसौख्ययुक्तं
महाप्रसादं सुसमाधितं च ॥ ६५ ॥
रवीन्दुशुक्रार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति कान्तम् ।
तेजस्विनं शौचपरं प्रधानं
सदोद्यमं मानिनमुत्तमं च ॥ ६६ ॥

ABCDILSW

62a = 61a in L  62b मर्त्यं om. L  62c °कलास्त्र° AS, °कलाप° BL  order in A: 63a-b, 64b-65a, 63c-64a  63a = 60a in L  63b मर्त्यं CW  63c °मुत्साहित° L  64c परमं प्रभावं C  65b नित्यं om. L  65d °प्रसाहं I  66c तेजोन्वितं S  66d सदोग्रसंमानितं W

सूर्यारसौम्यामरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
कुलप्रधानं नतमुग्रवीर्यं
कल्याणकृत्यं परमप्रधानम् ॥ ६७ ॥

सूर्यारसौम्यासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
विप्रप्रियं सत्यरतं निरीहं
यशोन्वितं तीर्थरतं सुताढ्यम् ॥ ६८ ॥

सूर्यारसौम्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
प्रियातिथिं साधुभिरर्चिताङ्गं
प्रभूतवित्तं सुहृदं सदैव ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
मनस्विनं भूरिधनं सुताढ्यं
कृतज्ञमोजःसहितं गुणज्ञम् ॥ ७० ॥

सूर्यारजीवार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
मेधाविनं नीतिविधानदक्षं
क्षमासमेतं दृढसौहृदं च ॥ ७१ ॥

ABCDILSW

67d °प्रभावं S 68b संजनयंति मर्त्यं om. D मर्त्यं om. L 68c °हृतं W, °हृतं BCIL, °युतं D 68d यथो° B 69a=68a in S 69b नित्यं om. C, मर्त्यं S 69c °रन्वितांगं ABCDIS 69d तथैव W 70b मर्त्यं om. CL, नित्यं BW 71c मेधान्वितं I 71d दृढगौरुंषं S

सूर्यारशुक्रार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
सुरक्तपौरं प्रथिताभिमानं
सुतार्थयानैर्विविधैः समेतम् ॥ ७२ ॥

सूर्यज्ञजीवासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
नानार्थयानैः सुसुतैः समेतं
विद्याधिकं कार्यविचक्षणं च ॥ ७३ ॥

सूर्यज्ञजीवार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
नरेन्द्रसन्मानयुतं विधिज्ञं
शूरं कविं पापपराङ्मुखं च ॥ ७४ ॥

सूर्यज्ञशुक्रार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
दयाधिकं सत्यपरं सुदान्तं
हुताशभक्तं प्रियदर्शनं च ॥ ७५ ॥

सूर्यामरेज्याभृगुजार्कपुत्राः
कर्माश्रिताः संजनयन्ति साधुम् ।
सदा मनुष्यं पितृकृत्यरक्तं
विभूतिभाजं जनसंमतं च ॥ ७६ ॥

चन्द्रारसौम्यामरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
प्रधानभृत्यासधनं गतारिं
विदग्धगोष्ठीषु सदा प्रसक्तम् ॥ ७७ ॥

---

ABCDILSW

72b संजनयंति om. C नित्यं om. L 72d सुतीर्थ° W order in D: 73a, 74b-d, 74a, 73b-d, 75c 73b संजनयंति om C 74b संजनयंति नित्यं om. C मर्त्यं W 75b संजनयंति om. C नित्यं om. L 75c सुसत्यं C 76a °मरेज्य° LSW 76b कर्मेश्थिताः L संजनयंति om. C नित्यं D 76c °कार्य° L 77b कामा° W

चन्द्रारसौम्यासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
उद्यानवृक्षोद्यतमोजसाढ्यं
हयैः समेतं गुणगर्वितं च ॥ ७८ ॥

चन्द्रारसौम्यार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
सुधर्मरक्तं बहुकीर्तिभाजं
हितं सदा बन्दिविचक्षणानाम् ॥ ७९ ॥

चन्द्रारजीवासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
यज्ञोद्यतं शास्त्रकथानुरक्तं
श्रद्धान्वितं बन्दिजनैः समेतम् ॥ ८० ॥

चन्द्रारजीवार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
मतिप्रधानं सुपटुप्रशस्तं
हितं जनानां शुभसेवकानाम् ॥ ८१ ॥

चन्द्रारशुक्रार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
सन्तुष्टचित्तं नृपतेरभीष्टं
सुरूपदेहं नयभाजनं च ॥ ८२ ॥

ABCDILSW

78b मर्त्यं om. CL  78c °वृक्षोक्षत° W  78d गुणवर्जितं W  79b संजनयंति om. C  मर्त्यं BW  79c सुधर्मसक्तं L  80b संजनयंति मर्त्यं om. C  80c यशो° S  81b संजनयंति नित्यं om. C  81c-82b om. D  81c स्वपदप्रसक्तं W  82b संजनयंति om. C  नित्यं om. L; मर्त्यं W

चन्द्रज्ञजीवासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
सुवस्त्र भौ गजवाजिवृन्दै-
र्निषेवितं शत्रुनिबर्हणेन ॥ ८३ ॥
चन्द्रज्ञजीवार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
महुभजे वित्तशुद्धिं सुदानं
कृतज्ञतायुक्तमरोगदेहम् ॥ ८४ ॥
चन्द्रज्ञशुक्रार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति शान्तम् ।
विमुक्तरोगं गुणसत्ययुक्तं
निधानभाजं सुतसंयुतं च ॥ ८५ ॥
चन्द्रामरेज्याभृगुजार्कपुत्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
विचक्षणं सत्कविशिष्टधर्मं
सुपुण्यभाजं सुजनं सुरूपम् ॥ ८६ ॥
भौमज्ञजीवासुरपूजिताङ्गाः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतमित्रार्थसुवस्त्रयुक्तं
सौभाग्यभाजं सुतसौहृदं च ॥ ८७ ॥
भौमज्ञजीवार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति वीरम् ।
नृपप्रियं युद्धविधौ प्रवीणं
प्रभूतकोशं जनसंमतं च ॥ ८८ ॥

ABCDILSW

83b संजनयंति मर्त्यं om. C 83c °वृंदे C 83d °बर्हणं च S 84b संजनयंति om. C भूपं S 84c सुदीनं L, सुदारं C 84d-107c om. D 84d °मरोग्य° I, °नीरोग° S 85b शांतिं S 86a °मरेज्य° LSW 86b = 85b in S 86c सत्कविशिष्ट° W 86d सुमतिः C 87b संजनयंति मर्त्यं om. C मर्त्यं om. L 88c बुद्धिविधौ W प्रवालं I 88d जनवल्लभं C

भौमज्ञशुक्रार्कसुता मनुष्यं
कर्माश्रिताः संजनयन्ति धीरम् ।
उत्साहिनं नीतिपरं सुदान्तं
जितेन्द्रियं रूपसमन्वितं च ॥ ८९ ॥
भौमामरेज्याभृगुजार्कपुत्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
स्थिरस्वभावं स्थिरकृत्यदक्षं
सदोद्यमं भूरिधनं प्रसन्नम् ॥ ९० ॥
सौम्यामरेज्याभृगुजार्कपुत्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
विशिष्टसेवानिरतं सुरम्यं
महामनुष्यं निरतं द्विजानाम् ॥ ९१ ॥
एवं चतुर्विकल्पाः ॥
रवीन्दुभौमज्ञसुरेन्द्रपूज्याः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
प्रतापिनं नीतिपरं सुगात्रं
त्रपाधिकं कल्यशरीरभाजम् ॥ ९२ ॥
रवीन्दुभौमज्ञसिता मनुष्यं
कर्माश्रिताः संजनयन्ति नित्यम् ।
सत्यं कृपालुं विधिना समेतं
हिरण्यपण्यं सुखभाजनं च ॥ ९३ ॥
रवीन्दुभौमज्ञदिनेशपुत्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
कुलप्रधानं नियमैः समेतं
विचक्षणं काव्यविशारदं च ॥ ९४ ॥

---

ABCILSW

90a °मरेज्य° LS 90b कर्मस्थिताः W 91a °मरेज्य° SW 91b कर्मस्थिताः L मर्त्यं om. L 92b कर्मस्थिताः L संजनयंति मर्त्यं om. C मर्त्यं om. L 92d पापा° BCILW 93a=92a in W 93b नित्यं om. C, मर्त्यं W 93c सत्यं om. L 94b मर्त्यं om. C 94c विनयैः L

सूर्येन्दुभौमामरपूज्यशुक्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
कलासु दक्षं क्षमया समेतं
सन्मार्गरक्तं नयकोविदं च ॥ ९५ ॥

सूर्येन्दुभौमामरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
सुयज्ञमुत्साहिनमार्तिहीनं
कृपिप्रधानं सुधनैः समेतम् ॥ ९६ ॥

सूर्येन्दुभौमासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
सुबुद्धिभाजं विजितारिपक्षं
महाधनं प्रीतिपरं सुगणाम् ॥ ९७ ॥

सूर्येन्दुसौम्यामरपूज्यशुक्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
बहुक्षमं पापविहीनगात्रं
मतिप्रगल्भं जिनशास्त्रकान्तम् ॥ ९८ ॥

सूर्येन्दुसौम्यामरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
विद्याविनीतं नितरां प्रगल्भं
यज्ञानुरक्तं वरयानभाजम् ॥ ९९ ॥

सूर्येन्दुसौम्यासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
जनप्रियं प्राणसुखं कृतज्ञं
विशिष्टवाक्यं शुभगात्रकं च ॥ १०० ॥

ABCILSW

95 om. W    95b मर्त्यं om. C    95d नृप° I    96b मर्त्यं om. CL    97b मर्त्यं om. CL    97c °नारिवर्गं S    97d नीति° W    98b कर्मस्थिताः AB    मर्त्यं om. CL    99b कर्मस्थिताः W    मर्त्यं om. CL    99c °विहीनं BCILW    100b मर्त्यं om. L, नित्यं W

रवीन्दुजीवासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
हयाधिकं कलत्रतरुं समृद्धं
धनप्रधानं रणकर्मदक्षम् ॥ १०१ ॥

सूर्यारसौम्यामरपूज्यशुक्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
नीरोगदेहं प्रमदास्वभीष्टं
सुरूपवाक्यं बहुवल्लभं च ॥ १०२ ॥

सूर्यारसौम्यामरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
नानाहयप्राप्तसुखं सुवीरं
विज्ञानशीलं बहुमित्रवर्गम् ॥ १०३ ॥

सूर्यारसौम्यासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
परार्निहीनं बहुवित्तभाजं
स्त्रीणामभीष्टं सुनयं सदैव ॥ १०४ ॥

सूर्यारजीवासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
सुनीतिभाजं विविधोपचारं
चारित्रविद्यासहितं सुबुद्धिम् ॥ १०५॥

सूर्यज्ञजीवासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
बहुप्रजं सत्यशुचिं प्रसन्नं
तीर्थानुरक्तं व्रतवत्सलं च ॥ १०६ ॥

---

ABCILSW

101b मर्त्यं om. CL    102b मर्त्यं om. L    102d स्वरूप° W, कुरूप° S,—रूप° B    103b मर्त्यं om. CL   order in S: 104a-b, 106c-d, 105a-106b, 104c-d    104a=103a in CL    104b मर्त्यं om. L    104c बहुशांति° S    105-106 om. BCILW

चन्द्रारसौम्यामरपूज्यशुक्राः
कर्माश्रिताः संजनयन्ति मर्त्यम्।
नानानरेन्द्रप्रियमद्भुतं च
कविप्रधानं विनयेन युक्तम्॥ १०७॥

चन्द्रारसौम्यामरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम्।
व्रतानुरक्तं परदेशदक्षं
सुलब्धवित्तं व्यसनैर्विहीनम्॥ १०८॥

चन्द्रारसौम्यासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम्।
प्रतापिनं नीतिपरं सुधर्म्यं
शूरं कविं कामसमन्वितं च॥ १०९॥

चन्द्रारजीवासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम्।
सत्रामभीष्टं कृतकर्मयुक्तं
सुसाधुसेवानिरतं सदैव॥ ११०॥

चन्द्रज्ञजीवासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम्।
नृपप्रधानं गजवाजिभाजं
यशोधनं बान्धवपूजितं च॥ १११॥

---

ABCDILSW

107a = 109a in CILW   107b मर्त्यं om. CL   108b संजनयंति मर्त्यं om. D   मर्त्यं om. L   109b मर्त्यं om. CDL   109c सुधर्मे S   109d श्वरं W   110b कामा° W   संजनयंति मर्त्यं om. C   मर्त्यं om. DL   111b कामा° W   संजनयंति मर्त्यं om. CD   मर्त्यं om. L   111d सयोद्यतं D

भौमज्ञजीवासुरपूज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
काव्यानुरक्तं बहुशास्त्रभाजं
सुश्रीकमुत्साहिनमप्रमत्तम् ॥ ११२ ॥

एवं पंचविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
नरेन्द्रनाथं परवर्गहीनं
वीर्याधिकं कान्तिसमन्वितं च ॥ ११३ ॥

रवीन्दुभौमज्ञसुरेज्यसौराः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
दानानुरक्तं नृपतिं सुशीलं
बहुप्रमादं जनसंमतं च ॥ ११४ ॥

रवीन्दुभौमज्ञसितार्कपुत्राः
कर्माश्रिताः संजनयन्ति मर्त्यम् ।
श्रुतार्थयुक्तं नृपतिं प्रधानं
विद्यानुरक्तं भयवर्जितं च ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र–
शनैश्चराः संजनयन्ति मर्त्यम् ।
रणानुरक्तं नृपतिं प्रगल्भं
यशोन्वितं सत्यदयासमेतम् ॥ ११६ ॥

ABCDILSW

112b संजनयंति—col. om. I 112b संजनयंति मर्त्यं om. D मर्त्यं om. CL 113a °भौमासुरपूज्यशुक्राः BCILW 113b संजनयंति मर्त्यं om. CD मर्त्यं om. L 113d काम° L 114a °सुरेश° W 114b संजनयंति मर्त्यं om. D मत्य om. CL 115b संजनयंति मर्त्यं om. C मर्त्यं om. L 116b मर्त्यं om. DL 116d सस्य° ABDIS

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
गजाश्वसंघैर्विविधैः समेतं
प्रियातिथिं भूरियशोन्वितं च ॥ ११७ ॥

सूर्यारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ॥ ११८ ॥

चन्द्रारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
कर्माश्रयस्थाः स्थिरतासमेतं
नरेन्द्रचूडामणिघृष्टपादम् ॥ ११९ ॥

एवं षड्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
कर्माश्रिताः सत्ययशोधनेन
महीपतिं धर्मयशोन्वितं च ॥ १२० ॥

एवं समविकल्पाः ॥

## इति श्रीवृद्धयवने कर्माश्रययोगाध्यायः ॥

ABCDILSW

117a रवींदुपूज्यामरसौम्यशुक्र° BCIW  117b मर्त्य om. DL  118 om. L  118b संजनयंति मर्त्यं om. D  118c-119b om. D  118c-d om. ABCISW: 118c-d = 119c-d in S; W has: धनं च धान्यं बहलं प्रतापं
व्यापारलाभं क्रयविक्रयश्च
119b मर्त्यं om. L  119c = 117c in D  119d °पादौ CD  120b संजनयंति मर्त्यं om. D  मर्त्यं om. L  120c °यशोनिधानं S  120d सत्य° W °समन्वितं S  chapter col. श्री° om. S

# पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

लाभाश्रितस्तीक्ष्णकरः सचन्द्रो
नरं प्रसूते निधिलाभभाजम् ।
सदा समृद्धं वरवाजिनां च
देवप्रसक्तं बहुसौहृदं च ॥ १ ॥

लाभाश्रितस्तीक्ष्णकरः सभौमो
नरं प्रसूते बहुवीर्यभाजम् ।
हतारिपक्षं गतपापवर्गं
गर्वेण हीनं प्रभुतासमेतम् ॥ २ ॥

लाभाश्रितस्तीक्ष्णकरः ससौम्यो
नरं प्रसूते बहुलाभभाजम् ।
वाणिज्यविद्याश्वधनं नयज्ञं
विचक्षणं कामविवर्जितं च ॥ ३ ॥

लाभाश्रितस्तीक्ष्णकरः सजीवो
नरं प्रसूते द्विजकर्मरक्तम् ।
उद्यानवापीमखचैत्यभाजं
प्रभूतशास्त्रं कृषिकोविदं च ॥ ४ ॥

लाभाश्रितस्तीक्ष्णकरः सशुक्रो
नरं प्रसूते सुकलत्रभाजम् ।
प्रभूतमित्रं नृपतेरभीष्टं
सतामभीष्टं दृढविक्रमं च ॥ ५ ॥

ABCDILSW

1a सचंद्रो om. S  1b °लीलभाजं I  1c समृद्धिं C  2b प्रसूते om. L  2d वर्गेण CD  3b प्रसूते om. L  3c °धनेन युक्तं W  4b प्रसूते om. L  4c °मर° I, °पर° W  5a = 6a in W  5b प्रसूते om. L

लाभाश्रितस्तीक्ष्णकरः ससौरो
नरं प्रसूते विविधार्थभाजम्।
मनस्विनं पण्डितमप्रमेयं
कृतज्ञमात्सर्यरहितं प्रहृष्टम्॥ ६॥

लाभाश्रितो रात्रिपतिः सभौमो
नरं प्रसूते निजबन्धुयुक्तम्।
सुबुद्धिभाजं पटुतासमेतं
प्रधानमित्रं प्रियदर्शनं च॥ ७॥

लाभाश्रितो रात्रिपतिः ससौम्यो
नरं प्रसूते सुभगं मनोज्ञम्।
विचक्षणं कान्तियुतं समृद्धं
प्रभूतमित्रं बहुसौहृदं च॥ ८॥

लाभाश्रितो रात्रिपतिः सजीवो
नरं प्रसूते सुधिया समेतम्।
जितारिवर्गं धनवृद्धिलाभं
महामनुष्यं नृपतेरभीष्टम्॥ ९॥

लाभाश्रितो रात्रिपतिः सशुक्रो
नरं प्रसूते निरुजं सुविज्ञम्।
वरप्रजं सत्यरतं प्रगल्भं
सुरम्यनेत्रं प्रमदाप्रियं च॥ १०॥

ABCDILSW

6b प्रसूते om. L 6d कृत्यज्ञ° ABCW °मात्यारि° W, °मात्सर° L प्रहृष्टं I 7 om. D 7c पडवा° W 8a लाभस्थितो W 8b प्रसूते om. L मनुष्यं W 9-10 om. D 9 om. W 9b प्रसूते om. L 9c °वृद्ध° C, °ऋद्धि° S, °तद्धि° A, °भाद्धि° I 10b प्रसूते om. L 10d सुरम्यवेगं W

लाभाश्रितो रात्रिपतिः ससौरो
नरं प्रसूते स्तुतमीप्सिताढ्यम् ।
नानामखप्राप्तयशोविशालं
दानानुरक्तं विजितारिपक्षम् ॥ ११ ॥

लाभाश्रितो भूतनयः ससौम्यो
नरं प्रसूते बहुलाभभाजम् ।
जितेन्द्रियं शास्त्ररतं प्रगल्भं
सदा सुखाढ्यं जनसंमतं च ॥ १२ ॥

लाभाश्रितो भूतनयः सजीवो
नरं प्रसूते वृजिनैर्विहीनम् ।
महाप्रभावं विनयेन युक्तं
सदोद्यमं ब्राह्मणसंमतं च ॥ १३ ॥

लाभाश्रितो भूतनयः सशुक्रो
नरं प्रसूते व्रतदीक्षयाढ्यम् ।
सुविज्ञमुत्साहपरं प्रगल्भं
क्षमान्वितं पार्थिवपूजितं च ॥ १४ ॥

लाभाश्रितो भूतनयः ससौरो
नरं प्रसूते प्रथितप्रभावम् ।
जितेन्द्रियं शौर्यपरं प्रगल्भं
प्रभूतवस्त्राभरणं सदैव ॥ १५ ॥

लाभाश्रितः सोमसुतः सजीवो
नरं प्रसूते गजवाजिभाजम् ।
तेजस्विनं शौचपरं प्रगल्भं
तीर्थप्रियं सर्वकलासु दक्षम् ॥ १६ ॥

ABCDILSW

11b प्रसूते om. L °मीशताढ्यं W 11c °प्राप्ति° L °विलासं W 13b प्रसूते om. L वृजनै° D, व्रजिनै° BW, व्रजनै° S, विजनै° C 13d °तत्परं S 14b प्रसूते om. L 15b प्रसूते om. L 16b प्रसूते om. L

लाभाश्रितः सोमसुतः सशुक्रो
नरं प्रसूते वरमौक्तिकाढ्यम् ।
बहुप्रजं पुण्यपरं सुशीलं
शुद्धस्वभावं जनवल्लभं च ॥ १७ ॥

लाभाश्रितः सोमसुतः ससौरो
नरं प्रसूते शुभदारभाजम् ।
शुभात्मकं शुद्धजनानुरक्तं
मखप्रियं बन्धुहितं सदैव ॥ १८ ॥

लाभाश्रितो देवगुरुः सशुक्रो
नरं प्रसूते बहुबुद्धिभाजम् ।
प्रियंवदं स्त्रीमहितं प्रशस्तं
सुभोगदेहं गुरुसंमतं च ॥ १९ ॥

लाभाश्रितो देवगुरुः ससौरो
नरं प्रसूते प्रवरं द्विजानाम् ।
कान्त्या प्रधानं विभुतासमेतं
सुश्रीकमुत्साहपरं प्रशस्तम् ॥ २० ॥

सौरान्वितो लाभगतः सितश्च
नरं प्रसूते बहुशास्त्ररक्तम् ।
वैडूर्यमुक्तामणिहेमभाजं
सुरक्तगौरं नियमैः समेतम् ॥ २१ ॥

एवं द्विविकल्पाः ॥

ABCDILSW

17b प्रसूते om. L  18 om. D  18b प्रसूते om. L  19a दैत्यगुरुः W  19b प्रसूते om. L  19c °रहितं ABCILW प्रसक्तं D  20b प्रसूते om. L  21a श्रितश्च W, क्षितश्च B, क्षितिश्च CD, भृगुश्च A

रवीन्दुभौमा जनयन्ति मर्त्यं
लाभाश्रिता लाभशतैः समेतम् ।
तेजोन्वितं नीतिपरं सुनेत्रं
कल्याणकर्माणमलोलुपं च ॥ २२ ॥

रवीन्दुसौम्या जनयन्ति मर्त्यं
लाभाश्रिताः पुण्यविधौ प्रगल्भम् ।
सुवक्त्रनेत्रं प्रमदास्वभीष्टं
सत्यानुरक्तं बहुसौहृदं च ॥ २३ ॥

रवीन्दुजीवा जनयन्ति मर्त्यं
प्रख्यातवीर्यं प्रणतं सुराणाम् ।
नानार्थशास्त्रैः प्रथितं विधिज्ञं
बन्दिस्तुतं कीर्तिसमन्वितं च ॥ २४ ॥

रवीन्दुशुक्रा जनयन्ति मर्त्यं
लाभाश्रिताः कल्पतरुं मनोज्ञम् ।
सुयज्ञरक्तं नृपतेरभीष्टं
समुत्सुकं साधुजनस्य नित्यम् ॥ २५ ॥

रवीन्दुसौरा जनयन्ति मर्त्यं
लाभाश्रिताः प्राप्तसुखं सुरूपम् ।
महार्थयानाशनवस्त्रभाजं
विधेयभृत्यं दृढसौहृदं च ॥ २६ ॥

ABCDILSW

22b-23a om. B 23d स्थिरसौहृदं W 24b पुरुषं पुराणां C 24c सुविज्ञं S 24d बंदा° I, बंधि AD 25a मर्त्यं om. L 25b-26a om. D 25b °तनुं BCILSW 25c सूर्यज्ञ° W 25d समुत्सकं L, सुश्रूषकं S, समुत्सुत् B, समु॰ W 26a मर्त्यं om. L 26b स्वरूपं CL 26c °नासन° W

सूर्यारसौम्या जनयन्ति मर्त्यं
प्रभासमेतं नयकोविदं च ।
विचित्रदेहाभरणं निरीहं
बहुश्रुतं धर्मविधानदक्षम् ॥ २७ ॥
॥ २८ ॥

सूर्यारशुक्रा यदि लाभसंस्था
नरं प्रकुर्वन्ति निधानभाजम् ।
बहुश्रुतं प्रीतिपरं कृतज्ञं
मनोज्ञदेहं सुतलालसं च ॥ २९ ॥

सूर्यारसौरा यदि लाभसंस्था
नरं प्रकुर्वन्ति धिया समेतम् ।
पुरूपदेहं सुभगं सुमर्त्यं
धर्मप्रधानं चिरजीवितं च ॥ ३० ॥

सूर्यज्ञजीवा जनयन्ति मर्त्यं
लाभाश्रिता लाभयुतं विधिज्ञम् ।
सन्मार्गरक्तं बहुकीर्तिभाजं
स्थिरस्वभावं प्रणतं प्रगल्भम् ॥ ३१ ॥

सूर्यज्ञशुक्रा जनयन्ति मर्त्यं
लाभाश्रिताः कल्पतरुं सुविज्ञम् ।
शास्त्रानुरक्तं प्रियया समेतं
हतारिपक्षं प्रणतं द्विजानाम् ॥ ३२ ॥

सूर्यज्ञसौरा जनयन्ति मर्त्यं
लाभाश्रिताः सर्वनरेन्द्रपूज्यम् ।
दीक्षानुरक्तं व्रतशास्त्ररक्तं
महाप्रगल्भं प्रणतं द्विजानाम् ॥ ३३ ॥

---

ABCDILSW

27a मर्त्यं om. L   27d-29b om. DI   28 om. cod.   29c °करं W   30b प्रकुर्वंति om. L   30d विद्र° I   32a मर्त्यं om. L   32b °तरुं BILSW   32c प्रियता° S   33a मर्त्यं om. L

सूर्यामरेज्याभृगुजा मनुष्यं
लाभाश्रिताः संजनयन्ति कान्तम् ।
प्रतापिनं शीलधनं नयज्ञं
स्थिरस्वभावं नृपवन्दितं च ॥ ३४ ॥

सूर्यामरेज्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति वीरम् ।
प्रभूतविद्यं विविधं सुविज्ञं
विचक्षणं शान्तिसमन्वितं च ॥ ३५ ॥

सूर्यासुरेज्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति पुष्टम् ।
सन्तुष्टिभाजं विनयप्रधानं
दयान्वितं देवगुरुप्रभक्तम् ॥ ३६ ॥

चन्द्रारसौम्या जनयन्ति मर्त्यं
लाभाश्रिता यानविचित्रभाजम् ।
सत्यार्जने तत्परमिष्टसत्यं
जनानुरक्तं भयवर्जितं च ॥ ३७ ॥

चन्द्रारजीवा जनयन्ति मर्त्यं
लाभाश्रिताः खेदरुजाविमुक्तम् ।
उदारचेष्टं सुभगं सुगात्रं
यानैः समेतं सुरतप्रगल्भम् ॥ ३८ ॥

ABCDILSW

34a °मरेज्य° LW 34b लाभास्थिताः L मर्त्यं L 34d स्थिरवंदितं D 35b वीरं—37a जनयंति om. D 35c °विद्यं om. W, °विद्या° C विविधा S सुविद्यं S 36b धुर्या I 36c सुतुष्टि° BIS, सुतुष्टे A, सुनिष्ठि° W 37b पान° W 37c °मिष्टमर्त्यं W 37d नय° D 38a मर्त्यं om. L 38b वेद° W °रजा° L, °सजा° D 38c सुभगं om. A

चन्द्रारशुक्रा जनयन्ति मर्त्यं
लाभाश्रिताः सत्यविवादशीलम् ।
सभासदं सर्वसुखाधिवासं
प्रभूतपूजार्जितभूषणं च ॥ ३९ ॥
चन्द्रारसौरा जनयन्ति मर्त्यं
लाभाश्रिता लब्धधनं सुरूपम् ।
प्रज्ञाधिकं संजनयन्ति शुभ्रं
महामनुष्यं सुधिया समेतम् ॥ ४० ॥
चन्द्रज्ञजीवा जनयन्ति मर्त्यं
विदग्धगोष्ठीनिरतं प्रगल्भम् ।
विचक्षणं सर्वकलानिधानं
नृपप्रसादाप्तसुखं सदैव ॥ ४१ ॥
चन्द्रज्ञशुक्रा जनयन्ति मर्त्यं
सन्ध्यान्वितं लोकविपूजिताङ्गम् ।
सुदन्तनेत्रं सुभगं गतारिं
प्रियातिथिं ब्राह्मणसंमतं च ॥ ४२ ॥
चन्द्रज्ञसौरा जनयन्ति मर्त्यं
लाभाश्रिता वाजिगजैः समेतम् ।
प्रसन्नवाक्यं कृपया समेतं
हिरण्यपण्यं सुतलालसं च ॥ ४३ ॥
चन्द्रामरेज्याभृगुजा मनुष्यं
लाभाश्रिताः संजनयन्ति शुद्धम् ।
प्रसन्नवक्त्रं प्रथितप्रभावं
सुसंस्तुतं साधुजनैः प्रवीणम् ॥ ४४ ॥

ABCDILSW

39a मर्त्यं om. L 40a मर्त्यं om. L 40b स्वरूपं L 40c शुभं S, नित्यं C 42b संघा° ACDI 43b °गतैः I 44a °मरेज्य° LSW 44b शुद्धाः S 44d प्रवीणैः W

चन्द्रामरेज्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति नित्यम् ।
भयेन मुक्तं रणकर्मदक्षं
दीक्षाप्रियं शास्त्रविशारदं च ॥ ४५ ॥

चन्द्रासुरेज्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
विचित्रलाभैः सहितं प्रसन्नं
सुवल्गुवाक्यं प्रियदर्शनं च ॥ ४६ ॥

भौमज्ञजीवा जनयन्ति मर्त्यं
लाभाश्रिताः कामधनं सुदेहम् ।
सुपादपाणिं नयनाभिरामं
गजाश्वलाभैर्विविधैः समेतम् ॥ ४७ ॥

भौमज्ञ[शुक्रा जनयन्ति मर्त्यं]
॥ ४८ ॥

भौमज्ञसौरा जनयन्ति मर्त्यं
लाभाश्रिताः सत्यधियं सुरूपम् ।
मनस्विनं नीतिपरं प्रशस्तं
सङ्ग्रामलाभैर्विविधैः समेतम् ॥ ४९ ॥

भौमामरेज्याभृगुजा मनुष्यं
लाभाश्रिताः संजनयन्ति दान्तम् ।
तपस्विनं मान्यमरिप्रमुक्तं
विधानविद्याभरणान्वितं च ॥ ५० ॥

ABCDILSW

45b संजनयंति—46c विचित्रला° om. D 46b संजनयंति मर्त्यं om. C सत्यं S 48 om. LSW 48a °शुक्रा—d om. ABCDI 49a मर्त्यं om. L 50a °मरेज्य° LSW

भौमामरेज्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति विज्ञम् ।
उदारवाक्यं सुभगं सुगात्रं
वाजिप्रियं सर्वसुखैः समृद्धम् ॥ ५१ ॥
भौमासुरेज्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति मन्यम् ।
स्थिरस्वभावं स्थिरसौहृदं च
चारित्रयुक्तं कलहेन हीनम् ॥ ५२ ॥
सौम्यामरेज्याभृगुजा मनुष्यं
लाभाश्रिताः संजनयन्ति भूपम् ।
हर्म्यश्वकोशान्वितमप्रमत्तं
गुणान्वितं शास्त्रविचक्षणं च ॥ ५३ ॥
सौम्यामरेज्यार्कसुता मनुष्यं
लाभाश्रिताः क्षान्तियुतं सुताढ्यम् ।
प्रभूतविद्याभरणैः समेतं
सुपुण्यरक्तं कृपया समेतम् ॥ ५४ ॥
लाभाश्रिताः सौम्यसितार्कपुत्रा
नरं प्रकुर्वन्ति विशिष्टरक्तम् ।
धराधिपं मुख्यतमं नराणां
सुसंस्तुतं तीर्थपरं सदैव ॥ ५५ ॥
जीवासुरेज्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति कान्तम् ।
कलस्वनं सर्वकुलस्वभावं
मनीषिणं धर्मरतं तथाढ्यम् ॥ ५६ ॥
एवं त्रिविकल्पाः ॥

ABCDILSW

51b संजनयंति om. C 52a = 51a in BILW 52b-53a om. D 52d कनहेन B, कनकेन LW 53a °मरेज्य° LSW 53b रूपं ABCDILS, रूपं W order in D: 53c, 54a-b, 53d 56b संजनयंति om. C कांतिं W 56c °कुलप्रधानं S

रवीन्दुभौमेन्दुसुता मनुष्यं
लाभाश्रिताः संजनयन्ति नित्यम् ।
प्रभूतवित्तं सुभगं जितारिं
दान्तं विनीतं परमर्दनं च ॥ ५७ ॥

रवीन्दुभौमामरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
बहुप्रभं नीतिपरं श्रुतज्ञं
हतारिपक्षं प्रथितप्रभावम् ॥ ५८ ॥

रवीन्दुभौमासुरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
हिरण्यमुक्तामणिवस्त्रलाभं
विशालबुद्धिं नृपसेवकं च ॥ ५९ ॥

रवीन्दुभौमार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
बहुक्रयाढ्यं परतासुदक्षं
क्षोणीपतेः संमतमोजसाढ्यम् ॥ ६० ॥

रवीन्दुसौम्यामरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
प्रतापिनं धर्मपरं सुविज्ञं
पूज्यं जनानां गुणसंयुतानाम् ॥ ६१ ॥

ABCDILSW

57b संजनयंति om C मर्त्यं W 58b संजनयंति मर्त्यं om. C नित्यं S 58c बहुप्रजं BLSW 59a=58a in CDILW 59b संजनयंति मर्त्यं om. C मर्त्यं om. L 59c-d om. W order in W: 60c-d, 60a-b 60b संजनयंति मर्त्यं om. C मर्त्यं om. L 60c बहुकृपा° cod. 61a °भौम्या° AC पूज्यतांगा D 61b संजनयंति मर्त्यं om C मर्त्यं om. L

रवीन्दुसौम्यासुरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
निसर्गविद्यात्मककाव्यभाजं
श्रुतप्रधानं सुहृदं जनानाम् ॥ ६२ ॥

रवीन्दुसौम्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति पुण्यम् ।
प्रसादशीलं प्रणतं गुरूणां
प्रभूतविद्यागणरंजिताङ्गम् ॥ ६३ ॥

रवीन्दुजीवासुरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
शास्त्रप्रियं कीर्तिसमन्विताङ्गं
गुणानुरक्तं प्रियकोविदं च ॥ ६४ ॥

रवीन्दुजीवार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति विज्ञम् ।
महाप्रभावं विविधप्रतापं
दानानुरक्तं सुधिया समेतम् ॥ ६५ ॥

रवीन्दुशुक्रार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति धन्यम् ।
यशस्विनं धर्मदयासमेतं
विद्यान्वितं ब्राह्मणलोकतुष्टम् ॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
सुपानभाजं विजितारिसंघं
प्रभाविनं नीतिविचलक्षणं च ॥ ६७ ॥

**ABCDILSW**

62a=61a in W order in D: 62a, 63b-d, 62c-63b 62b संजनयंति मर्त्यं om. C मर्त्यं om. L 62d सुहितं S 63b संजनयति मर्त्यं om. C 63d °रणरं° ABILSW, °रिंगणं° D, °सुरणं° C 64b संजनयंति om. C मर्त्यं om L 65b संजनयंति om. C 66c यशःस्थितं W सत्य° W 66d विद्याविनं ABCDILS 67b संजनयंति मर्त्यं om. C मर्त्यं om. L 67d प्रभा° om. W

सूर्यारसौम्यासुरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
उदारवाक्यं सुजनानुरक्तं
नृपप्रियं शौर्यसमन्वितं च ॥ ६८ ॥

सूर्यारसौम्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति नित्यम् ।
भूरिप्रभावं बहुशिल्पभाजं
नानार्थयानप्रवरैः समेतम् ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
बन्धुप्रियं सर्वसुखाधिवासं
सन्तुष्टभाजं विनयप्रधानम् ॥ ७० ॥

सूर्यारजीवार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति नित्यम् ।
प्रभूतवित्तं वनितास्वभीष्टं
चारित्रविद्याध्ययनैः समेतम ॥ ७१ ॥

सूर्यारशुक्रार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति कान्तम् ।
तेजोन्वितं सर्वकलासु दक्षं
घृणान्वितं धर्ममतिं सदैव ॥ ७२ ॥

सूर्यज्ञजीवासुरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
विचित्रकीर्त्या सहितं निरीहं
सुचारुनेत्रं गुणवर्जिताङ्गम ॥ ७३ ॥

---

ABCDILSW

68b संजनयंति om. C मर्त्यं om. L 69b संजनयंति नित्यं om. C नित्यं om. L, मर्त्यं ABDIW 69d °पान° BLW °प्रभवै L 70b संजनयंति मर्त्यं om. C मर्त्यं om. L 70c-73b om. I 70d संतुष्टि° S 71b संजनयंति om. C मर्त्यं S 72b संजनयंति om. C नित्यं W 73b-74a om. D 73b-d om. C मर्त्यं om. L 73d गुणरंजितांगं S

सूर्यज्ञजीवार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति सेव्यम् ।
व्रतान्वितं द्रोहविवर्जिताङ्गं
धर्मध्वजं दैन्यविवर्जितं च ॥ ७४ ॥

सूर्यज्ञशुक्रार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति नित्यम् ।
स्थिरस्वभावं भयपापहीनं
विचित्रवाक्यं श्रुतलालसं च ॥ ७५ ॥

सूर्यामरेज्याभृगुजार्कपुत्रा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
अनेकलाभैर्विविधैः समेतं
सन्तुष्टचित्तं जनसंमतं च ॥ ७६ ॥

चन्द्रारसौम्यामरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
विद्याधिकं भूरिधनं नरेन्द्रं
हतारिवर्गं बहुदानशीलम् ॥ ७७ ॥
॥ ७८ ॥

चन्द्रारसौम्यार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति दान्तम् ।
विप्रान्नभाजं सततं सुवक्त्रं
बहुक्षमं भूरिदमं मनोज्ञम् ॥ ७९ ॥

ABCDILSW

order in C: 74c, 74a-d  75a = 74a in D  75c बहुपान° W
76a °मरेज्य° LSW  76b संजनयंति मर्त्यं om. C  76c-77b om. W
order in D: 77a-b, 80a-b, 77c-d, 79  77a: चंद्रामरेज्यासुरपूजितागा BL
77b-79a om. A  77b संजनयंति om. C  मर्त्यं om. DL  78 om.
cod; अत्र तृतितं B, अत्र तृतिटं W

चन्द्रारजीवासुरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
सत्त्वप्रधानं गुरुभक्तिरक्तं
मनस्विनं सर्वसुखैः समृद्धम् ॥ ८० ॥

चन्द्रारजीवार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति भूपम् ।
सद्योगमाढ्यं प्रचुरान्नपानं
विदग्धगोष्ठीषु रतं सदैव ॥ ८१ ॥

चन्द्रारशुक्रार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति धन्यम् ।
भूपालनाथं हयसंघनाथं
शूरं सदा पण्डितमानसं च ॥ ८२ ॥

चन्द्रज्ञजीवासुरपूजिताङ्गा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
समुद्रपर्यन्तधराधिनाथं
जितारिवर्गं बहुधर्मकृत्यम् ॥ ८३ ॥

चन्द्रज्ञजीवार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति कान्तम् ।
सुभाषितज्ञं विबुधाधिनाथं
क्षितीश्वरं ब्राह्मणसंमतं च ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुता मनुष्यं
लाभाश्रिताः पुष्टियुतं सुरूपम् ।
क्षोणीपतिं तीर्थरतं सुमुख्यं
धराधिनाथं रणकोविदं च ॥ ८५ ॥

ABCDILSW

80b संजनयंति मर्त्यं om. C 80c सत्व L, शत्रु° W, सर्व° CS 80d समृद्धिं C, समेतं D 81c °माद्यं LSW 82b वंद्यं S 82d भूरं S °मानतं ABDIL 84a चंद्रार° W, चंद्र° B 84c सुभावित° A °ज्ञानबुधा° D 85b पुष्ट° D सरूपं C, रूपं B 85c °रतिं L

चन्द्रामरेज्याभृगुजार्कपुत्रा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
तेजोन्वितं पुण्यपरं जितारिं
महीपतिं शास्त्रविचक्षणं च ॥ ८६ ॥

भौमज्ञजीवासुरपूजिताङ्का
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
भोगान्वितं नीतिनयं प्रगल्भं
क्षितीश्वरं ब्राह्मणमानसं च ॥ ८७ ॥

भौमज्ञजीवार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति दक्षम् ।
शौर्यान्वितं भूमिपतिं हतारिं
प्रियंवदं दानपरं सदैव ॥ ८८ ॥

भौमज्ञशुक्रार्कसुता मनुष्यं
लाभाश्रिताः संजनयन्ति पुष्टम् ।
नरेन्द्रमाज्ञासहितं सुशूरं
भयैर्व्यपेतं द्विजवत्सलं च ॥ ८९ ॥

भौमामरेज्याभृगुजार्कपुत्रा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतपुत्रार्थनयैः समेतं
महीपतिं शत्रुविवर्जितं च ॥ ९० ॥

ABCDILSW

order in S: 86a-b, 86c तेजोन्वितं, 87c नीतिमयं—87d, 86c पुण्य°—86d, 87a-b, 87c भोगान्वितं, सत्यसमन्वितं च 86a °मरेज्य° LSW 86c °न्वितं—87b ला° om. A 86c °परा° I 87b-89a om. W 87b-88a om. BL 87c °भयं ACDI, °मयं S 87d °मानतं ADIS 88b-89a om. D order in S: 90, 89 89c °सहितं--90b सं om. I 89c सुश्वरं S, सुसार L, सुरूपं D 90a °मरेज्य° LSW 90b मर्त्यं om. C, दक्षं S

सौम्यामरेज्याभृगुजार्कपुत्रा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
विद्याधिकं भूमिपतिं सुविज्ञं
विज्ञानशीलं श्रुतवत्सलं च ॥ ९१ ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्या
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
सुशीलमुत्साहपरं नरेन्द्रं
महागजाढ्यं रणकोविदं च ॥ ९२ ॥

रवीन्दुभौमज्ञसिता मनुष्यं
लाभाश्रिताः संजनयन्ति भव्यम् ।
श्रुतप्रधानं कृतकैर्विमुक्तं
पृथ्वीपतिं पुण्यजनैः समेतम् ॥ ९३ ॥

रवीन्दुभौमज्ञदिनेशपुत्रा
लाभाश्रिताः संजनयन्ति शूरम् ।
लज्जाधिकं पार्थिवमप्रमेयं
कृतज्ञमुग्रं रणसाहसं च ॥ ९४ ॥

सूर्येन्दुभौमामरपूज्यशुक्रा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
सुतार्थभाजं सुखभोगभाजं
धिया समेतं नृपतिं जिनं च ॥ ९५ ॥

**ABCDILSW**

91a °मरेज्य° LSW 91b-93a om. D 91b मर्त्यं om. CL 92b संजनयंति मर्त्यं om. C मर्त्यं om. L 93a-b मनुष्यं लाभाश्रिताः om. A 93b भव्यं om. L 94b-95a om. W 94d स्वतज्ञ° C 95a रवींदु° CD 95b संजनयंति मर्त्यं om. C 95c मुखार्थं° L °लाभं CD °खभोगभाजं om. L °भोग° om. W, °भोज° ABCD 95d नृपपूजितं L

सूर्येन्दुभौमामरपूज्यसौरा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतमित्रं व्रतकर्मशीलं
सन्तुष्टचित्तं बहुलोलुपं च ॥ ९६ ॥

सूर्येन्दुभौमासुरपूज्यसौरा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
सुपण्डितं पार्थिवमानभाजं
गजप्रियं पापपराङ्मुखं च ॥ ९७ ॥

सूर्येन्दुसौम्यामरपूज्यशुक्रा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
बहुप्रजं शीलधनं नयज्ञं
सन्तुष्टचित्तं बहुसौहृदं च ॥ ९८ ॥

सूर्येन्दुसौम्यामरपूज्यसौरा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
द्विजानुरक्तं प्रमदास्वभीष्टं
लज्जाधिकं कीर्तिसमन्वितं च ॥ ९९ ॥

रवीन्दुसौम्यासुरपूज्यसौरा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
नानामहेन्द्रैः सहितं सुदान्तं
गुणानुरक्तं सुधनैः समेतम् ॥ १०० ॥

---

ABCDILSW

96b मर्त्यं om. L  97a = 96a in D  97b संजनयंति मर्त्यं om. C मर्त्यं om. L  97d पार्थिववल्लभं W  after 97 W continues with a different text, which will be edited in vol. III  98b संजनयंति मर्त्यं om. C मर्त्यं om. L  99a °सौरामर° BDI  °सौम्या BI, °शुक्रा D  99b संजनयंति मर्त्यं om. C मर्त्यं om. L  99c हेजा° I  99d लना° I, लाला° D  100a °सौम्यामर° L  100b मर्त्यं om. L

रवीन्दुजीवासुरपूज्यसौरा
लाभाश्रिता सं ।नय न्त र्यं ।
गुणान्वितं प्रीतिकरं सुनेत्रं
प्रियागमं कीर्तिसमन्वितं च ॥ १०१ ॥

सूर्यारसौम्यामरपूज्यशुक्रा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
मातापितृभ्यां निरतं मनोज्ञं
विचक्षणं क्षान्तिसमन्वितं च ॥ १०२ ॥

सूर्यारसौम्यामरपूज्यसौरा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
कुलप्रधानं प्रणतारिपक्षं
सुशीलभाजं बहुधर्मरक्तम् ॥ १०३ ॥

सूर्यारसौम्यासुरपूज्यसौरा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
व्रतोपवासामरविप्रभक्तं
दानान्वितं सत्यदयासमेतम् ॥ १०४ ॥

सूर्यारजीवासुरपूज्यसौरा
लाभाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभासमेतं बहुशास्त्ररक्तं
गुणान्वितं शौचपरं सदैव ॥ १०५ ॥

ABCDILS

101b मर्त्यं om. L   101c °करं om. L, °परं C   order in D: 102a-b, 103c-d, 102a-d, 104   102a = 103a in C   102b संजनयंति मर्त्यं om. C मर्त्यं om. L   102d °कांति° D   103a-b om. D   103b मर्त्यं om. L   104b संजनयंति मर्त्यं om. C मर्त्यं om. L   104c °मुक्तं D   105b मर्त्यं om. L   105d °णान्वितं—51, 3d कुशी° om. D

सूर्यज्ञजीवासुरपूज्यसौरा
　　लाभाश्रिताः संजनयन्ति मर्त्यम् ।
विद्यासु रक्तं गुरुदेवभक्तं
　　परैर्विमुक्तं सुधिया समेतम् ॥ १०६ ॥
चन्द्रारसौम्यामरपूज्यशुक्रा
　　लाभाश्रिताः संजनयन्ति मर्त्यम् ।
दयासमेतं क्रियया समेतं
　　प्रियंवदं बान्धवसंमतं च ॥ १०७ ॥
चन्द्रारसौम्यामरपूज्यसौरा
　　लाभाश्रिताः संजनयन्ति मर्त्यम् ।
नरेन्द्रमान्यं कृषिकर्मदक्षं
　　क्षतारिपक्षं विभवैः सदैव ॥ १०८ ॥
चन्द्रारसौम्यासुरपूज्यसौरा
　　लाभाश्रिताः संजनयन्ति मर्त्यम् ।
श्रुतार्थभाजं विजितारिपक्षं
　　महीपतिं शास्त्रविशारदं च ॥ १०९ ॥
चन्द्रारजीवासुरपूज्यसौरा
　　लाभाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतभृत्यं गुरुतासमेतं
　　सुजानुभाजं निरुजं सदैव ॥ ११० ॥
चन्द्रज्ञजीवासुरपूज्यसौरा
　　लाभाश्रिताः संजनयन्ति मर्त्यम् ।
बन्दिस्तुतं काव्यकथानुरक्तं
　　शौर्यान्वितं धर्मपरं सदैव ॥ १११ ॥

ABCILS

106b मर्त्यं om L　　0 c [illegible] C　　.o d [illegible] ABCIL　　[illegible] b मर्त्यं om. CL　　[illegible] c क्रियया A, [illegible] S　　10 d पूजि॰ S　　[illegible] मर्त्यं om. L　　108d समेतं L　　109b मर्त्यं om. L　　110b मर्त्यं om. L　　111b मर्त्यं om. L

भौमज्ञजीवासुरपूज्यसौरा
 लाभाश्रिताः संजनयन्ति मर्त्यम् ।
श्रद्धान्वितं भूरिधनं यशस्यं
 प्रभूतपुत्रान्वितमोजसाढ्यम् ॥ ११२ ॥

एवं पंचविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्रा
 लाभाश्रिताः संजनयन्ति मर्त्यम् ।
सौभाग्यविद्याविभवैः समेतं
 सदा कृतज्ञं दृढपौरुषं च ॥ ११३ ॥

रवीन्दुभौमज्ञसुरेज्यसौरा
 लाभाश्रिताः संजनयन्ति मर्त्यम् ।
तीर्थानुरक्तं सुधिया समेतं
 विचक्षणं रोषविवर्जितं च ॥ ११४ ॥

रवीन्दुभौमज्ञसितार्कपुत्रा
 लाभाश्रिताः संजनयन्ति मर्त्यम् ।
बहुश्रुतं कान्तियुतं विधिज्ञं
 पूज्यं नराणां गुणसंयुतानाम् ॥ ११५ ॥

सूर्येन्दुभौमामरपूज्यशुक्र–
 शनैश्चराः संजनयन्ति मर्त्यम् ।
विप्रप्रियं देवकथानुरक्तं
 सुकीर्तितं शास्त्रविचक्षणं च ॥ ११६ ॥

ABCILS

112b मर्त्यं om. L 112c यशस्वं CIL 113b मर्त्यं om. L 114b मर्त्यं om. CL 114d रोग° L 115b मर्त्यं om. L 115d °संयुतं च C 116b मर्त्यं om. CL 116d वा I

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
आरामदेवानुरतं प्रगल्भं
सतामभीष्टं श्रुतकोविदं च ॥ ११७ ॥

रव्यारसौम्यामरपूज्यशुक्र
शनैश्चराः संजनयन्ति मर्त्यम ।
सुरूपवक्त्रं सुकुलप्रधानं
महामतिं गीतविशारदं च ॥ ११८ ॥

चन्द्रारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
समस्तभूपाधिपतिं प्रगल्भं
प्रमादहीनं गजवाजिभाजम् ॥ ११९ ॥

एवं षड्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
धराधिनाथं गतरोगपापं
धर्माकुलं ब्राह्मणसंमतं च ॥ १२० ॥

एवं सप्तविकल्पाः ॥

**इति श्रीवृद्धयवने लाभाश्रययोगाध्यायः ॥**

ABCILS

117b मर्त्यं om. L 118a = 117a in BCL order in S : 119, 118
118a सूर्यारि° S 118b मर्त्य om. CL 118c सुसत्यवक्त्रं S 118d
महीपतिं L पीत° A 119b मर्त्य om. CL 119c-120b in marg. C
120b मर्त्यं om. L col. °विकल्पाः om. S chapter col. श्री° om. S

# एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

व्ययाश्रितस्तीक्ष्णकरः सचन्द्रो
नरं प्रसूतेऽल्पसुखं निराशम् ।
अल्पायुषं दीनतमं विरूपं
पराभिभूतं कुजनेन नित्यम् ॥ १ ॥

व्ययाश्रितस्तीक्ष्णकरः सभौमो
नरं प्रसूते व्यथितं कृशाङ्गम् ।
पराभिभूतं बहुपापरक्तं
दुष्टस्वभावं गुणवर्जितं च ॥ २ ॥

व्ययाश्रितस्तीक्ष्णकरः ससौम्यो
नरं प्रसूतेऽतिरुजासमेतम् ।
असह्यं क्रूरमतिं सुलुब्धं
मूर्खं कुशीलं रणकातरं च ॥ ३ ॥

व्ययाश्रितस्तीक्ष्णकरः सजीवो
नरं प्रसूते व्यसनाभिभूतम् ।
मलिम्लुचं रोगपरं कृतघ्नं
व्यर्थश्रमं धर्मविवार्जितं च ॥ ४ ॥

व्ययाश्रितस्तीक्ष्णकरः सशुक्रो
नरं प्रसूतेऽल्पसुखं कुरूपम् ।
सुदुष्टदारं व्यसनाभिभूतं
पापप्रियं कामनिपीडिताङ्गम् ॥ ५ ॥

ABCDILS

1a व्ययान्वित° L  1b निरोषं ABIL, निरोत्थं C  2a व्ययान्वित° L  2b प्रसूते om. L  2d पुष्ट° I  3b प्रसूते om. L  3c सुलब्धं L  4b प्रसूते om. L  4c नीचपरं CD  5b प्रसूते om. L  5d पापाधिकं L °पीडितं च BLS

व्ययाश्रितस्तीक्ष्णकरः ससौरो
नरं प्रसूते जननीविरुद्धम् ।
नीचानुरक्तं च कथानुरक्तं
सुनीचकर्माणमतिव्ययार्तम् ॥ ६ ॥

व्ययाश्रितो रात्रिपतिः सभौमो
नरं प्रसूते कठिनस्वभावम् ।
विहीनवृत्तिं बहुशुद्धरक्तं
भयान्वितं शीलविवर्जितं च ॥ ७ ॥

व्ययाश्रितो रात्रिपतिः ससौम्यो
नरं प्रसूते कलहैः समेतम् ।
दरिद्रमार्तं परपाकरक्तं
सदा भयाढ्यं प्रभया विहीनम् ॥ ८ ॥

व्ययाश्रितो रात्रिपतिः सजीवो
नरं प्रसूतेऽतिकठोरवाक्यम् ।
विरूपगात्रं परदेशभाजं
विहीनकोशं गतसौहृदं च ॥ ९ ॥

व्ययाश्रितो रात्रिपतिः सशुक्रो
नरं प्रसूते निधनं व्ययार्तम् ।
प्रेष्यं खलं धर्मविवर्जिताङ्गं
सुनिर्घृणं कामपराजितं च ॥ १० ॥

व्ययाश्रितो रात्रिपतिः ससौरो
नरं प्रसूते कुकलत्रभाजम् ।
कुपुत्रधान्यान्वितमिष्टवैरं
लज्जाविहीनं गतपौरुषं च ॥ ११ ॥

---

ABCDILS

6b प्रसूते om. L °विद्धं च S 6c विकथा° L 7b प्रसूते om. L 7c °कुद्ध° C, °बुद्धि° D 8b प्रसूते om. L 8c °पाप° L 8d भयार्तं I 9b प्रसूते om. L च कठोर° C 10b प्रसूते om. L 11b प्रसूते om. L उग्रकलत्र° I

व्ययाश्रितो भूतनयः ससौम्यो
नरं प्रसूते विकृतानुकारम् ।
लज्जाविहीनं बहुरोगभाजं
गतिप्रहीनं गतसत्यशौचम् ॥ १२ ॥

व्ययाश्रितो भूतनयः सजीवो
नरं प्रसूतेऽतिविहीनकीर्तिम् ।
कर्मार्दितं दुःखपरं पराढ्यं
व्ययातुरं बान्धवपीडितं च ॥ १३ ॥

व्ययाश्रितो भूतनयः सशुक्रो
नरं प्रसूते धनधान्ययुक्तम् ।
पुत्रार्दितं दानविहीनवृत्तिं
सदातुरं हीनतरं कृतघ्नम् ॥ १४ ॥

व्ययाश्रितो भूतनयः ससौरो
नरं प्रसूते विधिशास्त्रहीनम् ।
व्रणार्दितं नेत्ररुजासमेतं
दौर्भाग्यकामोपहतं सदैव ॥ १५ ॥

व्ययाश्रितः सोमसुतः सजीवो
नरं प्रसूते करणप्रधानम् ।
सुनिर्घृणं बान्धवपुत्रयुक्तं
स्त्रीनिर्जितं भ्रान्तिसमन्वितं च ॥ १६ ॥

व्ययाश्रितः सोमसुतः सशुक्रो
नरं प्रसूते कृपया विहीनम् ।
प्रभूतशत्रुं कुधिया समेतं
वैरं विवर्णं धनवर्जितं च ॥ १७ ॥

ABCDILS

12c लब्धा° D 12d °स्वल्प° S °पौरुषं च L 13b प्रसूते om. L 13c कामा° CS 14b प्रसूते om. L 14c °वृत्तं ILS 14d हीनरतं S 15b प्रसूते om. L 16b प्रसूते om L करट° S 16d भ्रांतिसमन्वितं om. B घाति° A order in D : 18, 17 17b प्रसूते om. L ऽतिकृश° S

व्ययाश्रितः सोमसुतः ससौरो
नरं प्रसूते बहुमाययाढ्यम् ।
सदा विवर्णं व्यसनाभिभूतं
कचैलिनं स्त्रीवशकं सदैव ॥ १८ ॥

व्ययाश्रितो देवगुरुः सशुक्रो
नरं प्रसूते पशुभृत्यहीनम् ।
रुजार्तदेहं हतवित्तसंघं
सुनिष्ठुरं शत्रुपराजितं च ॥ १९ ॥

व्ययाश्रितो देवगुरुः ससौरो
नरं प्रसूते परुषस्वभावम् ।
स्त्रीनिर्जिताङ्गं जडतासमेतं
सुकातरं पापमतिं नृशंसम् ॥ २० ॥

व्ययाश्रितो दैत्यगुरुः ससौरो
नरं प्रसूते परवंचकं च ।
चारित्रहीनं सरुजं विशीलं
वृथाटनं मित्रविवर्जितं च ॥ २१ ॥

एवं द्विविकल्पाः ॥

सूर्येन्दुभौमा व्ययगा मनुष्यं
कुर्वन्ति नित्यं परपापरक्तम् ।
द्यूतप्रियं द्रोहरतं कृतघ्नं
सदातुरं ब्राह्मणदूषकं च ॥ २२ ॥

ABCDILS

18b प्रसूते om. L    18d °वसकं L, °विशकं ABCDI, विशगं S  निराशं S order in ABCI : 20, 19    19b प्रसूने om. L    20a ससोम्यो C    20b-21a om. L    20b पुरुष° CD    21a = 20a in CDIS    21b प्रसूते om. L    22b पट° BL, पट्टु° D, पटु° S    22c द्रुत° B  द्रोहपरं L

सूर्येन्दुसौम्या व्ययगा मनुष्यं
कुर्वन्ति दुष्टानुगतिं कुरूपम् ।
बहुश्रमं दुष्टमतिं सुलुब्धं
सहेतुकं कामपरं कुचैलम् ॥ २३ ॥

सूर्येन्दुजीवा व्ययगा मनुष्यं
कुर्वन्ति दीनं सरुजं विवर्णम् ।
व्यपेतधर्मं बहुदूषिताङ्गं
गुणप्रहीनं मतिशास्त्रहीनम् ॥ २४ ॥

सूर्येन्दुशुक्रा व्ययगा मनुष्यं
क्षुत्क्षामकण्ठं क्षतदिग्धगात्रम् ।
त्रपाविहीनं विधनं मनुष्यं
सुकष्टभाजं गतसौहृदं च ॥ २५ ॥

सूर्येन्दुसौरा व्ययगा मनुष्यं
कुर्वन्ति नित्यं क्षयपीडिताङ्गम् ।
श्लेष्मार्तदेहं प्रभया विहीनं
महाश्रमं शत्रुभिरर्दितं च ॥ २६ ॥

सूर्यारसौम्या व्ययगा मनुष्यं
सदा प्रकुर्वन्ति विहीनसत्यम् ।
मूर्खं खलं पापपराङ्मुखाङ्गं
पैशुन्यरक्तं नृपपीडितं च ॥ २७ ॥

---

ABCDILS

23b=24b in S 23c बहुत्तमं L सुलब्धं LS 23d सहैतुकं S 24a मनुष्यं om. L 24b=23b S, except that °गतिं कु° om. 24b दीनं—विवर्णं om. BL 24c यपूषितांगं S 24d मतिशास्त्रहीनं om. A, मतिवर्जितं च L, म B 25a-c °विहीनं om. D 25a मनुष्यं om. L 25b सुक्षाम° ABCI, साक्षाम° L क्षितदग्ध° L 25c विधनं om. A, विधिनं BCD, निधनं L विरूपं S 25d सुकुष्ट° BL 26a मनुष्यं om. L 27a मनुष्यं om. L 27c मूर्खं om. L शास्त्रपरा° S

सूर्यारजीवा जनयन्ति मर्त्यं
　　गतश्रियं भूरिकुमित्रभाजम् ।
जडस्वभावं विकलं नृशंसं
　　व्यपेतलज्जं कुधनं कुदारम् ॥ २८ ॥

सूर्यारशुक्रा व्ययगा मनुष्यं
　　कुर्वन्ति कामोपहतं सुनीचम् ।
चारित्रहीनं बहुकष्टभाजं
　　श्रुतव्यपेतं कलहप्रियं च ॥ २९ ॥

सूर्यारसौरा व्ययगा मनुष्यं
　　कुर्वन्ति नित्यं व्यथयाभिभूतम् ।
कुकर्मभाजं जडतासमेतं
　　निरर्गलं शास्त्रपराङ्मुखं च ॥ ३० ॥

सूर्यज्ञजीवा जनयन्ति मर्त्यं
　　व्ययाश्रिताः कामपरं नृशंसम् ।
प्रभूतरोषं सुकृशं विरूपं
　　दौर्भाग्यभाजं जनगर्हितं च ॥ ३१ ॥

सूर्यज्ञशुक्रा जनयन्ति मर्त्यं
　　मायाविनं निष्ठुरमप्रगल्भम् ।
पैशुन्यरक्तं विकृतानुकारं
　　निराशमुत्साहविवर्जिताङ्गम् ॥ ३२ ॥

सूर्यज्ञसौरा जनयन्ति मर्त्यं
　　निरस्तसाधुं जनवर्जितं च ।
मूर्खं खलाढ्यं परदाररक्त-
　　मसह्ययं पार्थिवपीडितं च ॥ ३३ ॥

ABCDILS

29d रुत° S, नत° BL　30a मनुष्यं om. L　30b समेतं L　31c °रोगं L　32a मर्त्यं om. L　33a मर्त्यं om. L　33b °वाजितं L　33c परदोष° I

सूर्यामरेज्याभृगुजा मनुष्यं
व्ययाश्रिताः संजनयन्ति निःस्वम् ।
विहीनकोशं भृतकं कुशीलं
दुष्टस्वभावं भयसङ्कुलं च ॥ ३४ ॥

सूर्यामरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति तीव्रम् ।
परान्नपुष्टं बहुदैन्यभाजं
विवेकविद्याध्ययनैर्विहीनम् ॥ ३५ ॥

सूर्यासुरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति भीरुम् ।
प्रतापहीनं नयवर्जिताङ्गं
गुणप्रहीनं भयसङ्कुलं च ॥ ३६ ॥

चन्द्रारसौम्या जनयन्ति मर्त्यम्
व्ययाश्रिता वित्तविवेकहीनम् ।
सुकोपिनं नीतिविहीनमुग्रं
प्रभूतशत्रुं रणभाजनं च ॥ ३७ ॥

चन्द्रारजीवा जनयन्ति मर्त्यं
व्ययाश्रिताः कामपरं नृशंसम् ।
श्रुतव्यपेतं परकर्मरक्तं
दुष्टस्वभावं सभयं सदैव ॥ ३८ ॥

चन्द्रारशुक्रा व्ययगा मनुष्यं
व्ययाश्रिताः संजनयन्ति दीनम् ।
द्यूतप्रियं निर्घृणमोजसाढ्यं
प्रलोभितं वैरिनिपीडितं च ॥ ३९ ॥

---

ABCDILS

34a °मरेज्य° LS 34b नित्यं D 36a = 35a in BL 36c प्रतापशीलं S 37b वित्त° om. CD 37c सुकोपनं S 38a मर्त्यं om. L 38c श्रुत° D 39c घृत° L 39d वैरिभिः ABCDIS

चन्द्रारसौरा व्ययगा मनुष्यं
सदा प्रकुर्वन्ति सुकुत्सिताङ्गम् ।
स्वबन्धुमुक्तं कृतकोपचारं
स्त्रीनिर्जितं कातरमानसं च ॥ ४० ॥
चन्द्रज्ञजीवा व्ययगा मनुष्यं
सदा प्रकुर्वन्ति दयाविहीनम् ।
प्रभूतदोषं बहुकूटभाजं
जनातिगं निर्दयमिष्टदोषम् ॥ ४१ ॥
चन्द्रज्ञशुक्रा व्ययगा मनुष्यं
कुर्वन्ति कामोपहतं सुतीव्रम् ।
विकुत्सितं पापमनुष्यरक्तं
मातापितृभ्यां परिमुक्तमेव ॥ ४२ ॥
चन्द्रज्ञसौरा व्ययगा मनुष्यं
कुर्वन्ति नित्यं व्यसनार्तगात्रम् ।
सुलौल्यभाजं सुनिकृष्टरक्तं
श्रद्धाविहीनं परवंचकं च ॥ ४३ ॥
चन्द्रामरेज्याभृगुजा मनुष्यं
व्ययाश्रिताः संजनयन्ति निःस्वम् ।
लज्जाविवेकादिभिरेव मुक्तं
युद्धानुरक्तं गतगौरवं च ॥ ४४ ॥
चन्द्रामरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति दुष्टम् ।
पापाधिकं पापकथानुरक्तं
कौलस्वभावं व्यसनैरुपेतम् ॥ ४५ ॥

ABCDILS

40a °सौम्या BCDIL 40c कृतको° ABLS 41b प्रकुर्वंति om. L 41c °कोषं D °कूर° D 41d नातिगं CD 42a = 43a in L 42b °पहृतं I 42c विकुत्थनं A, विकुछ्नं CD, विकत्थनं S, विकुलनं B, विकूलनं L, विकस्पनं I 43b नित्यं om. L 44a °मरेज्य° LS 44b नित्यं D 45d लौल° A

चन्द्रासुरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नीचम् ।
नीचाश्रयं नीचयुतं सुनीचं
व्यपेतभोगं गुणवर्जितं च ॥ ४६ ॥

भौमज्ञजीवा जनयन्ति मर्त्यं
व्ययाश्रिता भूरिभयाकुलाङ्गम् ।
सुगर्वितं शुष्ककथानुरक्तं
व्रताश्रमं ब्राह्मणदेवमुक्तम् ॥ ४७ ॥

भौमज्ञशुक्रा जनयन्ति मर्त्यं
व्ययाश्रिता वर्णविवर्जिताङ्गम् ।
दौर्भाग्ययुक्तं बहुभाग्यरक्तं
सुनिर्घृणं प्रीतिविवर्जितं च ॥ ४८ ॥

भौमज्ञसौरा जनयन्ति मर्त्यं
विद्याविहीनं धनभोगहीनम् ।
सुनिष्ठुरं क्लीबपरातिगं च
श्रिया विहीनं कुसुतं सदैव ॥ ४९ ॥

भौमामरेज्याभृगुजा मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
बह्वाशिनं निर्घृणमुग्रवैरं
मतिप्रधानं कुमतिं सदैव ॥ ५० ॥

भौमामरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति दुष्टम् ।
वृथाटनं धर्मविहीनकृत्यं
सुकातरं वात्यदयं सदैव ॥ ५१ ॥

ABCDILS

46b मर्त्यं CD  46c नीचजितं S  48a मर्त्यं om. L  48c बहुभक्त° S  48d °वर्जितांगं L  49a मर्त्यं om. DL  49c प्रीतिपरा° L °गम्यं S  50a °मरेज्य° LS  50c बह्वाशनं D  51d वीत्य° BS, वीत° L समेतं D

भौमासुरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति हीनम् ।
चौर्यानुरक्तं व्रणिनं कृतघ्नं
श्रुतव्यपेतं गतपौरुषं च ॥ ५२ ॥

सौम्यामरेज्याभृगुजा मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
विवेकहीनं सुतवीर्यदारै–
र्लज्जाविहीनं भयसङ्कुलं च ॥ ५३ ॥

सौम्यामरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
विवेकहीनं बहुमाययाढ्यं
सदा प्रसादान्वितमुग्रकृत्यम् ॥ ५४ ॥

सौम्यासुरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
प्रभूतदुःखं खलसङ्गरक्तं
विवेकबुद्ध्या सहितं सदैव ॥ ५५ ॥

जीवासुरेज्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
ब्रह्मघ्नमोजोरहितं कुचेलं
पराश्रयं बान्धववर्जितं च ॥ ५६ ॥

एवं त्रिविकल्पाः ॥

ABCDILS

52a=51a in BCDL 52c व्रणनं D 53a °मरेज्य° LS 53b-54a om. L 53b मर्त्यं S 53c सुतनीथ° S 54b-55a om. D 55a=54a in BCIL 55b मर्त्यं ABCDIL 55d विवेकविद्या° L

रवीन्दुभौमेन्दुसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
बहुश्रमं पापनिपीडिताङ्गं
हिताशमिष्टै रहितं सदैव ॥ ५७ ॥

रवीन्दुभौमामरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
कृतघ्नमोजोरहितं विरूपं
महाभयं शत्रुयुतं सदैव ॥ ५८ ॥

रवीन्दुभौमासुरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
पराभिभूतं वनितासुताद्यैः
प्रमुक्तमानं बहुपापकं च ॥ ५९ ॥

रवीन्दुभौमार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
बुद्ध्या विहीनं व्यसनप्रगल्भं
निरङ्कुशं कान्तिविवर्जितं च ॥ ६० ॥

रवीन्दुसौम्यामरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
गतप्रभं व्यधिभिरर्दिताङ्गं
भयाधिकं कीर्तिविवर्जितं च ॥ ६१ ॥

रवीन्दुसौम्यासुरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभाविहीनं गतबुद्धिसत्यं
रौद्राननं पापपराङ्मुखं च ॥ ६२ ॥

ABCDILS

57d सहितं L 58a = 61a in A 58b-59a om. BCDIL 59b नित्यं D 59d प्रभुक्त° C, प्रभूक्त° BI, प्रभूत° L 61b-63a om. D 61c °र्जितांगं ABCI 62d पासपरा° L

रवीन्दुसौम्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
व्याधिप्रयुक्तं परुषं कृतघ्नं
नीचाश्रितं नीचमतिं सदैव ॥ ६३ ॥

रवीन्दुजीवासुरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतरोषं गतबुद्धिचित्तं
लज्जाविहीनं रणकातरं च ॥ ६४ ॥

रवीन्दुजीवार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति भीरुम् ।
गुह्योद्भवै रोगचयैः समेतं
तृष्णाधिकं कान्तिविवर्जितं च ॥ ६५ ॥
॥ ६६ ॥

सूर्यारसौम्यामरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
श्रुतार्थहीनं व्यसनैरुपेतं
पथ्येन हीनं रुजयाधिकं च ॥ ६७ ॥

सूर्यारसौम्यासुरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
नीचानुरक्तं बहुदोषभाजं
कदन्नपानाशनमुग्रकोपम् ॥ ६८ ॥

ABCDILS

63a °सुरपूजितांगा A 63b नित्यं om. L, मर्त्यं C 63c °प्रयुक्तं L कृतज्ञं C 63d नीचाश्रितं om. A 64b मर्त्यं om. L 64c-d = 62c-d in S 64c °रोगं BL 64d-65c om. L 64d रण° - 65c om. B 64d नरकातरं C 65d कृष्णा° B 66 om. cod. 67b मर्त्यं om. CL 67c-68b om. ABCDIL 68d °कार्यं BDIL, °वीर्यं C

सूर्यारसौम्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
कृपाविहीनं परसेवयाढ्यं
विहीनकोशं मतिवर्जितं च ॥ ६९ ॥

सूर्यारजीवासुरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
श्लेष्मानिलाभ्यां परिपीडिताङ्गं
गुणैर्विहीनं परतर्ककं च ॥ ७० ॥

सूर्यारजीवार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति भीमम् ।
असह्ययं चेष्टबहुप्रकोपं
स्वल्पश्रुतं नीचगतिं सदैव ॥ ७१ ॥

सूर्यारशुक्रार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
नीचाभिभूतं बहुनीचभाजं
कष्टात्मकं कष्टयुतं सदैव ॥ ७२ ॥

सूर्यज्ञजीवासुरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति नित्यम् ।
दयाविहीनं कुकलत्रवस्त्रैः
समन्वितं दीनतमं गतस्वम् ॥ ७३ ।

सूर्यज्ञजीवार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति रूक्षम् ।
क्षताङ्गमार्तं कलहप्रधानं
निरर्गलं हीनधनं सदैव ॥ ७४ ॥

ABCDILS

69d °दोषं D 70c पर° L 70d °तर्कुकं ABIL 71d °श्रमं BCDIL 73b नित्यं om. L, मर्त्यं S 73d मनस्वं CD 74b मर्त्यं ACDI 74c °मातर्कं CD

सूर्यज्ञशुक्रार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति तीव्रम् ।
श्रद्धाविहीनं द्विजनिन्दयाढ्यं
लुब्धं कृशाङ्गं जडतासमेतम् ॥ ७५ ॥

सूर्यामरेज्याभृगुजार्कपुत्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
महाकृपार्तं गुरुभिर्विहीन-
मारामउद्योगविवर्जितं च ॥ ७६ ॥

चन्द्रारसौम्यामरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
क्षमाविहीनं बहुकोपभाजं
विनष्टसत्यं वनितानिरस्तम् ॥ ७७ ॥

चन्द्रारसौम्यासुरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
क्षुधारुजासंयुतमिष्टहीनं
सम्पीडितं पार्थिवतस्करैश्च ॥ ७८ ॥

चन्द्रारसौम्यार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
वित्तार्थहीनं गुरुभिर्विमुक्तं
पराभिभूतं वनिताजनेन ॥ ७९ ॥

ABCDILS

75c °नंदया° ABCDIS  76a °मरेज्य° LS  76c मृन्यं कपातं D  77c बहुदोष° S  78a = 77a in A  78b मर्त्यं om. L  78c क्षुध्वं ABCIS, क्षुध्रं D, छध्वं L  °स्वंयुतं BCIS, °स्यंयुतं D  78d संपंडितं S  79b मर्त्यं om. L  79c-80b om. B  79c वित्तार्ति° ACDIL, पित्तार्त° S  विमुक्तं om. A

चन्द्रारजीवासुरपूजिताङ्गा
　　व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
सुरौद्रसर्वावयवैः सुवैरं
　　कुलस्य बाह्यं जनगर्हितं च ॥ ८० ॥

चन्द्रारजीवार्कसुता मनुष्यं
　　व्ययाश्रिताः संजनयन्ति नित्यम् ।
दोषाभिभूतं परदाररक्त-
　　मसह्ययं व्याधिभिरर्दितं च ॥ ८१ ॥

चन्द्रारशुक्रार्कसुता व्ययस्था
　　नरं प्रकुर्वन्ति सुतप्रमुक्तम् ।
सुपारकं पापमतिं नृशंसं
　　पराजितं स्त्रीभृतकै सदैव ॥ ८२ ॥

चन्द्रज्ञजीवासुरपूजिताङ्गा
　　व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
कुस्वामिबुद्धीरहितं गतस्वं
　　सुनिर्घृणं पानरतं कुबुद्धिम् ॥ ८३ ॥

चन्द्रज्ञजीवार्कसुता मनुष्यं
　　व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
कोपान्वितं दानविवर्जिताङ्गं
　　स्त्रीनिर्जितं निर्घृणमप्रमेयम् ॥ ८४ ॥

चन्द्रज्ञशुक्रार्कसुता मनुष्यं
　　व्ययाश्रिताः संजनयन्ति तीव्रम् ।
दुष्टस्वभावं व्रणपीडिताङ्गं
　　तृष्णाभिभूतं जनगर्हितं च ॥ ८५ ॥

ABCDILS

80b मर्त्यं om. L　80c सुरुद्र° BCDIL　°वयवा° S　81b निर्त्यं B, मर्त्यं ACDI　82b °प्रयुक्तं IS　83 om. CIL　83a °सुरदरजितांगा ABD　83c °बुद्धि° S; corrupt?　84b दीनं S　85c दृढ° L　85d कृष्णा° A

चन्द्रामरेज्याभृगुजार्कपुत्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
बुद्ध्या विहीनं गुणवर्जिताङ्गं
पराभिभूतं कृपणं सदैव ॥ ८६ ॥

भौमज्ञजीवासुरपूजिताङ्गा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभाविहीनं विकलं विरूपं
सुगर्हितं स्नेहविवर्जितं च ॥ ८७ ॥

भौमज्ञजीवार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
विवेकहीनं जडतासमेतं
सुनिन्दितं बन्धुजनेन चोग्रम् ॥ ८८ ॥

भौमज्ञशुक्रार्कसुता मनुष्यं
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
पराजितं स्त्रीकितवाल्पविद्यै-
र्विरक्तपौरं भयसङ्कुलं च ॥ ८९ ॥

भौमामरेज्याभृगुजार्कपुत्रा
व्ययाश्रिताः संजनयन्ति दीनम् ।
कुसङ्गरक्तं परधर्मभाज-
मसह्ययं ब्राह्मणनिन्दकं च ॥ ९० ॥

ABCDILS

86a °मरेज्य° LS 86b-87a om. D 87 om. B 87b मर्त्यं om. L 87c °विहीनं ]°विरूपं C विकलं om. A 88a = 89a in S 88d सुनिंदितं om. BIL 89b पापं S 89c °विधैः BDIL, °विगधैः C 89d °पौरै° ABCDIL 90a °मरेज्य° LS 90b दिव्यं BCDIL 90c-91b om. L 90c °संग°—91b व्ययाश्रिताः om. B

सौम्यामरेज्याभृगुजार्कपुत्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
निर्लज्जमस्नेहमतिप्रगल्भं
रोगातुरं पार्थिवपीडितं च ॥ ९१ ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्या
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
कुचैलमस्निग्धमरिप्रयुक्तं
लौल्यान्वितं तर्ककमप्रहृष्टम् ॥ ९२ ॥

रवीन्दुभौमज्ञसिता मनुष्यं
व्ययाश्रिताः संजनयन्ति नित्यम् ।
कुकर्मसन्धासहितं नृशंसं
सदातुरं बान्धवपीडितं च ॥ ९३ ॥

रवीन्दुभौमज्ञदिनेशपुत्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
म्लेच्छानुरक्तं परदारभाजं
कुसङ्गसेवासहितं सदैव ॥ ९४ ॥

रवीन्दुभौमामरपूज्यशुक्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
व्यपेतलज्जं जनताविरुद्धं
कुधर्मपण्यान्वितमप्रगल्भम् ॥ ९५ ॥

ABCDILS

91a °मरेज्य° CDLS col. om. C 92d तर्कुक° BCIL, कुंक° D 93a = 92a in D 93b नित्यं om. L, मर्त्यं D 93c °संघा° ABIL, °दघा° S 94b मर्त्यं om. L 94d कुरंगा° ABCDIL 95b मर्त्यं om. L 95c व्यपेतजं B, व्यपेतलक्षं I

रवीन्दुभौमामरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
बहुव्ययं व्याधिनिपीडिताङ्गं
सदातुरं कातरमप्रगल्भम् ॥ ९६ ॥

रवीन्दुभौमासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
यशोविहीनं करणानुरक्तं
मायाविनं निष्ठुरमुग्रवैरम् ॥ ९७ ॥

रवीन्दुसौम्यामरपूज्यशुक्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
प्रभूतदुःखं खलसङ्गरक्तं
श्लेष्माधिकं मूर्खतमं नृशंसम् ॥ ९८ ॥

रवीन्दुसौम्यामरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
वैराकुलं शीलविवर्जिताङ्गं
गुणप्रमुक्तं कृतकस्वभावम् ॥ ९९ ॥

रवीन्दुसौम्यासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
छलप्रधानं बहुकूटभाजं
सदा जितं नीचजनैः समेतम् ॥ १०० ॥

रवीन्दुजीवासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
पित्ताधिकं कामपरं नृशंसं
बहुप्रकोपं भयसङ्कुलं च ॥ १०१ ॥

ABCDILS

96b मर्त्यं om. L 96c-98b om. D 96c-97b om. ABCIL 97c करदा° S 98d मूल्य° C 99b मर्त्यं om. L 100a=99a in BCDIL 100b मर्त्यं om. L 101b मर्त्यं om. L 101d °प्रकारं L

सूर्यारसौम्यामरपूज्यशुक्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
कृपाविहीनं हृतपुत्रदारं
बह्वाशिनं निष्ठुरवाक्यमेव ॥ १०२ ॥

सूर्यारसौम्यामरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
धनार्थदाराव्यसनैर्विहीनं
सुनिष्ठुरं वैरपरं कुबुद्धिम् ॥ १०३ ॥

सूर्यारसौम्यासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
निःश्रीकमुग्रं कलहानुरक्तं
विरूपगात्रं परवंचकं च ॥ १०४ ॥

सूर्यारजीवासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
नानारुजार्तं खलसङ्गरक्तं
कामातुरं भीतियुतं सदैव ॥ १०५ ॥

सूर्यज्ञजीवासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
मूर्खं कुवक्त्रं विकरालनेत्रं
ब्रह्मद्विषं शत्रुजितं सुतीव्रम् ॥ १०६ ॥

ABCDILS

order in S: 103,102 102b संजनयंति मर्त्यं om. D मर्त्यं om. L 102d बह्वाशनं S 103b मर्त्यं om. L 103d वैरि° D 104a = 103a in CD 104b संजनयंति मर्त्यं om. C मर्त्यं om. L 104c निस्त्रीक° ABCDI 105b संजनयंति मर्त्यं om. C मर्त्यं om. L 105c खलराग° CD 106b संजनयंति मर्त्यं om. C मर्त्यं om. L

चन्द्रारसौम्यामरपूज्यशुक्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
चौर्यानुरक्तं गुरुताविरुद्धं
हतस्वपक्षं व्रणपीडितं च ॥ १०७ ॥

चन्द्रारसौम्यामरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
भ्रष्टं कुमित्रं नयनैर्विरुद्धं
सुनिर्घृणं मन्युपरं सदैव ॥ १०८ ॥

चन्द्रारसौम्यासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
द्वेष्यं विवर्णं प्रमदानिरस्तं
गतप्रजं पार्थिवदूषितं च ॥ १०९ ॥

चन्द्रारजीवासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
कुस्त्रीषु रक्तं कुसुतं कुमित्रं
कुधर्मविद्यान्वितमिष्टपापम् ॥ ११० ॥

चन्द्रज्ञजीवासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
सदा व्रणार्तं कुधिया समेतं
निर्लज्जमोजोरहितं विरूपम् ॥ १११ ॥

ABCDILS

107b मर्त्यं om. L   107d हानस्व° B, हीनस्व° L, हताश्व° D °पीडितांगं L   order in S: 109, 108   108a = 109a in D   108a = 107a in L   108b संजनयंति मर्त्यं om. C   मर्त्यं om. L   108c-109b om. D   109a = 108a in BCIL   109b संजनयंति मर्त्यं om. C मर्त्यं om. L   109c द्वेषं CD   110a = 108a in D   110b संजनयंति मर्त्यं om. C मर्त्यं om. L   110d °पत्यं L   111b संजनयंति मर्त्यं om. C मर्त्यं om. L

भौमज्ञजीवासुरपूज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
निःश्रीकमुग्रं कलहानुरक्तं
विशीर्णबुद्धिं धनवर्जितं च ॥ ११२ ॥

एवं पंचविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
तेजोविहीनं परपक्षरक्तं
ब्रह्मघ्नमार्तं परवंचकं च ॥ ११३ ॥

रवीन्दुभौमज्ञसुरेज्यसौरा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
कृतघ्नतायुक्तमरिप्रधानं
लज्जाविहीनं परतर्ककं च ॥ ११४ ॥

रवीन्दुभौमज्ञसितार्कपुत्रा
व्ययाश्रिताः संजनयन्ति मर्त्यम् ।
महारुजं वित्तसुतैर्विमुक्तं
सुनिर्दयं लौल्ययुतं कुदारम् ॥ ११५ ॥

रवीन्दुभौमामरपूज्यशुक्र–
शनैश्चराः संजनयन्ति मर्त्यम् ।
स्वल्पायुषं वित्तयशोविहीनं
वृथाश्रमं रौद्रविधानभाजम् ॥ ११६ ॥

ABCDILS

112b संजनयंति मर्त्यं om. C मर्त्यं om. L    112d जन° L    113b व्ययस्थिताः CI संजनयंति मर्त्यं om. C मर्त्यं om. L    113c परक्ष° D, परखंच° A    114b व्ययस्थिताः D संजनयंति मर्त्यं om. C मर्त्यं om. L    114d °तर्कुकं ABI    115b मर्त्यं om. L    115c °रुजा° ABCD    116d °विधानदक्षं S

रवीन्दुसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
सदालसं बुद्धिधनैर्विहीनं
कुपुत्रदारैः सहितं सदैव ॥ ११७ ॥

सूर्यारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
निराश्रयं नीचसखं दरिद्रं
विमुक्तसत्यं गुणवर्जितं च ॥ ११८ ॥

चन्द्रारसौम्यामरपूज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
अप्राद्रिषं कीर्तिमुखैर्विहीनं
हतप्रभावं बहुरोगभाजम् ॥ ११९ ॥

एवं षड्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्र-
शनैश्चराः संजनयन्ति मर्त्यम् ।
॥ १२० ॥

एवं सप्तविकल्पाः ॥

## इति श्रीवृद्धयवने व्ययाश्रययोगाध्यायः

ABCDILS

117b मर्त्यं om. L 117c-118b om. I 117c बुद्धिजनै' C 118b मर्त्यं om. L 118c नराश्रयं ABCDI °सुखं C 119a °शुक्राः I 119b मर्त्यं om. DL 120a °शुक्राः I 120b मर्त्यं om. DL 120c-d om. cod., but ABCDIL have व्ययाश्रिताः; and S the improbable:

धराधिनाथं गतरोगपापं
धर्माकुलं ब्राह्मणसंमतं च

chapter col. श्री° om. S

# द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

द्विस्थानसंस्थैः सकलैर्महेन्द्रै–
योंगान् तथोक्तान् परिवर्ज्य सर्वान् ।
युगाख्ययोगेऽत्र भवेन्मनुष्य–
स्तृष्णाधिकः शत्रुपराजितश्च ॥ १ ॥

त्रिस्थानसंस्थैः प्रभवेच्च शूलं
तस्मिन्मनुष्यः सुतरां सुमन्दः ।
रोगाभिभूतः परकर्मभाजः
सदातुरः स्नेहविवर्जितश्च ॥ २ ॥

चतुःस्थितैः सर्वखगैश्च योगः
केदारसंज्ञोऽत्र भवेन्मनुष्यः ।
विदेशसेवानिरतः कृतघ्नः
पराभिभूतः कुकलत्रभाजः ॥ ३ ॥

पंचस्थितैः सर्वखगैश्च योगः
पाशो भवेद्यः पुरुषः प्रजातः ।
हिंस्रो दुरात्मा वधबन्धरक्तः
पैशुन्यसेवी सततं सरोषः ॥ ४ ॥

षट्स्थानसंस्थैः प्रभवेच्च दामा
योगो भवेद्यत्र मनुष्यधर्मा ।
जातः सतां बन्धनवैरिभागी
सुतैर्विहीनः कृतकस्वभावः ॥ ५ ॥

ABCDILS

1b °योंगस्त° cod. °थोक्ता BL, °थोक्ताः CIS, °थोनसंस्थैःक्ता AD 1c °योगो LS 2a प्रभवैश्च S मूलं C 2c रुगा° L 3a °खगैस्तु S 3c °सेवासु रतः S 4c मत° BCIL, जत° D 4d सरक्त L 5a प्रभवैश्च CD 5b भवेदत्र DS 5c °वैर° S 5d सुखै° L

सप्ताश्रयस्थैः सकलैर्ग्रहेन्द्रै-
वींणाभिधानः प्रभवेच्च योगः ।
जातोऽत्र योगे सुतवित्तहीनः
परस्वलुब्धः परतर्ककश्च ॥ ६ ॥

इति श्रीवृद्धयवने संख्याश्रययोगाध्यायः ॥

ABCDILS

6a °गृहेंद्रै L  6c यातो A, यामा BCIL, यामि D योगो ABCDIL 6d °तर्कुकश्च ABCDIL col. इति श्रीवृद्धयवने om. L श्री॰ om. IS °वने—54, 15Ab उत्पत्तभु॰ om. D संख्याश्रययोगः S

# त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

कलत्रलग्नोपगतैश्च सौम्यैः
पापैर्नभःसौख्यगतैश्च सर्वैः ।
वज्राख्ययोगोऽत्र भवेन्मनुष्यो
महीपतिः शत्रुकुलान्तकारी ॥ १ ॥

व्ययारिगैः सर्वखगैश्च सौम्यैः
पापैस्तथा धर्मतृतीयसंस्थैः ।
पिपीलकाख्यः प्रभवेच्च योगो
जातश्च पापः सुखहीन एव ॥ २ ॥

व्ययारिगैः पापखगैश्च सर्वै-
र्दुश्चिक्यधर्मानुगतैश्च सौम्यैः ।
गदाभिधानः प्रभवेच्च योगो
जातोऽत्र निःस्वः परतर्ककश्च ॥ ३ ॥

लाभात्मजस्थैः सकलैश्च सौम्यैः
पापैस्तथा मृत्युधनाश्रयस्थैः ।
नदीति योगः प्रवरः प्रदिष्टो
जातोऽत्र मर्त्यः सुभगः क्षितीशः ॥ ४ ॥

सुतायगैः पापखगैः समस्तै-
र्धनाष्टमस्थैः शुभसंज्ञितैश्च ।
योगो नदाख्यः प्रभवेन्मनुष्यो
जातोऽत्र धीमान् सुतसौख्ययुक्तः ॥ ५ ॥

**इति श्रीवृद्धयवने वज्रादियोगाध्यायः ॥**

ABCILS

1b सर्वैः—2a °श्च om. L 2c पिपीलिकाख्यः LS 2d सुखहीनपुत्र C 3a °खलैश्च L 3c गता° ABCIS गोत्रे I 3d °तर्कुकश्च ABCIL 4c नदाति BL, तृषीति A 4d सातोत्र I मर्त्यः om. B, मर्त्यं CLS 5a सुतानगैः I °खलैः CILS 5b धष्टा° B, षष्टा° AILS नभसंस्थितैः° BCI 5d धर्मान् ABCI, धर्मा L col. श्रीवृद्धयवने om. I श्री° om. S °योगः S L ends here

# चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

प्रणिपत्य परं ज्योतिर्द्योतितं जगतीतलं तपः शमनम् ।
जन्मप्रदीपशास्त्रं भावाधिपभेदतो वक्ष्ये ॥ १ ॥

लग्नाधिपतिर्लग्ने नीरोगं दीर्घजीवितं कुरुते ।
अतिबलमवनिपतिं वा भूलाभसमन्वितं जातम् ॥ २ ॥

लग्नपतिर्धनभवने धनवन्तं दीर्घजीवितं स्थूलम् ।
स्थानप्रधानमवनीशं सत्कर्मरतं नरं कुरुते ॥ ३ ॥

सहजगतो लग्नपतिः सद्बन्धुप्रवरं मित्रपरिकलितम् ।
धर्मरतं दातारं शूरं सबलं करोति नरम् ॥ ४ ॥

लग्नेशस्तुर्यगतो नृपप्रियं प्रचुरजीवितं पुरुषम् ।
सल्लब्धमित्रं पित्रोर्भक्तं मबहुभोजनं कुरुते ॥ ५ ॥

पंचमगो लग्नपतिः सुभगं सत्याग[ म ]मीश्वरं विदितम्
बहुजीवितं सुगीतं सत्कर्मरतं नरं कुरुते ॥ ६ ॥

रिपुभवने लग्नेशो नीरोगं भूरिभिर्न[ तं ] सबलम ।
कृपणं धनिनमरिघ्नं सुकर्मपक्षान्वितं कुरुते ॥ ७ ॥

प्रथमपतौ सप्तमगे तेजस्वी शीलवान भवेत पुरुषः ।
तद्भार्यापि सुशीला तेजःकलिता सुरूपा च ॥ ८ ॥

ABCIS

before 1 A has: अथ द्वादशभावेशफल लिख्यते 1b °जलं C 1c-d: जन्म वक्ष्ये शास्त्रप्रदीपकं I 1c जन° ABCS 1d °पतेर्भेदतो A 2b प्रचुर° I °जीवनं C 2d लाभं BCS, पुरुषं I 3b दीर्घ° om. C, विपुल° I 3c °मनिशं I 3d नरं om. A, युतं BC, यतः S 4b °प्रचुरं I °परिकलितं ACI 4c °मीश्वरं S 4d: पुरुषं बलिनं मलाभकरं I 5a °स्तु तुर्य° S 5b °जीवनं S 5d म° om. C, °म° IS 6b समुभगं C, ममुगं B, समुनं IS सत्यग° S, सत्य° ABC 7a शिशु° B 7b भूमिलाभिनं I, भूरिभन BC, भूगिभिर्न A 8d सरूपा I

लग्नपतावष्टमगे कृपणो धनसंचयः सुदीर्घायुः ।
क्रूरे खेचरे कटुजल्पको मूर्खो भवत्येव ॥ ९ ॥

मूर्तिपतिर्यदि नवमे तदा भवेत् प्रवरबान्धवः सुकृतः ।
समसत्त्वश्च सुशीलः सुकृतख्यातः सुतेजस्वी ॥ १० ॥

प्रथमेशे दशमस्थे नृपलाभः पण्डितः सुशीलश्च ।
गुरुमातृपूजनमतिर्नृपप्रसिद्धो नरो भवति ॥ ११ ॥

एकादशगस्तनुपः सुजीवितं सुतसमन्वितं विदितम् ।
तेजःकलितं पुरुषं कुरुते बलिनं नृसाहमपि च ॥ १२ ॥

द्वादशमे मूर्तिपतौ कटुभाषी वादकारको मानी ।
सहगो विधिमिलितानां विदेशगो दत्तभुक्तो नरः ॥ १३ ॥

## इति श्रीवृद्धयवने तनुभावाधिपफलम् ॥

द्रव्यपतिर्लग्नगतः कृपणं व्यवसायिनं सुकर्माणम् ।
धनिनं श्रीपतिविदितं करोति नरमतुलभोगभुजम् ॥ १४ ॥

ABCIS

9a °पति° BC, °पतौ I 9b °संचकः cod. 9c खचरे ABI 9d जल्पकश्च cod. वपुषा भवेत्पीनः I 10b प्रचुरबाधवः I सुकृतः om. C, सुकृती I 10c सन्मित्रश्च I 10d सुकृति ख्यातश्च तेजस्वाः I 11b नृपलाभी I 11c पूजनरतः I 12a एकादशम° S 12b सुख° I °स° om. BCS विदातं BC 12c पुरुषं om. C 12c-d कुरुते पुरुषं I 12d नृसाहमपि चेत् A, नृसादमपि चेत् C, नृसादपि चेत् B, नृसीदपि चेत् S, सलाभकरं I 13a द्वदशगे S, द्वादशो I 13b कटौवाक् B, कटूवाक् C, कटुवाक् AS निष्ठुरो भवति नीचः I 13c ऽत्रे मलिनमति- I विध° S °मिलतीनो C, °मिलतिनो S, मीलनिनो AB 13d विदेशे BC °भुक्त° cod. °नरा BC col. श्रीवृद्धयवने om. S श्री° om. I भावाधिफलं BCS 14c धननी BC, धनन A 14d नृपतुल्य° I, नरमनुतल° AB °भोज° IS

धनपो धनभवनस्थो बहुवित्तं भोगभाजनं पुरुषम् ।
लाभाधिकात् सलोभं कुरुते पुरुषं सदा दक्षम् । १५ ॥

( व्यवसायी च [ सु ]लाभी ऽल्पान्नभुग् गालिकारको नीचः ।
आर्तिक[ र ]ः स्याद्विदितो भूतनयेऽन्तकरः पुरुष[ श्च ] ॥ १५A ॥ )

सहजगते तु धनेशे व्यवसायी गालिकरः कलाहीनः ।
चौरश्चलचित्तो वा भवति नरो नवकलाहीनः ॥ १६ ॥

तुर्यगते द्रविणपतौ पितृलाभपरः सदोदयः पुरुषः
दीर्घायुः क्रूरे पुनरम्बामरणं विनिर्देश्यम् ॥ १७ ॥

कृपणं दुःखनिधानं धर्मरतं विपुलसत्त्वसंयुक्तम् ।
पुरुषं कठोरहृदयं तनयगतो धनपतिः कुरुते ॥ १८ ॥

( कमलाविलासिततनुं चक्रकर्मणि कष्टतरं प्रसिद्धं च ।
कृपणं दुःखनिधानं तनयगतो धनपतिः कुरुते ॥ १८A ॥ )

षष्ठगतो द्रविणपतिर्धनसङ्ग्रहतत्परं रिपुघ्नं च ।
कुरुते दुःखसमेतं पापे धनवर्जितं पुरुषम् ॥ १९ ॥

ABCDIS

15 in ACI, 15A in BDS 15a धनस्थितो वा I 15b °वित्तो ACI °भाजनः ACI पुरुषः AI, ख्यातः C 15Ab °भुक् S, °भूक् B, D begins with क् गलि° B 15Ac आलिकः BDS स्वा° BD °द्विततो S, °द्विदितो B, °दितितो D 16 om. BDS 16b कालि° A, कलि° CI हितः A 16c लोलश्चंचलश्चित्तो I 16d नवकला° ] विद्यर° I °हितः AI 17a द्रव्यपतौ C 17b पितृभारपरः ACI 17c दीर्घायुश्च BDS कूटे D, क्रूरः ACI °षु न° S, युतं न° D 17d °रम्या° CI, °रध्या° A °भरणं I वि° om. D, वा S 18 in ACI, 18A in BDS 18b धारितं C 18Ab कष्टेतरं DS 19c भूलाभिनं खचरे BDS 19d पापं AI

धनपे सप्तमगृहगे श्रेष्ठा [ च ] वित्तविलासभोगवती ।
धनसङ्ग्रहणी भार्या क्रूरे खचरे भवति वन्ध्या ॥ २० ॥

धनपेऽष्टमभवनस्थेऽष्टकपाली चात्मघातकः पुरुषः ।
उत्पन्नभुग्विलासी परहिंसी भवति दैवपरः ॥ २१ ॥

धनपे धर्मगृहस्थे सौम्ये दानप्रसिद्धिभाग्भवति ।
क्रूरे दरिद्रभिक्षुकविडम्बवृत्तिस्तथा मनुजः ॥ २२ ॥

दशमगृहस्थे धनपे नरेन्द्रमान्यो भवेन्नृपालक्ष्मी ।
क्रूरग्रहेऽपि मातुः पितुश्च परिपालकः पुरुषः ॥ २३ ॥

एकादशगः स्वपतिर्व्यवहारपरं श्रियः पतिं ख्यातम् ।
लोकौघप्रतिपालननिरतं कुरुते नरं जातम् ॥ २४ ॥

द्वादशगे द्रविणपतावष्टकपाली विदेशनिरतश्च ।
दुःकर्मा भिक्षुश्च क्रूरे सौम्ये च सङ्ग्राही ॥ २५ ॥

**इति धनभावाधिपफलम् ॥**

ABCDIS

20 om. B 20a °ग्रहगे D, °गेहे I, °गे C 20b श्रेष्ठान्विता विलास° S 20d क्रुरं I 21a धनपरत्वष्टमभवने ACI 21b त्वष्ट° ACI च घानकः ACI 21d सहाससी BD, साहसी S 22a °गृहगे BS 22b °प्रसिद्ध° BD 22d विरंब° BDS, विटंब° I, वितंव° A, विदंभ° C 23b नृप° BS 23c सौम्य° I, सौम्ये BDS °गृहे cod. च BDS 23d °पालकः— 24c °प्रति° om. D 24b पतिः ACI ख्यातिं S, क्ष्यातं I, पृष्पातं A 25a द्रव्य° ACI °पतौ अ° BDS, °ताप° A, °ताचष° I, पतीभ्र° C 25b विवेशरुद्धिश्च BDS 25c दुःकर्म° ACI 25d संग्रामा B, सग्राती D, सग्रासा S col. after इति B adds वृद्धयवने धनाधिपतिफलं ACI °प° om. D

सहजपतौ लग्नगते वादी स्त्रीलम्पटः स्वजनभेदी ।
सेवारतः सलोभी कूटकरो व्याधितः पुरुषः ॥ २६ ॥

धनगृहगे सहजेशे भिक्षुर्निधनोऽल्पजीवितो मनुजः ।
बन्धुविरोधी क्रूरे सौम्ये पुनरीश्वरः खचरे ॥ २७ ॥

सहजगतः सहजपतिः सहजसमत्वं सुहृच्छुभं सुजनम् ।
देवगुरुपूजनरतं नृपलाभपरं नरं कुरुते ॥ २८ ॥

भ्रातृपतौ तुर्यगते पितृसोदरसुखकृदुदयकृत्तेषाम् ।
मात्रा सह वैरकरः पितृवित्तप्रभक्षकः पुरुषः ॥ २९ ॥

दुश्चिक्यपतौ सुतगे सुबान्धवः सुतसहोदरैः पाल्यः ।
दीर्घायुर्भवति नरः परोपकारैकनिरतमतिः ॥ ३० ॥

षष्ठगते सहजेशे बन्धुविरोधी च नयनरोगी च ।
भूलाभी भवति भृशः कदाचिदपि रोगभयकलितः ॥ ३१ ॥

सप्तमगे सहजेशे नरस्य भार्या भवेत् प्रवररूपा ।
सौभाग्यवती साध्वी क्रूरे देवरगृहं याति ॥ ३२ ॥

भ्रातृप्रभुरष्टमगः सरुजं मृतसोदरं नरं कुरुते ।
क्रूरे बाहुल्यश्च जीविति यद्यष्टवर्षाणि ॥ ३३ ॥

ABCDIS

26a लग्नस्थे वा B, लग्नस्थेषा S, लग्नस्थे D  26b वाद I, ध्वादी C, चाटी S, वाटो D  स्त्री° om. BDS  °जनवादी BDS  26c कुमित्रः BDS  26d जायते BDS  27b-d om. B  27b द्रव्यजीवितो A  28b समप्राप्तं BCDS सुहृच्छूभं I, समुद्धद (दे B, न्द S) न (शे B, न्वा D, च S) शुभं BDS  सुजनं om. BDS  28c om. A  29b °दूपदयस्तेषां I  29d °प्र° om. BCDS  31a सहजपतौ BDS  31b च² om. BCDS  31b °रोगी—31d °भय° om. A  31c मृशं BCDS  31d रोगरथ° BS, रोगरथि D  32b प्रचुररूपा B, प्ररूपा S  32c साध्वी ] युवतिः BDS  32d देव° ACD  °प्रहं BDS  पतिः BS  33b सहजं BDS

धर्मगते सहजपतौ क्रूरे बन्धूत्थितस्तथा सौम्ये ।
सद्बान्धवश्च सुकृती सोदरभक्तो भवेन्मनुजः ॥ ३४ ॥

दुश्चिक्येशे दशमे नृपपूज्यो मातृबन्धुपरिभक्तः ।
उत्तमबन्धुर्बन्धुषु विनिश्चितो जायते मनुजः ॥ ३५ ॥

लाभस्थः सहजेशः सुबान्धवं राजलाभिनं ख्यातम् ।
कुरुते बन्धुषु सेवाविधायिनं भोगनिरतं च ॥ ३६ ॥

व्ययगे दुश्चिक्येशे मित्रविरोधी स्वबन्धुसन्तापी ।
दूरे वासितबन्धुर्विदेशगामी नरो भवति ॥ ३७ ॥

इति सहजभावाधिपफलम् ॥

तुर्यपतिर्लग्नगतः पितृपुत्रौ स्नेहलौ मिथः कुरुते ।
पितृपक्षवैरकलितं पितृनाम्ना भवि प्रसिद्धं च ॥ ३८ ॥

पातालपे धनस्थे क्रूरखगे पितृविरोधकृच्च शुभे ।
पितृपालकः प्रसिद्धः पितापि भुनक्ति च तल्लक्ष्मीम् ॥ ३९ ॥

ABCDIS

34b बंधूत्थत° B, बंधूभित° I, बंधूज्भित° A, वधूज्झिते° C, बंधुस्थित° S सौम्यः S 34d °भोक्तो BDS भवति BDS 35 om. D 35c °बंधु° om. BS 35d विनिश्चयो ACI नियतं for मनुजः ACI 36b ख्यातं ] कुरुते BDS 36c कुरुते ] पुरुषं BDS 36d भोगरिरतं D, भोगारिरतं S वा D 37b वित्त° ACI °रोधेन बंधु° ACI स्व( श्व B )जन° BDS 37c दूर° BI, द्वर° AC, रुरे D col. after इति B adds श्रीवृद्धयवने सहजाधिपति( पति om. C )फलं ACI 38a °गतिः D 38b मिथो नरं कुरुते BDS 38c °वैरि° BDS 38d भुवि ] थु° BDS प्रसिद्धश्च ACI 39b क्रूरवर्गे ABC 39d पितापि वा D, पिना ACI, पिवा BS च लक्ष्मीं BDS

तुर्येशः सहजस्थः पितृमातृच्छेदकं विदितपितरम् ।
पित्रा सह कलहपरं पितृबान्धवघातकं पुरुषम् ॥ ४० ॥

तुर्यगते तुर्यपतौ पितुराज्ञारक्षकः सदा हृष्टः ।
विदितः पितृलाभकरो भवति सुकर्मा सुखी निधिपः ॥ ४१ ॥

सुतगे तुर्यगृहेशे पिता सलाभोद्गतश्च दीर्घायुः ।
भवति क्षितौ प्रसिद्धः सुसुतः सुतपालकः सोऽपि ॥ ४२ ॥

हिबुकपतौ रिपुसंस्थे पितुरर्थविनाशकः पितरि वैरी ।
पितृद्वेषकरः क्रूरे सौम्ये धनसंचयस्तनयः ॥ ४३ ॥

अम्बुपतौ सप्तमगे क्रूरे श्वशुरं स्नुषां न पालयति ।
सौम्ये पालयति पुनः कुलटान्तं कुजकवी कुरुतः ॥ ४४ ॥

छिद्रगतस्तुर्यपतिः क्रूरो रोगान्वितं दरिद्रं च ।
दुःकर्मरतं मन्युप्रियमथवा मानवं कुरुते ॥ ४५ ॥

सुकृतगते तुर्यपतौ पित्रर्थसङ्गी समस्तविद्यावान् ।
पितृधर्मसङ्ग्रहपरः पितृनिरपेक्षो भवेन्मनुजः ॥ ४६ ॥

पातालपेऽम्बरगते पापे सुतमातरं त्यजति जनकः ।
श्रयते चान्यां दयितां सौम्ये पुनरन्यमेवाकृत् ॥ ४७ ॥

ABCDIS

40b °मातृस्थितं B, °मातृस्थितं D, °मातृस्थितं S °पित्सरं D, मारं I 40c कलह° om. C 40d °बांधवपालकं BDS 41b : पितरौ (र DS) क्षितिपाधिनाथ (पाधिप B) मानकरः BDS हृष्टः I 42b सलाभोद्गज° CI, सलाभोगज° D, सल-भोगज° S, सहभोगज° B 42c क्षितौ ] क्षिप्रः BDS 43c °द्वेषीपरः B, द्वेषपरः D, °दोषपरः S 43d ध° om. BCDS °संचक° cod. °स्तनः DS 44b क्रूरे om. BDS चेश्वरं S, श्वरं BD तु BDS 44d : स्वकीयापत्नी व्रतसस्नेहां कुरुते I °टांतां ABS, °टां D °कविं S कुरुते DS 45b क्रूरे cod. वा CDIS 45c मृत्यु° BDS 47b पाप° BDS 47c धन्यां BDS 47d सौम्या S °रन्ये सेवाकृता BDS

एकादशगे तुर्यपतौ पित्रोः पालकः सुकर्मा च ।
पितृभक्तः प्रचुरायुः सौम्ये पुनरीश्वरो भवति ॥ ४८ ॥

द्वादशगे तुर्यपतौ मृतः पिता वा विदेशगो वाच्यः ।
पुत्रस्य पापखचरे त्वन्यपितुर्जन्म निर्देश्यम् ॥ ४९ ॥

**इति चतुर्थभावाधिपफलम् ॥**

लग्नगतः पंचमपः प्रसिद्धमस्तोकतनयपरिकलितम् ।
शास्त्रविदं गीतविदं सुकर्मनिरतं नरं कुरुते ॥ ५० ॥

पंचमपतिर्धनस्थः क्रूरः खचरो धनोज्झितं कुरुते ।
गीतादिकलाकलितं कष्टभुजं स्थानकप्रचुरम् ॥ ५१ ॥

तनयपतिः सहजगतः सुमधुरवाचं स्वबन्धजनविदितम् ।
कुरुते स्थानं तदीयतनयाः परिपालयन्ति बन्धुम् ॥ ५२ ॥

सुतपः पातालगतः पितृकर्माणां प्रपालितं पित्रा ।
जननीभक्तं कुरुते क्रूरस्तु विरोधकृत् पित्रा ॥ ५३ ॥

तनयगतस्तनयपतिर्मतिमन्तं मानिनं वचनकुशलम् ।
सुतयुक्तं प्रवरजनं प्रख्यातं मानवं कुरुते ॥ ५४ ॥

ABCDIS

48a : एकादशे तुर्याधि° ACI 48a °गे—49a °गे om. B 48b पितृ° CIS, पितृमा° A, पितृया° D °त्मकः D 48b सुकर्मा च om. A 48c-d : पितृभक्तो भवति सुतः प्रचुरायुर्व्याधिविकलश्च DS col. after इति B adds श्रीवृद्धयवने तुर्यपतिद्वादशभावगत( भावादि I )फलं ACI 50b °मस्त्वोक° DS, °मश्लोक° B 50c गीतविदं ] गतिज्ञं ACI 51b क्रूरे ABCDI खे° ABI धनोसितं BS, धवोशितं D, धनवित्तं A 51d प्रवरं BDS 52b सु° om. BDS सुबंधु BDS 52c सुतं BDS तदीय° om. AI, तदीयाः BDS 52d तनयाः om. BDS, °तनयात् ACI हृतद्वंधुः A, हृतद्वंधूः C, तद्वंधू I 53b कर्माणं cod. प्रतिपालितं C, परिपालयंति BDS 53c °भक्तिं AC 53d दूरस्तु BDS विरोधकं पितरि BDS 54c सुत-कलितं BDS °जनः ABCDI

पंचमपः शत्रुगतः शत्रुप्रतिमाङ्गसम्भवं हीनम् ।
रोगधनं धनरहितं क्रूरः खचरः करोति नरम् ॥ ५५ ॥

तनयपतौ सप्तमगे सुसुता सुभगा स्वदेवगुरुभक्ता ।
प्रियवादिनी सुशीला नरस्य खलु जायते दयिता ॥ ५६ ॥

सुतपे निधनगृहस्थे कुत्सितवाग्मिस्त्रपो भवति भण्डः ।
नष्टा व्यङ्गाः सहजास्तत्पुत्राः सम्भवन्ति तथा ॥ ५७ ॥

सुकृतगतस्तनयपतिः सुबोधविद्यं कविं सुगीतज्ञम् ।
नृपपूजितं सुरूपं नाटकरसिकं नरं कुरुते ॥ ५८ ॥

सुतपतिरम्बरसंस्थो नृपकर्माणं नृपात् कलितलाभम् ।
सत्कर्मरतं प्रवरं जननीकृतसुखशतं तनुते ॥ ५९ ॥

सुतनाथे लाभस्थे शूरः [सु]सुतवान् सुकृतभोगी च ।
गीतादिकलाकलितो नृपभाजी जायते जातः ॥ ६० ॥

पंचमपे द्वादशगे क्रूरे सुतविरहितः शुभे सुसुतः ।
सुतसन्तापपरः स्याद् विदेशगमनोद्यतो मनुजः ॥ ६१ ॥

इति सुतभावाधिपफलम् ॥

ABCDIS

55a °पतिरहितगतः BDS 55c धन° om. BI 56b स्वसुता BDS स्व° BDS 56d तनयस्य प्रजायते BDS 57b वृरकलाग्भ्रेया BDS निःश्रियो I भंडाः DS, भंगः B, भणुः C, त्रणु I, भराणः A 57d तनयाः BDS 58a सुकृत° ACI 58b विज्ञं A, °विज्ञं BS, °विश्वं D, °वित्तं I °गीततं A, °गीतक B 59a °वरलीनो A, वरजीर्णा C, °वरनालो I 59d °सुखं सततं भुंक्ते BDS 60a सूतपे BDS 60d °भोगी B, °भागी S जायते] परमसं C 61b सुशुभे BDS ससुतः DS, सुतः B 61c सुत° om. BDS col. इति om. DS after इति B adds: श्रीवृद्धयवने सुतभावफलं DS

षष्ठेशे लग्नगते नीरुक् सबलः कुटुम्बकष्टकरः ।
बहुपक्षो रिपुहन्ता भवति नरः शौचवचनधनः ॥ ६२ ॥

शत्रुपतौ द्रविणस्थे दुष्टश्चतुरो हि सङ्ग्रहेऽनिष्टः ।
स्थानप्रवरो विदितः क्रूरे सव्याधितनुर्हृतवित्तः ॥ ६३ ॥

षष्ठपतिः सहजस्थः क्रूरः कुरुते सलोककष्टकरम् ।
जनकस्य तथा कष्टमरणं सङ्ग्रामतस्तस्य ॥ ६४ ॥

षष्ठाधिपतिस्तुर्ये पितृतनयौ वैरिणो मिथः कुरुते ।
सरुक्पिता सोऽप्यसुतो लक्ष्मीं लभते नरः सुचिरम् ॥ ६५ ॥

रिपुभवनपतौ सुतगे पितृसुतयोर्वैरता मृतिस्तु ततः ।
क्रूरे शुभे च निर्धनपदवी दुष्टश्च तज्जातः ॥ ६६ ॥

रिपुभवनेशे रिपुगे नीरुग्वैरी सुखी कृपणरूपः ।
न हि जन्मतोऽपि सीदति स्थानकवासी भवति मनुजः ॥ ६७ ।

अहितपतौ सप्तमगे क्रूरे भार्या विरोधिनी चण्डा ।
तापकरी त्वथ सौम्ये वन्ध्या वा गर्भगलनपरा ॥ ६८ ॥

**ABCDIS**

62d भवति om. BDS नरे BDS स्वेववचन° S, स्वेवचनन° BD, स्वैर्वचन° I 63b संग्रहपति( ती ऽ )ष्टः BDS 63d क्रूरे om. BD °तनुहतो वित्तः ACI, °स्तनुजह्न ( हृ B, ह B ))तवित्तः BDS 64b सुलोचनकष्टपरं BDIS 64c-d जनकमारण ( मरणेषु I )रतं (रतिं I) कष्टं संग्रामास्त( मजं त I )स्य BDIS 65b पितृपुत्रौ BDIS 65c सरुक्मिता A, सम्यक्सुता BDS, सस्यभुजो I सोऽप्यसुतो om. D, निजनातार्जित° I 65d लक्ष्मीं om. A कुरुते C 66a सुतस्थे I 66b वैरिता BDIS मनुभवतः AC, कुकर्मेतिः I 66d तज्जातः ]तत्फलति BDIS 67a °भवनपतौ BDIS रिपुस्थे BDIS 67b सुषा BS, शुमे I क्षणरूपः BDS, क्षिणीरूपः I 67c जन्मन्य BDIS 67d नरः BDIS

शनेर्भ्रणिका रुजो विषधरा धरानन्दना-
द्बुधाच्च विषदोषतः सपदि मृत्युरेणाङ्कतः ।
रवेर्मृगपतेर्भयं भवति रिष्टपादष्टमा-
द्गुरोर्नृपतितः स्वमानधनदोषवान् शुक्रतः ॥ ६९ ॥

शत्रुपतिर्यदि नवमः क्रूरः खचरस्तदा भवेत् स्वजः ।
बन्धुविरोधी शास्त्रं न मन्यते याचकः पुरुषः ॥ ७० ॥

अरेगृहपे दशमस्थे क्रूरे मातरि रिपुस्तथा दुष्टः ।
धर्मसुतपालकमतिर्मातुर्दोषैर्भवेद्वैरी ॥ ७१ ॥

वैरिपतौ लाभगते क्रूरे मरणं विपक्षतो भवति ।
तस्करकृतहानिः स्याश्चतुष्पदाल्लाभवान् मनुजः ॥ ७२ ॥

षष्ठपतौ द्वादशगे चतुष्पदद्रव्यधान्यनाशकरः ।
गमनागमनं लक्ष्म्याः सो दैवपरो नरो भवति ॥ ७३ ॥

इति रिपुभावाधिपफलम् ॥

ABCDIS

69a शनि° AI धरा om. ABCD °नंदने AC 69b बुधश्च A °ब्दुधस्य I °दोषदा S °रेणातकः B 69c-d om. D 69c रवि° I, रवौ BS भयं]नृपो BS भवति रिष्टमानषष्ठात् BS, भवतिरष्टमो AC, द्विपप्रदानतः स्यान्मृति I 69d गुरु C, गुरौ A °र्नृपतितः] रुपरि नि° BS, पतिनि I स्वमानयन° C, श्वमात्रयन° I, स्वसीनपवन° A, श्वसीन° BS °दोषतो I, दोल्लु(च्छु S)वान् BS भार्गवं I after 69 I adds श्लोकयुग्म। 70a °र्यदा S नवमे BS, नवमो I 70b वंजः CS, वज्जः AB 70d मन्येत BD, मन्यपि S 71b मातर B, मातृ C °स्तदा BDIS 71d दंतरदोषै° ACI °दोषे S 72c: तस्करवृद्धिनदूत्तिः B, तस्करकृतचित्रहूनि D, तिरस्करकृत् वित्तहृति S स्या° om. BDS 72d °श्च° DS, च° B °ल्लास्करकृतभन I पुरुषः BDS 73a-73c ल° om. I 73c लक्ष्या D, क्षया I, ल S 73d हादैव° BDS, सदैव AC, दैव° I °परो om. D, प° S, व° B नरो om. I col. इति om. DS after इति B adds श्रीवृद्धयवने

दयितेशो लग्नगतोऽशंसं निःस्नेहमन्त्यतमभार्यम् ।
भोगभुजं रूपयुतं जनयति दयितादलितवित्तम् ॥ ७४ ॥

जायापतौ धनस्थे दुष्टा दयिता सुतोज्झिता भवति ।
वित्तं च कलत्रकरं स च तद्वदनो विसञ्ज्ञश्च ॥ ७५ ॥

सप्तमपे सहजगत आत्मबलो बन्धुवत्सलो दुःखी ।
देव[र]रता सुरूपा गृहिणी क्रूरे तु तद्गृहगा ॥ ७६ ॥

जायेशे तुर्यस्थे लोलः पितृवैरसाधकोऽस्नेही ।
अस्य पिता दुर्वाक्यस्तद्भार्यां पालयेच्च पिता ॥ ७७ ॥

सप्तमपतौ सुतस्थे सौभाग्ययुतः सुतान्वितः पुरुषः ।
प्रियया सह दुष्टमतिस्तत्तनयः पालयेद्दयिताम् ॥ ७८ ॥

रिपुगृहगः कान्तेशः प्रियया सह वैरिणं सरुग्भार्यम् ।
दयितासङ्क्षयिणं क्रूरः कुरुते च मृत्युपदम् ॥ ७९ ॥

सप्तमपे सप्तमगे परमायुः प्रीतिवत्सलः पुरुषः ।
निर्मलशीलसमेतस्तेजस्वी जायते सततम् ॥ ८० ॥

कान्तेशे निधनगते गणिकासु रतः करग्रहणरहितः ।
देवद्विजातिसक्तो न स्त्रीसेवाकरः पुरुषः ॥ ८१ ॥

ABCDIS

74b ऽशंसं om. ACI, शेषं S, छेशं B, छंष D निस्नेहपरमन्यभार्यागं I 74c भागभूजं BD रूपसुतं BS. रूपयुता AC 75b दुःख्र( खी I )भार्या BDIS सुतोक्रिता C, सुतोद्रिता D, सुतोमिता B, सुतोपि I, धनोदिता A दु.खार्तः I 75d चोद्वेगी AC, ममतेनो I विसंज्ञश्च I 76c देवरद्रनी I 76d च BDIS तद्रहगां A, तद्द्रहः गः I, तत्टहमाह D, तद्गृहं C 77b 'वैरि° DIS, °वैरी B °सात्विको DIS 77c दुर्वाक्यात् AC 77d पिलयि B पिलये DS चलेतो B, वलिपिता D, पलिता S 78a सप्तमपे पुत्रस्थे BDIS 78d : °स्तनयास्तस्यापि दुष्टभावस्तु I 79a °ग्रहगः DI 79b सरुग्भार्या BC, सरुग्मार्णं A, सपूत्रार्थं I 79d क्रियते ABC च om. BDS, तु I 81b गणिकारातिं I 81c देवद्विज आशक्तो A, देवद्विजासक्तो C, वेद्द्वितीया( य BI )शक्तो BID, चेद्द्वितीयाशक्तो S 81d सुस्त्री I

सुकृतगते सप्तमपे तेजोवान् शीलवान् प्रियोऽप्येवम् ।
क्रूरे तु षण्ढरूपो लग्नेशवीक्षणे तपः प्रबलः ॥ ८२ ॥

सप्तमपे दशमस्थे नृपदोषी लम्पटः कुवाक् कूटः ।
क्रूरे दुःखार्तः स्याच्छ्वश्रूवशगो भवेत् पुरुषः ॥ ८३ ॥

लाभस्थे जायेशे भक्ता रूपान्विता सुशीला च ।
दयिता परिणीता स्यान्म्रियते सा च प्रसवसमये ॥ ८४ ॥

सप्तमपे द्वादशगे गृहबन्धा नास्तिका भवेद्भार्या ।
सा लोला दुष्टगुणा स्खलिता तस्य पुरुषस्य ॥ ८५ ॥

इति जायाभावाधिपफलम् ॥

अष्टमपे लग्नगते बहुविघ्नो दीर्घरोगभृत् पुरुषः ।
नष्टानुवादनिरतो लक्ष्मीं लभते नृपतिवचसा ॥ ८६ ॥

निधनपतौ धनलीनेऽल्पजीवितो वैरवान्नरश्चौरः ।
क्रूरे सौम्ये च शुभं किं तु क्षितिपालतो मरणम् ॥ ८७ ॥

अष्टमपतौ तृतीये बन्धुविरोधी सुहृद्विरोधी च ।
व्यङ्गो दुर्वाग्लोलः सोदररहितो भवेन्मनुजः ॥ ८८ ॥

ABCDIS

82c कंठ° DIS, खंड° B  82d °वीक्षमो BDS, °निरीक्षणात् AC  नृपप्रबलः I  83a गृहणीपे BS, गृहणीपि D, गृहणिपतौ I  83b सुवाक् BDIS  कूरः D, नरः I  83c : क्रूरे दुष्टश्व( स्व I )सुर° BDIS  83d : स्यातः श्व( स्व BD )श्रू( स्तृ B, स्त्र D )श्वा ( श्व B ) शत्रुवधू BDS स्यातः शुरो धिकारवांश्च शुभे I  83d °त्स्वश्रा° AC  84b भोक्ता S  84d °न्मृयते ACD, °त्म्रियते I, °न्धिपते B  85b देह° D, देहे BI, गृह° om. S  नास्तिया BDIS °ज्जाया A  85c °गुणा om. BDIS  85d न( नि B ) रुद्धल( ला B )निच BDS, नरावनिपालरता च I  col. इति om. DS  after इति B श्रीवृद्धयवने  °भावफलं DS, °पतिभावः I  86b पुरुषः ]सूर्य B, सेयी S, स्तेनी D, कोपी I  86d च नृपति° AC  87a °भावे I, °लाभे BDS  87b : उत्पन्नजीवि नरो भवेच्चौरः I  87b वैरिवान् BDS  87c सौम्ये क्रूरे I  88b °रोधी' भवेत्यथवा DI  88d भवत्यथवा BDIS

निधनेशे तुर्यगते पितरि रिपुः पितृगतां लभेल्लक्ष्मीम् ।
पितृपुत्रयोश्च युद्धं पिता च रोगान्वितो भवति ॥ ८९ ॥

छिद्रपतौ तनयस्थे क्रूरे सुतविरहितः शुभे ससुतः ।
जातोऽपि नैव जीवति जीवत्यथ कितवकर्मरतः ॥ ९० ॥

छिद्रेशे रिपुसङ्गते दिनकरे भूभृद्विरोधी गुरौ
तुङ्गे सीदति दृष्टिरोगकलितः शुक्रे सरोगो भृशम् ।
भौमे वक्षसि संहतोऽहिभयभृत्तुङ्गार्तिभूतः शनौ
सौम्ये व्यधिभयं शशौ च मरणं सौम्येक्षिते नैव किम् ॥ ९१ ॥

मृत्युपतौ सप्तमगे गुह्यरुक्कुस्त्रीवल्लभो दुष्टः ।
क्रूरे भार्याद्वेषी कलत्रदोषान्मृतिं लभते ॥ ९२ ॥

निधनपतौ निधनगते व्यवसायी व्याधिवर्जितो नीरुक् ।
कितवकलाकलितवपुः कितवकुले जायते विदितः ॥ ९३ ॥

मृतिनाथे नवमस्थे निःसङ्गी जीवघातकः पापी ।
निर्बन्धुर्निःस्नेही पूजाविमुखो मुखव्यङ्गः ॥ ९४ ॥

कर्मगते निधनेशे नृपकर्मा नीचकर्मनिरतश्च ।
अलसः क्रूरेऽन्यभवस्तनयो वा जीवति न माता । ९५ ॥

---

ABCDIS

89b लभे°] नये° DIS, नरो B 90b स° om. I, सु° BDS 90c जीवति om. DS 91a गुरु° BDIS 91b स्वंगे BDIS रोगशोककलितः BDIS भृशं] विधौ BDIS 91c –र्ष्या सहितो बुधे BDIS °भूमिः BDS, °भूमे I 91d कष्टं राहुबुधौ हि तत्र शशभृत् BDIS शशी AC °क्षितो AC 92a मृतु° ABCDIS 92b °क्कुशील° AC 92d मृतं D, मृत्यु B, मनी I 93a निधनगते निधनपतौ BDIS 93d विदितः] पुरुषः I 94b पापी] पुरुषः BDIS 94d पूज्यो cod. पुषो व्यंगः IS 95b °कर्मरतश्च BDS 95d : तनयो नीचनीचकर्मा च I 95d जीवते B, जिवति AC, नीवति S, नावीत D मतो C, मते BDS at end of line ACD add वा

लाभस्थे मृत्युपतौ बाल्ये दुःखी सुखी भवति पश्चात् ।
दीर्घायुः सौम्यखगे पापेऽल्पायुर्नरो भवति ॥ ९६ ॥

व्ययस्थे [ चा ]ष्टमेशे क्रूरमनास्तस्करः शठो निर्घृणः ।
आत्मगतिर्व्यङ्गवपुर्मृतकः काकादिभिर्भक्ष्यः ॥ ९७ ॥

**इत्यष्टमभावाधिपफलम् ।**

लग्नस्थे नवमेशे देवान् गुरूंश्च मन्यते [ सु ]शूरः ।
कृपणः क्षितिपतिकर्मा स्वल्पप्रासी भवति मतिमान् ॥ ९८ ॥

नवमाधिपतौ धनगे वृषभो विदितः सुशीलवान् सत्यः ।
सुकृती वदनव्यङ्गश्चतुष्पदोत्पन्नपीडावान् ॥ ९९ ॥

सहजगते सुकृतपतौ रूपस्वी बन्धुवत्सलः पुरुषः ।
बन्धुश्रीरक्षणकृद्यदि जीवति बन्धुभिस्तदा रहितः ॥ १०० ॥

सुकृतेशे हिबुकस्थे पितृभक्तः पितृकृतेषु श्रद्धावान् ।
विदितो मर्त्यः सुकृती मैत्रे कर्मसुरतिर्भवति ॥ १०१ ॥

सुकृतगृहपे सुतस्थे सुकृती गुरुदेवपूजने निरतः ।
वपुषा सुन्दरमूर्तिः सुकृतसमेता भवन्ति सुता ॥ १०२ ॥

ABCDIS

96a ष्टमनाथे BDIS 96b सुखी om. BDS 96d पापे om. B, पोप° S, त्व° I °ल्पायुषा I 97a व्ययसंस्थे ABCDS 97b कूरवान् BS, कूरवाक् I, कूरवा D कृतकरः BDS, कत्यकरः I 97d मृतस्तु BDIS भक्षः ABCDI col. इति अ° ACDI, इति श्रीवृद्धयवने अ° B, अ° S 98a लग्नगते नवमपतौ BDIS 98b गुरून् S, गुरु BDI शूरः ABCDS, विदितः I 99a-b: तनुधनगे भाग्येशे विदित सुशीलः सुसत्यवाक् शीलः I 99a नवमाधिपतौ om. D °धिपेन BS 99b वृषतो AC, दृष्टतो D, दृष्टदो BS 99d °पीडाभः BDIS 100a °रक्षकपरो I 100d यदि om. I विदितः BDIS 101b °कृते मु° S, °जने सु° C, °कर्मसु° I यात्राकृत् BDS, रतिकृत् I 101c-d: विदितः सुकृती पितृभक्तारितिर्भवति विभुः सर्वभुभृतां चैव I 101c मर्त्यः om. BD 101d पितृकर्म° BDS °सुरतिमति° AC विभुः सदैव भूभृतां BDS

शत्रुप्रणतिपरायणधर्मरतिकलितं कलाविकलदेहम् ।
दर्शननिन्दानिरतं सुकृतपतिः षष्ठगः कुरुते ॥ १०३ ॥

नवमपतौ सप्तमगे सत्यवती सुविनया सुरूपा च ।
शीलश्रीयुतदयिता सुकृतयुता जायते नियतम् ॥ १०४ ॥

दुष्टौजस्तु विघाती गृहबन्धुविवर्जितः सुकृतरहितः ।
नवमेशे निधनगते क्रूरे षण्ढश्च स विज्ञेयः ॥ १०५ ॥

सुकृतपतिः सुकृतस्थः स्वबन्धुभिः प्रीतमनुच्छ्रितसमत्वम् ।
दातारं देवगुरुस्वजनकलत्रादिषु च भक्तम् ॥ १०६ ॥

नृपकर्माणं शूरं ख्यातं नृपलाभिनं स्वकर्मरतम् ।
मातुरविघ्नं कुरुते सुकृतपतिर्गगनगृहलीनः ॥ १०७ ॥

दीर्घायुर्धर्मपरो धनेश्वरः स्नेहलो नृपतिलाभी ।
सुकृतख्यातः सततं सुकृतविभौ लाभभवनस्थे ॥ १०८ ॥

द्वादशगे सुकृतेशे मानी देशान्तरी सुरूपश्च ।
विद्यावान् शुभखेटे क्रूरे च भवेज्जगति धूर्तः ॥ १०९ ॥

**इति नवमभावाधिपफलम् ॥**

ABCDIS

103b °धर्मरति° om. A, °रति° om. C, °मरेति° I °कलितं om. BDIS कलिकला° BDS 104b सुकृतवती सुवचन( ना I ) BDIS 104d सुकृतवति I, सुकृता B पुत्रवती जायते BDS, पुत्र I निरतं B, नित्यं DIS 105a दुष्टोजं cod. 105c मृत्युगते BDIS 105d खंडश्च I, षंटः स A, षंडः स C 106a सुकृतगतः BDIS 106b सुबंधुभिः प्रीतिं BDIS °मनुच्चितमत्वं C, °मतुलितसमतं A, वत्सलः पुरुषः I 106d च om. CI सक्तं I 107 om. BS 107a °कर्मकं नृपते° I 107b: °र्लाभिनं सुखदं सुकर्मरतं I 107d °तिर्गगनगृहलीनः om. D 108b नृपतिभोगी BDS, नृपतिरागी I 108c सुरतं C 108d सुकृतपतौ BDIS 109d वक्रास्त्रे C च भजन( न om. DS )मति BDS, जडमति I धृतः B col. इति om. DS after इति B adds श्रीवृद्धयवने नवमभावफलं I

दशमपतौ लग्नगते मातृवैरी पितृपूजकः सरलः ।
लोभासक्तश्च सुखी दुःखी † गतापितवक परपुरुषरता भवेन्माता ॥११०॥

वित्तस्थे गगनपतौ मात्रान्यया लालितः सुतो भवति ।
लोभी मातरि दुष्टः स्वल्पग्रासः सुतनुकर्मा ॥ १११ ॥

मातृस्वजनविरोधी सेवानिरतो न कर्मणि समर्थः ।
मातुलकपालितः स्याद् दशमपतौ सहजभवनस्थे ॥ ११२ ॥

दशमपेऽम्बुगते निरतः सुखे पितरि मातरि पोषणपूजने ।
सकललोकदशाममृतायते नृपतिसम्भवलाभविभूषितः ॥ ११३ ॥

शुभकर्मकोऽविडम्बी नृपलाभी गीतवाद्यनिरतः स्यात् ।
गगनपतौ तनयगते पालयति च तत्सुतं माता ॥ ११४ ॥

अम्बरपे शत्रुगते शत्रुभयात् कारतः कलहशीलः ।
कृपणः सभया हीनो नरो न रोगी भवति लोके ॥ ११५ ॥

सुतवती शुभरूपसमन्विता रमणमातरि पालनलालसा ।
भवति तस्य नरस्य निरन्तरं प्रियतमाम्बरपे दयितागते ॥ ११६ ॥

ABCDIS

110a लग्नस्थे BDIS  110b मातरि BDIS  वैरी om. AC  पितरि BDIS पूजकः ]भक्तश्च BDIS  सरलः om. BDIS  110c om. DIS  110d दुः° om. AC  दुःखयुक्तो पितृपक्षः I  110d गता°—110e पर° om. A  °पित्तवान् C  110e °पुरुषरक्ता AC, °पुरुषा B भवति BDIS  111b °न्यपालितः BDS, °न्यलालितः AC, तत्पालितः I  111c om. D  दुष्टो भवति BS  112a पित्रा AC  112b निरर्थः BDS  112c मातुलिक° BDS, मात्रांवया I  113a निरतः om. C  113b मातरि om. DIS  113c सकलदोषदशा° I °सकलदोदशा, BDS  114a °कर्मेषु C, °कर्मा पुं° A  114b 'वाक्य° BDIS  114d च om. DI  115 om. BDS
115 in I:

अंबरपे रीपुसंस्थे बाल्ये दूःखी सुखी भवेत्क्रूरे ।
पहष पश्चादीषः परनरनियतास्तथा माता ॥

115c सकृपा° A, भया C  116c नरस्य om. A

अम्बरपतिरष्टमगः क्रूरश्चौरं मृषान्वितं दुष्टम् ।
मातरि सन्तापकरं जनयति तनुजीवितं कितवम् ॥ ११७ ॥

शुभशीलः सद्बन्धुः सन्मित्रो दशमपे नवमलीने ।
तन्मातापि सुशीला सुकृतवती सत्यवचनरता ॥ ११८ ॥

गगनपतिर्गगनगतो जनयति जननीसुखप्रदं पुरुषम् ।
जननीकुलविपुलसुखं प्रकटनघटनापटीयामम् ॥ ११९ ॥

मातर्यतिरिक्तपरस्तथा च सुतपक्षिणी सुखिनी ।
दीर्घायुर्मातृसुखः पुरुषो लाभाश्रितेऽम्बरपे ॥ १२० ॥

मात्रोक्तितो निजबलः शुभकर्मा नृपतिकर्मरतचेताः ।
व्योमपतौ व्ययसंस्थे देशान्तरगश्च पापखगे ॥ १२१ ॥

**इति दशमभावाधिपफलम् ॥**

स्वल्पायुर्बलकलितः शूरो दाता जनप्रियः सुभगः ।
लाभपतौ लग्नगते तुच्छाद्दोषान्मृतिं लभते ॥ १२२ ॥

वित्तगते लाभपतावुत्पन्नभुगल्पभोजनोऽल्पायुः ।
अष्टकपाली चौरः क्रूरे सौम्ये च धनकलितः ॥ १२३ ॥

बन्धुस्त्रीपालनकः सुबान्धवो बन्धुवत्सलस्तु शुभे ।
लाभेशे सहजगते बन्धूनामाश्रयो रिपोच्छेत्ता ॥ १२४ ॥

ABCDIS

117a पुष्कर° BD, पुच्छर° S 117b क्रूरे च मृषा° AC पुरूषं I 119c निजकुलविपुलसुतसुख I 119d °यांसं cod. 120a मात्रोप्सि (प्वि B, छि I, शस्सि S) तभर्तारं BDIS 120b BDIS add भवेत् (:I) after पक्षिणी 120c °सुखदं AC 120d लाभान्वितो BDIS बरगः DS, पिवरा C 121a मा(पि B) त्रोप्सि (शि B, ज्झि S, ष्टे I) तो BDIS 121b °रति° DIS, °तो° B 121d °गतश्च CI °खचरे BDIS col. इति om. DS after इति B adds श्रीवृद्धयवने दशमभावफलं DS 122a अल्पायु° BDS 122b दत्ता DS, दश B, देव° I °गुरूः प्रिय I 122d तुच्छान् S, तुछान I, तनुछान् D, तोछा B 123c भारः BDS, भीरू I 123d च om. IS, थ B, ध D °कलितः पुरुषः I 124a °श्री° BDS 124d °माश्रयो om. BDS रिपुरिव छेत्ता BS, रिपुवछेत्ता D, रिपुछेता I

तुर्यस्थे लाभेशे दीर्घायुः पितरि भक्तिभाग्भवति ।
सामयिककर्मनिरतः स्वकर्मतो लाभवान् पुरुषः ॥ १२५ ॥

तनयगतो लाभपतिः पितृपुत्रौ स्नेहलौ मिथः कुरुते ।
तुल्यगुणौ च परस्परतुच्छौ जीवी च भवति सुतः ॥ १२६ ॥

लाभाधिपे षष्ठगते सुवैरः सुदीर्घरोगी चतुरङ्गसङ्ग्रही ।
मृतिं समाप्नोति च चोरहस्तात् क्रूरे विदेशान्तरसङ्गतो नरः ॥१२७॥

सप्तमगे लाभेशे तेजस्वी शीलसम्पदः पदवी ।
दीर्घायुर्भवति नरस्तथैकदयितापतिर्नियतम् ॥ १२८ ॥

एकादशपेऽष्टमगे क्रूरेऽल्पायुः सुदीर्घरोगी च ।
जीवनन्मृतश्च दुःखी भवति नरः सौम्यगगनचरे ॥ १२९ ॥

एकादशेशे सुकृतालयस्थे बहुश्रुतः शास्त्रविशारदश्च ।
धर्मप्रसिद्धो गुरुदेवभक्तः क्रूरे च बन्धुव्रतवर्जितश्च ॥ १३० ॥

मातरि भक्तः सुकृती पितरि द्वेषी सुदीर्घतरजीवी ।
धनवान् जननीपालकनिरतो लाभाधिपे खगते ॥ १३१ ॥

लाभाधिपो लाभगतः करोति दीर्घायुषं पुष्कलपुत्रपुष्टम् ।
सत्कर्मकं रूपयुतं सुशीलं जनप्रमोदप्रवणं सुगीतम् ॥ १३२ ॥

---

ABCDIS

125b °भाक् पितरि भवति BDIS 125c सामाधिक° BDIS 125d सत्कर्मतो BDS 126b °पौत्र° AC 126b °थः—127b °वैरः सु° om. B 127a सहवैरः DS 127c °हस्ता BD, °स्तात् C, °तो I 127d : विदेशे च I 127d कूटे C च देशा° CS 128a °गते BD 128b पदवी ] मान्यं I 128d निरतं BDS, सततं I 129d नरः om. DS, च I °चरैः BDS 130a सुकृता-श्रयस्थे BDIS 130b °विशारदः स्यात् BDIS 130d च[1] ] तथा BDIS °व्रत° om. BDIS °विवर्जितश्च BDS, °विवर्जित स्यात् I 131c °पालन° I, °पाल° BDS 131d लाभाधिपे खगते om. B खचरे, S, रंतरे D, वरगे I 132b पुष्कर° BD, पुच्छर° S °पुत्रमाढ्यं BS, °सुप्रमाढ्यं D, °पुत्रवंतं I 132c भूपयुतं BDIS 132d °प्रसाद° S °प्रवटं C, °प्रचुरं AI पुमांसं BDS

द्वादशगे लाभपतावुत्पन्नभुगस्थिरो भवति रोगी ।
उत्पातरतो मानी दाता दुःखी सदा पुरुषः ॥ १३३ ॥

इति लाभभावाधिपफलम् ॥

व्ययनाथे लग्नगते विदेशगः सुवचनः सुरूपश्च ।
अपसङ्गवाददोषी भवति कुमारोऽथवा षण्ढः ॥ १३४ ॥

व्ययनाथे वित्तगते कृपणः कटुवाग्विनष्टलाभलम्बः ।
भौमे गच्छति निधनं नृपतस्करवह्निभक्तभयतः ॥ १३५ ॥

सहजगते द्वादशपे क्रूरेऽधनबान्धवः शुभे च धनी ।
तत्सोदरः सुकृपणो बन्धुषु दूरे सदा वसति ॥ १३६ ॥

तुर्यगते व्ययनाथे कृपणो रोगोज्झितः सुकर्मा च ।
मृतिमाप्नोति सुतत्त्वं सत्तममनुजो महादुःखी ॥ १३७ ॥

द्वादशपतौ सुतस्थे क्रूरे सुतवर्जितः शुभे ससुतः ।
जनककमलाविलासी समर्थताविरहितः पुरुषः ॥ १३८ ॥

षष्ठगते व्ययनाथे क्रूरे कृपणोऽक्षिदूषणः पुरुषः ।
लभते मृतिमनुकरितो भृगुतनये भवति गतनयनः ॥ १३९ ॥

ABCDIS

133a लाभेशे DS, लाभपे B 133b उन्मत्तभुग° BDS, वुत्पन्नानभ° C, वुत्पन्नो न AI °ष्थिनो BDS रोगी om. I col. इति om. DS after इति B adds श्रीवृद्धयवने लाभाधिपफलं ABCI 134b सु°2 om. AC 134c अपसव्य° I, अपस° C 134d कुमारो ] नरो I षंढः I, षंटः ABD 135a द्वादशपे BDIS 135b °लः A, °जय C, °रतः I, °वत्रः S 135c : भौमे तु गच्छति धनं BDIS 135d °भज्ञ( क )भयतः AC, °भयभवतः( ति B ) BDS, °भयभीतः I 136b श्रुते S ऽधन° om. I, वधन° BDS, गज° AC 136c तनुसोदरः BDIS सु° om BIS रक्तपणौ D 136d °षु om. ABC भवति AC 137b रोगादितः AC कुकर्मा BDIS 137c मृत° AC, मति° S, सुख° I सुसुतः BDIS 137d सुनुकृतो ( स्वनकृतो D, सूनृतो S, सुकृतरतो I ) वा नरो नियतं BDIS 138b क्रूरे om. D सुसुतः BDS 139c परिकरितो BDIS

द्वादशपे सप्तमगे दुष्टो दुश्चरितभृत् कपटवचनः ।
क्रूरे न स्त्री सौम्ये सः सौख्यतामेति गणिकातः ॥ १४० ॥

व्ययनाथे विधनगतेऽष्टकपाली कार्यसाधनारहितः ।
द्रोहमतिः सौम्यखगे धनसङ्ग्रहतत्परो भवति ॥ १४१ ॥

व्ययनाथे सुकृतगते तीर्थाभीष्टव्ययी व्ययनवृत्तिः ।
क्रूरे खचरे पापी निरर्थकं पाति तद् द्रव्यम् ॥ १४२ ॥

व्ययनाथे गगनस्थे पररमणीपराङ्मुखः पवित्राङ्गः ।
सुतधनसङ्ग्रहनिरता दुर्वचनपरा भवति माता ॥ १४३ ॥

लाभस्थे द्वादशपे द्रव्यपतिर्दीर्घजीवितो भवति ।
स्थानप्रवेशदाता विख्यातः सत्यवचनपरः ॥ १४४ ॥

विभूतिमान् ग्रामनिवासवित्तः कार्पण्यबुद्धिः पशुसङ्ग्रही च ।
चेज्जीवते मांसयुतः सदा स्याद् व्ययाधिनाथे व्ययगेहलीने ॥१४५॥

इति द्वादशभावाधिपफलम् ।

## इति श्रीवृद्धयवने तन्वादिद्वादशभावाधीशफलाध्यायः ॥

ABCDIS

140b दुष्टो om. BDS दुष्टारभृत् BDS, दुष्टरतः I 140c : मायी ( भार्या D ) क्रूरे निस्त्री( निःस्वी I ) सौम्ये (सोमः BD ) BDIS 140d क्षयमेति BDS, धानपति I 141b °साधन° ABCD 141d-142c खचरे om. BDIS, but 142a-d repeated after 142 in DI 142b-d in the repeat in I :

तीर्थलोकोद्भुतो कथितः वृवृत्ति
सौम्ये व खगे पाप
खगे व पतितं द्रव्यं

143a : व्ययपे गगनगृहस्थे BDIS 143b : पर ( om. I )कार्यरतः परोपकारी( रः I ) च ( वा I ) BDIS 143d माता om. D 144a द्वापशपे लाभस्थे B 144b द्रविण° BDIS °रति° BDS 144c °प्रवरो ज्ञाता BDIS 144d °परश्च BDS, °रतः I 145a श्रीबुद्धिमान् BDIS 145b कार्येषु बुद्धिः BDIS 145c चेज्जीवति DIS, चेत्कीवति B ग्रामयुतः BDIS col. om. ABC द्वादशभावफलं DS chapter col. om. S

# पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

मेषोदये रक्ततनुर्मनुष्यः सदाल्पबुद्धिः परनिर्जितश्च ।
पित्ताधिकः सर्वजनोपसेव्यः सर्वाशनोऽबुद्धिविचक्षणश्च ॥ १ ॥

वृषोदये श्वेततनुर्मनुष्यः श्लेष्माधिकः क्रोधपरः कृतघ्नः ।
सुमन्दबुद्धिः स्थिरतासमेतः पराजितः स्त्रीभृतकैः सदैव ॥ २ ॥

तृतीयलग्ने पुरुषोऽतिगौरः स्त्रीरक्तचित्तो नृपपीडिताङ्गः ।
दूतः प्रसन्नः प्रियवाग्विनीतः सुमूर्धजो गीतविचक्षणश्च ॥ ३ ॥

कर्कोदये गौरवपुर्मनुष्यः पित्ताधिकः कल्यतनुः प्रगल्भः ।
जलावगाहानुरतोऽतिबुद्धः शुचिः क्षमी धर्मरुचिः सुसेव्यः ॥ ४ ॥

सिंहोदये पाण्डुतनुर्मनुष्यः पित्तानिलाभ्यां परिपीडिताङ्गः ।
प्रियामिषोऽरण्यरसः सुतीक्ष्णः शूरः प्रगल्भः सुतरां निरीहः ॥ ५ ॥

कन्याविलग्ने कफपित्तयुक्तो भवेन्मनुष्यः शुभकान्तिभाजः ।
श्लेष्मप्रियः स्त्रीविजितोऽतिभीरुर्मायाधिकः कामकदर्थिताङ्गः ॥ ६ ॥

तुलाविलग्ने च भवेन्मनुष्यः श्लेष्मान्वितः सत्यपरः सदैव ।
पण्यप्रियः पार्थिवमानयुक्तः सुरार्चने तत्पर एव कल्यः ॥ ७ ॥

लग्नेऽष्टमे कोपपरो जराढ्यो भवेन्मनुष्यो नृपपूजिताङ्गः ।
गुणान्वितः शास्त्रकथानुरक्तः प्रमर्दकः शत्रुगणस्य नित्यम् ॥ ८ ॥

धनूदये राजयुतो मनुष्यः कार्ये प्रधृष्यो द्विजदेवरक्तः ।
तुरङ्गयुक्तः सुहृदैः प्रयुक्तस्तुरङ्गजंघश्च भवेत् सदैव ॥ ९ ॥

ABCDIS

before 1 D has : अथ मेषादिकजन्मफलं; I has : अथ राशिभावाध्यायो निरूप्यते
1b-2a om. AB 1c-d om. I 3d समूर्द्ध° AC 5c °रन्य° DIS
°सर DS 6b °कांत° ABC 6c श्लेष्मप्रियः om. D, श्लेष्माप्रियः ABCI,
श्लेष्मप्रजः S स्त्रीविनीतो B 7b श्लेष्मायुतः DS 7c पण्या° C, पुण्य° D 8b
नर° I 8d °गुणस्य CI 9a धनोदये cod. 9b °भक्तः D

मृगोदये तोषरतः सुतीव्रो भीरुः सदा पण्यनिषेवकश्च ।
श्लेष्मानिलाभ्यां परिपीडिताङ्गः सुदीर्घगात्रः परवंचकश्च ॥ १० ॥

घटोदये सुस्थिरतासमेतो वाताधिकः स्तेयनिषेवणोक्तः ।
सुहृत्स्वगात्रः प्रमदास्वभीष्टः सिद्धानुरक्तो जनवल्लभश्च ॥ ११ ॥

मीनोदये तोषरतो मनुष्यो भवेद्विनीतः सुरतानुकूलः ।
सुपण्डितः स्त्रीदयितः प्रचण्डः पित्ताधिकः कीर्तिसमन्वितश्च ॥१२॥

मेषे धनस्थे लभते मनुष्यो धनं सुपण्यैर्विविधैः प्रभूतः ।
चतुष्पदाढ्यः बहुबान्धवाढ्यः प्रयच्छति प्रीतिपरः सदैव ॥ १३ ॥

वृषे धनस्थे लभते मनुष्यः कृषिप्रयत्नेन धनं सदैव ।
अन्नाभिधानं च चतुष्पदाख्यं तथा हिरण्यं मणिमुक्तिकोत्थम् ॥१४॥

तृतीयलग्ने धनगे मनुष्यो धनं लभेत स्त्रीजनतश्च नित्यम् ।
रौप्यं तथा कांचनजं प्रभूतं हयाधिकं मुष्टुभिरेव सख्यम् ॥ १५ ॥

चतुर्थराशिर्धनगो मनुष्यो धनं लभेद् वृक्षजमेव नित्यम् ।
जलोद्भवं यद्यजनिष्ठभोज्यं नयार्जितं प्रीतिकरं सुतानाम् ॥ १६ ॥

सिंहे धनस्थे लभते मनुष्यो धनं तथारण्यजनोत्थमाप्तम् ।
सर्वोपकारं प्रवणप्रभूतं स्वविक्रमोपार्जितमेव नित्यम् ॥ १७ ॥

कन्योदये वित्तगते मनुष्यो धनं लभेद् भूमिपतेः सकाशात् ।
हिरण्यमुक्तामणियुक्तजातं गजाश्वनानाविधवित्तजं च ॥ १८ ॥

ABCDIS

11d सीष्टा° S, शिष्टा° D order in B: 13a, 12, 13b-d 12a नाप° ABCI 12c स्त्रीदयित: om: B B adds in the margin: इति तनुराशिफलं before 13 D has: अथ मेषाधिकधनस्थानफलं 13a कुरुते cod. 13b धनं: S स° ABCI °पुण्यै° cod. समेनः S 13c बहुपंडिताभ्यां ABCI 13d प्रयछतः ABCI 14d °मौक्ति° DS 15b भवेत् cod. 15c-16b om. D 16b भवे° cod. 17b सदारण्य° DS

तुले धनस्थे बहुपण्यजातं धनं भवेत् पुत्रजनैरुपेतम् ।
वित्ताहवं चाप्रतिमं प्रधानं स्वन्यायलब्धं गुरुलब्धशेषम् ॥ १९ ॥

अलौ धनस्थे तृणकाष्ठजातं धनं मनुष्यो लभते प्रभूतम् ।
पाषाणजं मृन्मयमार्तिजातं सस्योद्भवं कर्मजमेव नित्यम् ॥ २० ॥

धनुर्धरे वित्तगते मनुष्यो धनं लभेत् स्थैर्यविधानजातम् ।
चतुष्पदाख्यं विविधं यशस्यं रसोद्भवं धर्मविधानलब्धम् ॥ २१ ॥

मृगे धनस्थे लभते मनुष्यो धनं प्रपंचैर्विविधैरुपायैः ।
सेवासमुत्थं च सदा नृपाणां कृषिक्रियाभिश्च विदेशसङ्गात् ॥ २२

घटे धनस्थे लभते मनुष्यो धनं प्रभूतं फलपुष्पजातम् ।
जनोद्भवं साधुजनस्य भोज्यं महाजनोत्थं च परोपकारैः ॥ २३ ॥

मत्स्ये धनस्थे लभते मनुष्यो धनं प्रभूतैर्नियमोपवासैः ।
विद्याप्रभावान्निधिसङ्गमाच्च मातापितृभ्यां समुपार्जितं च ॥ २४ ॥

तृतीयसंस्थे प्रथमे च राशौ मित्रं द्विजातिं च लभेन्मनुष्यः ।
परोपकारं प्रवणं शुचिं च प्रभूतविद्यं नृपपूजिताङ्गम् ॥ २५ ॥

वृषे तृतीये लभते मनुष्यो मित्रं नरेन्द्रं प्रचुरप्रतापम् ।
सुवित्तदं भूरियशोनिधानं शूरं कविं ब्राह्मणरक्तचित्तम् ॥ २६ ॥

॥ २७ ॥

ABCDIS

19a °पुण्य° ABCDI 19b पुत्र°—20b धनं om. B 19b भवेत् om. A, रुपेत् CI 20c °मर्ति° AB, °मार्त° S 20d शम्यो° D 21c ययस्यं B, च यस्य C, सदस्यं I, यस्यं A 22b °विंघनै° D 22c °समुक्तं S, °सयुक्तं D, °सत्थं B, °सत्यं A, °भयं C 23b फलमुख° D 24 B has in the margin: वृद्धयवने धनफलं after 24 D has: अथ मेषादिकस्तृतीयस्थानफलं 25c-26a om. A 27 om. cod.

कुलीरराशौ सहजप्रयाते मित्रं लभेद्वैश्यगुरुप्रसेवम् ।
कृषीवलं धर्मकथानुरक्तं सदा सुशीलं सुरसंमतं च ॥ २८ ॥

सिंहे तृतीये लभते मनुष्यः शूद्रं कुमित्रं परवीतलब्धम् ।
वधात्मकं पापकथानुरक्तं प्रचण्डवाक्यं जनगर्हितं च ॥ २९ ॥

॥ ३० ॥

तृतीयसंस्थे तु तुलाभिधाने मैत्री भवेत् पापपरैर्मनुष्यैः ।
लौल्यात्मकैर्लौल्यकथानुरक्तैः सार्धं मनुष्यस्य सुतार्थयुक्तैः ॥ ३१ ॥

अलौ तृतीये लभते मनुष्यो मैत्रीं सदा पापजनैर्दरिद्रैः ।
कृतघ्नताढ्यैः कलहानुरक्तैर्व्यपेतलज्जैर्जनताविरुद्धैः ॥ ३२ ॥

चापे तृतीये लभते मनुष्यो मैत्रीं सुशूरैर्नृपसेवकैश्च ।
वित्तेश्वरैर्धर्मपरैः प्रसन्नैः कृपानुरक्तैः रणकोविदैश्च ॥ ३३ ॥

॥ ३४ ॥

कुम्भे तृतीये लभते मनुष्यो मैत्रीं व्रतज्ञैर्बहुकीर्तियुक्तैः ।
क्षमाधिकैः सत्यपरैः सुशीलैः गुणाधिकैः साधुकथानुरक्तैः ॥ ३५ ॥

ABCDIS

28c कृषीवलं om. D 28d सुत॰ DS 29b शूरं B ॰वित्त॰ DS ॰लब्धं D 29d जनि॰ D, न॰ AB, न च C 30 om. cod., but S supplies:

तृतीयसंस्थे प्रमदाभिधाने
मैत्री भवे चैव वरांगनानां
विदेशतश्चारुविलासिनीभिः
सुपुण्यरक्तो गुरुभक्तिकश्च

31a प्रमदाभिधाने D च A 31b पापजनैर्दरिद्रैः S 32a च । वेन् ABCI, भवने DS 32c ॰ताद्यैः S 33b सुशूरं ABCDI 34 om. cod., but a later hand inserts 55, 46 in D

मीने तृतीये लभते मनुष्यो मैत्रीं सदा हास्यपरैः सुमुग्धैः ।
कुशीलनैः क्रीडनकैः कुशीलैर्गीतप्रियैर्गोपपरैः खलैश्च ॥ ३६ ॥

मेषे सुखस्थे लभते सुखं च चतुष्पदेभ्योऽथ विलासिनीभ्यः ।
भोगैर्विचित्रैः प्रचुरान्नपानैः पराक्रमोपार्जितमर्दनैश्च ॥ ३७ ॥

वृषे सुखस्थे लभते सुखानि नरातिमान्यैर्विविधैश्च मान्यैः ।
शौर्येण भूपालनिषेवणेन विप्रोपचारैर्नियमैव्रतैश्च ॥ ३८ ॥

तृतीयराशौ सुखगे सुखानि लभेन्मनुष्यः प्रमदाकृतानि ।
जलावगाहैर्वनसेवया च प्रभूतपुष्पाम्बरसेवनेन ॥ ३९ ॥

॥ ४० ॥

सिंहे सुखस्थे तु सुखं मनुष्यः प्राप्नोति जातु प्रचुरप्रकोपात् ।
दरिद्रतः शीलविपर्ययाच्च कुमित्रसङ्गाद्धनसंश्रायाच्च ॥ ४१ ॥

कन्यागृहे बन्धुगृहे मनुष्यो प्राप्नोति सौख्यं प्रमदाभियोगात्
बह्वन्नपानान्नृपसेवनाच्च महोद्यमाद्धर्मनिषेवणाच्च ॥ ४२ ॥

तुले सुखस्थे लभते मनुष्ये पैशुन्यसङ्गाल्लभते सुखानि ।
परोत्थछिद्रेक्षणकीर्तनेन चौर्येण युद्धेन च मोहनेन ॥ ४३ ॥

॥ ४४ ॥

ABCDIS

36b समुग्धैः AIS B adds in the margin : सहजचिन्ता before 37 D adds : अथ मेषादिकसुखस्थानफलं 37c प्रचुरा°—38b नरातिमान्यैं° om. D 37d °सद्धनैश्च S 38b सानैः D 38c सूर्येण D 40 om. cod. 41c दरिद्रसंगात् शील° cod. 41d °संगाद्धन° om. A 42a बंधुगृहे om. C 43c °छिद्र° ABCI 43d शैर्येण S 44 om. cod.

चापे सुखस्थे लभते मनुष्यः सुखं सदा सङ्करसेवनेन ।
तत्कीर्तनेनैव हयैर्विचित्रैः सेवासुखस्थेन निबन्धनेन ॥ ४५ ॥

मृगे सुखस्थे सुखभाग् मनुष्यः सदा भवेत्तोयनिषेवणेन ।
उद्यानवापीतटसङ्गमेन मित्रोपचारैः सुरतप्रधानैः ॥ ४६ ॥

घटे सुखस्थे प्रमदाभिधानात् प्राप्नोति सौख्यं विविधं मनुष्यः ।
मिष्टान्नपानैः फलशाकपत्रैर्विदग्धवाक्यैः कुहकानुकारैः ॥ ४७ ॥

मीने सुखस्थे तु सुखं मनुष्यः प्राप्नोति सौख्यं जलसंश्रयेण ।
शनैस्तथा देवससुद्भवैश्च स्थानैः सुवस्त्रैः सुधनैर्विचित्रैः ॥ ४८ ॥

मेषे सुतस्थे लभते मनुष्यः प्रायेण पुत्रान् वितरां तथा च ।
शूरान् [सु]मुख्यान् विकृतान्तु चान्यान् पापानुरक्तान् कुलवित्तयुक्तान् ॥४९॥

वृषे सुतस्थे लभते मनुष्यः प्राप्नोति कन्याः सुभगाः सुरूपाः ।
अपत्यहीना बहुकान्तियुक्ताः सदानुरक्ता निजभर्तृधर्मे ॥ ५० ॥

तृतीयराशौ सुतगे मनुष्यः प्राप्नोत्यपत्यानि मनोहराणि ।
सुशीलयुक्तानि गुणाधिकानि प्रभासमेतानि बलाधिकानि ॥ ५१ ॥

कर्के सुतस्थे जनयेन्मनुष्यः पुत्रान् प्रसिद्धान् सुतलालसांश्च ।
विस्तीर्णकीर्तींश्च महानुभावान् धनेन युक्तान् विनयेन युक्तान् ॥ ५२ ॥

ABCDIS

45c—46b सदा om. D 47d कुमतिर्निषेधः C 48c शनैश्चरा ABCI 48 in margin सुष B before 49 D has: अथ मेषादिकसुतस्थानफलं 49b वितरस्तथा ABCI, वितांस्तथा DS 49c मुखान् AC, सुखान् BDIS शूरान् ]क्रूरान् DS चान् DS 49d कुलवित्तयुक्तान् om. D °चित्र° ABCIS 51d प्रभा-समेतानि om. A 52c °कीर्तिश्च ABCDI

सिंहे सुतस्थे जनयेन्मनुष्यः क्रूरस्वभावान् नयनेन कान्तान् ।
मांसप्रियान् स्त्रीजनकान् सुतीव्रान् विदेशभाजान् क्षुधया समेतान् ॥ ५३ ॥

कन्या यदा पंचमगा तदा स्युः कन्या नराणां तनयैर्विहीनाः ।
पतिप्रियाः पुण्यपराः प्रगल्भाः प्रशान्तपापाः प्रियभूषणाश्च ॥ ५४ ॥

तुला यदा पंचमगा नराणां तदा सुशीलानि मनोहराणि ।
भवन्त्यपत्यानि सुरूपकाणि क्रियासमेतानि सुभिक्षितानि ॥ ५५ ॥

कीटे सुतस्थे जनयेद्वियोनौ पुत्रान् मनुष्यः सुभगान् सुशीलान् ।
अज्ञातदोषान् प्रणवेन युक्तान् सदानुरक्तान् निजगोत्रधर्मे ॥ ५६ ॥

चापे सुतस्थे जनयेन्मनुष्यः सुतान् विचित्रान् हयलब्धलक्षान् ।
धानुष्कचर्यान् क्षतशत्रुपक्षान् सेवाप्रियान् पार्थिवमानतुष्टान् ॥ ५७ ॥

मृगे सुतस्थे जनयेन्मनुष्यः पुत्रान् मृगे पापमतीन् कुरूपान् ।
क्लीबान् कुभावान् विगतप्रभावान् सुनिष्ठुरान् क्षिप्रविवर्जितांश्च ॥ ५८ ॥

कुम्भे सुतस्थे स्थिरतासमेतान् गम्भीरचेष्टान् मतिसत्ययुक्तान् ।
पुत्रान् मनुष्यो जनयेत् प्रसिद्धान् नष्टात्मजान् कष्टसहान् प्रसूतान् ॥ ५९ ॥

मीने सुतस्थे सलिलानुरक्तान् पुत्रान् मनुष्यो लभतेऽल्पवीर्यान् ।
रोगातुरान् पापरतान् कुरूपान् सुहास्यतास्त्रीसहितान् सदैव ॥ ६० ॥

मेषे रिपुस्थे प्रभवन्ति पुंसां चतुष्पदा मूर्खतराः सुरौद्राः ।
प्रसन्नतो म्लेच्छसमुद्भवाश्च कार्यं विना चैव नरस्य लोके ॥ ६१ ॥

ABCDIS

54a यदा—55a तुला om. A 54b विनयै° I 55d सुमेक्षतानि ABCI 56d सदानुरक्तान् om. B 57b °लुब्ध° cod. 57d °मानजुष्टान् CIS 58b °मतिं ABCS, °रतिं D 58c सुभावान् cod. 59a सुरता° ABCI 60a प्रसूने D 60b व्यवर्यान् AB, व्यपर्यान् I 60c °रगान् ABCI 60d °स्त्रीवश-गान् DS in the margin B has: वृद्धियवने पुत्रचिंता before 61 D has: अथ मेषादिरिपुस्थानिफलं 61b सरौद्राः DS, प्रसिद्धाः ABCI

चतुष्पदार्थे प्रभवेत् प्रवैरं सदा नराणां वृषभे रिपुस्थे ।
असत्यमार्गेण तथाङ्गनानां सङ्गान्नितान्तं निजबन्धुवर्गे ॥ ६२ ॥

तृतीयराशौ रिपुगे नराणां वैरं भवेत् स्त्रीजनितं सदैव ।
तथा नराणां सहितं च पापैर्वणिग्जनैर्नीचजनानुरक्तैः ॥ ६३ ॥

कर्के रिपुस्थे हयसम्भवं च भवेन्मनुष्यस्य सदातुरस्य ।
समं द्विजेन्द्रैश्च नराधिपैश्च महाजनेनैव परानुरोधात् ॥ ६४ ॥

सिंहे रिपुस्थे प्रभवेच्च वैरं पुत्रैः समं बन्धुजनेन नित्यम् ।
धनोत्थमार्तस्य विनिर्जित[स्य] यद्वा मनुष्यस्य वराङ्गनाभिः ॥ ६५ ॥

कन्यास्थिते शत्रुगृहे स्ववैरं समं सुताभिः प्रभवेन्नराणाम् ।
दुश्चारिणीभिश्च सुनिर्णयाभिर्वेश्याभिरेवाश्रयवर्जिताभिः ॥ ६६ ॥

तुलाधरे शत्रुगृहे नरस्य निधिस्थितस्य प्रभवेच्च वैरम् ।
कार्यं सुधर्मस्य नरस्य साधोः स्वबन्धुवर्गाच्च निजालयस्य ॥ ६७ ॥

कौर्पे रिपुस्थे च भवेच्च वैरी सार्धं द्विजिह्वैश्च सरीसृपैश्च ।
व्यालैर्मृगैश्चौरगणैर्नराणां सर्वैस्तथान्यैश्च बिलाश्रयैश्च ॥ ६८ ॥

चापे रिपुस्थे च भवेद्धि वैरं शरैः समेतं च शरावरैश्च ।
सदा मनुष्यस्य हयैश्च हस्तिभिः पुनस्तथान्यैः परवंचनाच्च ॥ ६९ ॥

मृगे रिपुस्थे प्रभवेच्च वैरं सदा नराणां धनसम्भवं च ।
मित्रैः समं साधुमहाजनेन प्रभूतकालं गृहसम्भवं च ॥ ७० ॥

---

ABCDIS

62c °मार्गेगतमं (थं B)ग° ABCI 62d संगाभि° ABC 64a °संभवं च om. C ग्रहसंभवं DS 65b पुत्री° ABCDI 65c धनीक्ष° S 65d यदा ABC 66a कन्य° DS °स्थितः cod. 66b समं सुतभिः om. D रमं ABCIS 66c °निर्णनाभि° cod. 67d °लयस्थः ABDIS 68a कौर्प्ये D, क्रौर्ये S, कार्ये BC च om. BI वैरं DS 68c °गैणै B, °गृणै A 68d सर्वैश्च था° CI, सर्वै स्वधा° B विलासयैश्च ABCDI, विलोशयैश्च S 69b शचैः S, वैरं D स(श S)रावकैश्च cod. 69d °वंचनाश्च D, °वंचनैश्च S 70d ग्रह° D

कुम्भे रिपुस्थे च तथार्थहेतोर्नराधिपेनैव जलाश्रयैश्च ।
वापीतडागादिभिरेव नित्यं क्षेत्रादितोऽन्यैः पुरुषैः कुचैलैः ॥ ७१ ॥

मीने रिपुस्थे च भवेन्नराणां वैरं च नित्यं सुतवस्त्रजातम् ।
स्त्रीहेतुकं स्वीयभवापराणामपि प्रियाणामितरेतरं च ॥ ७२ ॥

मेषेऽस्तसंस्थे च भवेत्कलत्रं क्रूरं नराणां चपलस्वभावम् ।
पापानुरक्तं कठिनं नृशंसं वित्तप्रियं साध्यपरं सदैव ॥ ७३ ॥

वृषेऽस्तसंस्थे च सुरूपदन्तं भवेत्कलत्रं प्रणतं प्रशान्तम् ।
पतिव्रताचारगुणेन युक्तं लज्जाधिकं ब्राह्मणदेवभक्तम् ॥ ७४ ॥

तृतीयराशौ तु भवेत्कलत्रे कलत्रमुक्तं सुधनं सुवृत्तम् ।
सुखान्वितं सर्वगुणोपपन्नं विनीतवेशं †गुणवर्जितं च ॥ ७५ ॥

कर्केऽस्तसंस्थे च मनोहराणि सौभाग्ययुक्तानि गुणान्वितानि ।
भवन्ति सौम्यानि कलत्रकाणि कलङ्कहीनानि सुसंयतानि ॥ ७६ ॥

सिंहेऽस्तसंस्थे च भवेत्कलत्रं तीव्रस्वभावं चपलं सुदुष्टम् ।
विहीनवेषं परसङ्गरक्तं बल्कासनं स्वल्पसुतं कृशं च ॥ ७७ ॥

कन्येऽस्तसंस्थे च भवन्ति दाराः सुरूपदेहास्तनयैर्विहीनाः ।
सौभाग्यभोगार्थनयेन युक्ताः प्रियंवदाः सत्यधनाः प्रगल्भाः ॥ ७८

तुलेऽस्तसंस्थे गुणगर्विताङ्गा भवन्ति नार्यो विविधप्रकाराः ।
पण्यप्रिया धर्मपराः सुदान्ताः प्रभूतपुत्राः प्रथिता विनीताः ॥ ७९ ।

**ABCDIS**

71d ऽन्यैः om. B  72c °भया° DS  B has in the margin : वृद्धियवने रिपुचिंता before 73 D has : अथ मेषादिकसप्तमस्थानफलं  73d सव्य° S 74a सुरूपदंतं om. S  75a तु om. BI, च DS, प्र° C  कलत्रे om. CD 75b °युक्तं cod.  75c सुपा° DI, सुता° C, रूपा° S  75d °वेषं IS  76d °युतानि ABCI  78c °योगार्थ° AD  79a °गर्विताभ्यो DS  79c धर्मरताः DS  79d प्रियभा D

कीटेऽस्तसंस्थे बकजासमेता भवन्ति भार्याः कृपणा नराणाम् ।
सुकुत्सिताङ्गाः प्रणयेन हीना दौर्भाग्यदोषैर्विविधैः समेताः ॥ ८० ॥

चापेऽस्तसंस्थे च भवेत्कलत्रं सदा नराणां पुरुषाकृतिं च ।
सुनिष्ठुरं भक्तिनयेन हीनं प्रशान्तसौख्यं मतिवर्जितं च ॥ ८१ ॥

मृगेऽस्तसंस्थे च भवेत्कलत्रं नृणां सुदुष्टं विगतस्वभावम् ।
विस्रस्तलज्जं परलोकरक्तं युद्धप्रियं दम्भसमन्वितं च ॥ ८२ ॥

घटेऽस्तसंस्थे च भवेत्कलत्रं स्थिरस्वभावं पतिकर्मदक्षम् ।
देवद्विजानां सततं प्रहृष्टं धर्मध्वजं शंसकृपासमेतम् ॥ ८३ ॥

मीनेऽस्तसंस्थे च विकारयुक्तं भवेत्कलत्रं कुमतिं कुपुत्रम् ।
स्वधर्मशीलं प्रणयेन हीनं सदा नराणां कलहप्रियं च ॥ ८४ ॥

मेषेऽष्टमस्थे निधनं नराणां भवेद्विदेशे तु रुजान्वितानाम् ।
कथानुस्मृत्यर्थविसर्जितानां महाधनानामतिदुःखितानाम् ॥ ८५ ॥

वृषेऽष्टमस्थे च भवेन्नराणां मृत्युर्गृहश्लेष्मकृताद्विकारात ।
महासनाद्वाथ चतुष्पदाद्वा रात्रौ तथा दुष्टजनार्दितानाम् ॥ ८६ ॥

तृतीयराशौ च भवेन्नराणां मृत्युस्थिते मृत्युरनिष्टसङ्गात् ।
प्लीहोद्भवो वा रससम्भवो वा गुदप्रकोपादथवा प्रमादात् ॥ ८७ ॥

कर्केऽष्टमस्थे च जलोपसर्गात् कीटात्तथा चैव विभीषणाद्वा ।
भवेद्विनाशः परहस्ततो वा विदेशसंस्थस्य नरस्य चैव ॥ ८८ ॥

ABCDIS

80a व्यकजा° ABI, व्यरुजा° C   80b नराणां om. D   80c सुकुत्सितान्यः ABCI   81c भक्तिरसेन S   83d शं-कया° D, शंजशया° S, शशया° ABCI   at 84 B has in the margin: स्त्रीचिंता   before 85 D has: अथ मेषादिक अष्टमस्थानफलं   85b भुजान्वितानां S   85c कथाण° BDS, कथा° ACI °स्मृत्वा° BIS, °स्मृश° D, °सरत्वा° A   विसूर्जितानां cod.   85d °मवि° DS   °दूषितानां C   86c °सनाथाद्व DS   86d दृष्ट° S, दुष्ट° D   °जनार्दनानां IS, °जनार्दनानं ABD   87c वा² om. BCDI   87d प्रमोहात् DS, दसश्चन् C   88d °संस्थश्च D

सिंहेऽष्टमस्थे च सरीसृपाच्च भवेद्विनाशो मनुजस्य सम्यक् ।
व्यालोद्भवो वापि वनाश्रितस्य चौरोद्भवो वाथ चतुष्पदोत्थः ॥ ८९ ॥

कन्या यदा चाष्टमगा विलग्नात्तदा स्ववित्तान्मनुजस्य विन्द्यात् ।
स्त्रीणां हि हिंस्राद्विषमाशनस्थात् स्त्रीणां कृतो वा स्वगृहाश्रितस्य ॥९०॥

तुलाधरे चाष्टमगे च मृत्युर्भवेन्नराणां द्विपदोत्थ एव ।
निशागमे संस्थकृतोपवासान्निष्ठीविकोत्थोऽप्यथवा प्रतापात् ॥ ९१ ॥

स्थानेऽष्टमस्थेऽष्टमराशिसङ्गान्नृणां विनाशो वदनोद्भवेन ।
रोगेण वा कीटसमुद्भवैश्च स्वस्थानसंस्थस्य विषोद्भवो वा ॥ ९२ ॥

चापेऽष्टमस्थे प्रभवेन्नराणां मृत्युः स्वसंख्ये शरताडितानाम् ।
गुह्योद्भवेनापि गुदोद्भवेन चतुष्पदोत्थस्य विषः † स्थलस्य ॥ ९३ ॥

॥ ९४ ॥

घटेऽष्टमस्थेऽस्य भवेद्विनाशो वैश्वानरात् सद्मगतस्य जन्तोः ।
नानाव्रणैर्वा दवजैर्विकारैः श्रमात्तथा वा परसंश्रयाद्वा ॥ ९५ ॥

मीनेऽष्टमस्थे प्रभवेच्च मृत्युर्नृणामतीसारकृताच्च कष्टात् ।
पित्तज्वराद्वा सलिलाश्रयाद्वा रक्तप्रकोपादथवा च शस्त्रात् ॥ ९६ ॥

धर्मस्थितेऽत्रैव हि मेषराशौ चतुष्पदोत्थं प्रकरोति धर्मम् ।
तेषां प्रदानेन च पोषणेन दयाविवेकेन सुपालनेन ॥ ९७ ॥

---

ABCDIS

89b °नाशस्तनुजस्य ABCI  89c °श्रितस्याच् cod.  90c हि om. S, ह AB, च C  91c निषागमो ABC, निषामगो I  स्वस्थ° S  91d °न्विष्टिंयिकोत्थो cod.  92a °संगे DS  93b स्वसंस्थे I  शरदाडितानां D  93c गुदोद्भवेन om. D, गदेन वापि S  93d विशं ACI, विसं BDS  94 om. cod.  95a ऽस्य om. I  95b वैश्वानरा ABCI  सद्य° D, सम° ABCI  95c °दूव्रणै° DS  96b °कृताश्च ABCI, °कृतः सु° DS  96c पित्तहरा° DS  B has in the margin: अष्टम  before 97 D has: मेषादिधर्मस्थानफलं

वृषे च धर्मप्रगते मनुष्यो धर्मं करोत्येव † धनप्रसूतम् ।
विचित्रदानैर्बहुगोप्रधानैर्विभूषणाच्छादनभोजनैश्च ॥ ९८ ॥

तृतीयराशौ प्रकरोति धर्मे धर्माकृतं सस्यकृतं सदैव ।
अभ्यागतोत्थं द्विजभोजनाद्वा दीनानुकम्पाश्रयमानसेन ॥ ९९ ॥

व्रतोपवासैर्विषयैर्विचित्रैर्धर्मं नरः संकुरुते सदैव ।
धर्माश्रिते चैव चतुर्थराशौ तीर्थाश्रयाद्वा वनसेवया च ॥ १०० ॥

तत्र स्थिते चाथ हि सिंहराशौ धर्मं परेषां प्रकरोति मर्त्यः ।
स्वधर्महीनं विक्रियाभिरेव सुतीर्थरूपं विनयेन हीनम् ॥ १०१ ॥

धर्माश्रितः स्याद्यदि षष्ठराशिः स्त्रीधर्मसेवं कुरुते मनुष्यम् ।
विहीनभक्ति बहुजन्मना च पाषण्डमाश्रित्य तथान्यपक्षम् ॥ १०२ ॥

तुलाधरे धर्मगते मनुष्यो धर्मं करोत्येव सदा प्रसिद्धम् ।
देवद्विजानां परितोषणेन जनानुरागेण तथाद्भुतानाम् ॥ १०३ ॥

धर्माश्रिते चाष्टमगे च राशौ पाषण्डधर्मं कुरुते मनुष्यः ।
पीडाकरं चैव तथा जनानां भक्त्या विहीनं परपोषणेन ॥ १०४ ॥

चापे तथा धर्मगते मनुष्यः करोति धर्मं द्विजतर्पणोत्थम् ।
सदन्वितं शास्त्रविनिर्मितं च प्रभूततोषं प्रथितं नृलोके ॥ १०५ ॥

ABCDIS

98b धनं cod. for धर्मं 98c °प्रदानै° CDI 99b धर्मोद्यमं C 99c अभाग° ABI द्विजनाद्वा CI 100a °र्विसमै° ABIS 100b °र्धनं ABDIS 100d धन° DS 101a अधि° A, आस° B, आ° I स्थिता cod. चार्थ ABCI हि om. I, हा B, ह AC 101b मर्त्यं cod. 101c °हीना cod. 102b °सेवा ABDIS 102c °भक्तिर्बहु° ABCDS °जन्मनाथ S 102d °न्यरक्तं I 103b प्रसिद्धा ABC 103c °तोषणेन—104b कुरु after 106b in A 104a च om. AB 104b मनुष्यं ABCDI 104d °मोषणेन A 105c शत्सान्वित AC, सुसात्विक I, स्वत्सान्वि DS °निर्मितेन I 105d °तोयं cod. च लोके I

धर्माश्रिते वै मकरे मनुष्यश्चापोत्थधर्मं कुरुते प्रतापम् ।
पश्चाद्विरत्येव विडम्बनाभिः कौल्यं समाश्रित्य सदा च पक्षम् ॥१०६॥

कुम्भे च धर्मप्रगते च धर्मं पुंसां विधत्ते सुरसंघजातम् ।
वृक्षाश्रयोत्थं च तथा † सिरं च आरामवापीप्रजयं सदैव ॥१०७॥

धर्माश्रिते चैव हि मीनराशौ करोति धर्मं विविधं नृलोके ।
सत्त्रप्रपारामतडागजातं तीर्थार्जिनेनाथ मखैर्विचित्रैः ॥ १०८ ॥

कर्माश्रिते मुख्यतमे च राशौ करोति कर्म प्रवरं सुदुष्टम् ।
पैशुन्यरूपं विनयातिरक्तं सुनिन्दितं साधुजनस्य लोके ॥ १०९ ॥

वृषेऽम्बरस्थे प्रकरोति कर्म व्ययात्मकं साधुजनानुरक्तम् ।
द्विजेन्द्रदेवातिथिभिर्विभक्तमाज्ञात्मकं प्रीतिकरं सतां च ॥ ११० ॥

युग्मेऽम्बरस्थे प्रकरोति मर्त्यः कर्म प्रधानं गुरुभिः प्रदिष्टम् ।
कीर्त्यान्वितं प्रीतिकरं जनानां प्रभासमेतं कृषिजं सदैव ॥ १११ ॥

कर्केऽम्बरस्थे प्रकरोति मर्त्यः कर्म प्रपारामतडागजातम् ।
विचित्रवापीतटघट्टजं च कूपाभिनिष्पन्नमकल्यकं च ॥ ११२ ॥

सिंहेऽम्बरस्थे कुरुते मनुष्यो रौद्रं सपापं विकृतं च कर्म ।
सपौरुषं प्राणजमेव नित्यं वधात्मकं निन्दितमेव पुंसाम् ॥ ११३ ॥

नभस्तलस्थे त्वथ षष्ठराशौ करोति कर्म ज्ञपितो मनुष्यः ।
स्त्रीराज्यभाजो जनताविरुद्धं कामात्मकं निन्द्यतमं नृलोके ॥ ११४ ॥

---

ABCDIS

106a वै om. D 106c °रम्येव D 106d स्वल्पं I 107c °श्रमो° D शिरश्च D, सिरक्तं I 107d °प्रकरो I 108b च लोके D before 109 D has: अथ मेषादिकर्मस्थानफलं 110b °नुपापं cod. 110c °र्विभज्जका° ABC, °र्विभिज्ञका° S, °र्विभिज्ञमा° D, °र्विधिज्ञं का° I 110d (का)लांतरं I 111a मर्त्यं cod. 111c द्विजानां DS 112a मर्त्यं ABCDI 112c °घदजं B, °घदृजं C, °वृंदजं I 112d कपाभिनित्यंत° I, कूपारिनित्यंत° ABCDS 113a मनुष्यं I 113b कुकर्मं I 113c सु° D प्राणचमेव ABCD, प्राणवधेन I 113d वधा°—°मेव om. B विद्यत्मकं I 114b ज्ञभितो cod. 114c-115a om. D 114c स्त्रिराज्य° I, स्त्रीराज° ABCS

तुलाधरे व्योमगते मनुष्यो वाणिज्यकर्म प्रचुरं करोति ।
धर्मात्मकं चापि नयेन युक्तं सतामभीष्टं परसंमतं च ॥ ११५ ॥

कीटेऽम्बरस्थे प्रकरोति कर्म पुंसां सुदुष्टं जनसंमतं च ।
व्यथाकरं देवगुरुद्विजानां सुनिर्दयं नीतिविवर्जितं च ॥ ११६ ॥

चापेऽम्बरस्थे च करोति कर्म सेवात्मकं चौर्ययुतं मनुष्यः ।
परोपकारात्मकमोजसाढ्यं नृपात्मकं भूरियशःसमेतम् ॥ ११७ ॥

मृगेऽम्बरस्थे च परोपतापं कर्म प्रधानं कुरुते मनुष्यः ।
सुनिर्दयं बन्धुवधैः समेतं धर्मेण हीनं खलसंमतं च ॥ ११८ ॥

घटेऽम्बरस्थे च करोति कर्म प्रायेण मर्त्यः परवंचनोत्थम् ।
पाषण्डधर्मान्वितमिष्टलोभाद्विश्वासहीनं जनताविरुद्धम् ॥ ११९ ॥

कुलोचितं धर्मगुरुप्रदिष्टं कीर्त्यात्मकं सुस्थिरमादरेण ।
नानाद्विजाराधनसंस्थितं च मीनेऽम्बरस्थे प्रकरोति कर्म ॥ १२० ॥

लाभाश्रिते मुख्यतमे च राशौ चतुष्पदोत्थं प्रकरोति लाभम् ।
तथा नराणां नृपसेवया च देशान्तराधनतः प्रभूतम् ॥ १२१ ॥

आयस्थिते वै वृषभे प्रलाभो भवेन्मनुष्यस्य विशिष्टजातः ।
स्त्रीणां सकाशात्त्वथ सज्जनानां कुशीदिनां धर्मकृतस्तथैव ॥ १२२ ॥

---

ABCDIS

116b-117a om. D  116b सदुष्टं AB  जननिंदितं I, जननिवेदतं S  117a च om. A  117b मनुष्यं ABCDI  118a °तापी cod.  118b प्रधानी A  मनुष्यं ABCDI  order in DS: 119a, 120a-d, 119b-d  119a कर्म om. DS, वर्ण ABCI  119b मर्त्यं ABCDI  119c °न्वित°—120b कीर्त्या° om. I  119d °न्विश्वास° cod.  before 120a ABCD add मर्त्यं, IS मर्त्यः  order in S: 120a-b सुस्थिर°; 60, 5c-23b प्रभूता; 55, 120b °दरेण—60, 23b नारी  after 120 B adds इति श्रीवृद्धयवने कर्मस्थानचिंता; DS: इति कर्मस्थानचिंता  before 121 D adds: अथ मेषादिकलाभस्थानफलं  121d °राधिततः ABCI  122a वृषभः CD, वृष ABI  प्रलापो C  122d कुशीडमो ABI, कुशीलमो C, कुशीडु(दु S)यो DS  °क्षत° DS, °क्षित° ABCI

तृतीयराशिः कुरुतेऽतिलाभं लाभाश्रितः स्त्रीदयितं सदैव ।
वस्त्रार्थपुष्पासनपानजातं सदा नराणां विविधं प्रसिद्धम् ॥ १२३ ॥

लाभो भवेल्लाभगते च राशौ सदा चतुर्थे वरभाजनानाम् ।
सेवाकृषीभ्यां जनितः प्रभूतः शास्त्रेण वा साधुजनस्य पार्श्वात् ॥ १२४ ॥

लाभाश्रिते पंचमभे च लाभो भवेन्मनुष्यस्य निर्गर्हणाभिः ।
नानाजनानां वधबन्धनैश्च व्यायामदेशान्तरसंश्रयाच्च ॥ १२५ ॥

कन्यात्मके लाभगते मनुष्यः प्राप्नोति लाभं विविधैरुपायैः ।
शास्त्रागमाभ्यां विनयेन पुंसां नीत्या विवेकेन तथाद्भुतेन ॥ १२६ ॥

तुलाधरे लाभगते मनुष्यः प्राप्नोति लाभं वणिजैर्विचित्रैः ।
सुसाधुसेवाविनयेन नित्यं सुसंस्तुतं मुख्यतमं प्रभूतम् ॥ १२७ ॥

लाभाश्रिते चाष्टमगे च राशौ प्राप्नोति लाभं मनुजोऽतिनिन्द्यम् ।
छलेन पापेन सुमोषणेन परस्य पैशुन्यकृतैर्विकारैः ॥ १२८ ॥

लाभाश्रिते चैव धनुर्धरे च नृपार्थलाभं भजते मनुष्यः ।
स्त्रीसेवया वा निजपौरुषेण †पुष्पाम्बराराधनजाश्वजोत्थम् ॥ १२९ ॥

लाभाश्रिते वै मकरेऽर्थलाभो भवेन्नराणां जलयानयोगात् ।
विदेशवासान्नृपसेवनाद्वा व्ययात्मको भूरितरः सदैव ॥ १३० ॥

आयस्थिते कुम्भधरे च लाभो भवेन्मनुष्यस्य कुकर्मजातः ।
न्यायेन धर्मेण पराक्रमेण विद्याप्रभावात् सुसमागमेन ॥ १३१ ॥

ABCDIS

124a लाभं cod. 124d पश्चात् ABCI 125c °जनानां om. D 126b-127a om. D 126b °हपार्यः ABCI 126d निल्या CI 128b तिनित्यं ACI, तिनिष्यं B 129a वै तु S °धरं ABCDI 129b नृपोर्विलाभो ABCI °लाभे DS मनुष्यं C 129c सेम्रेवया DS, सेवया ABI, सिंचया C वा om. ABCI 129d मुख्यंवरा° ABCI °चाश्व° ABCDI 131a च om. S 131b °जातं cod.

लाभाश्रिते चान्त्यमगे च राशौ प्राप्नोति लाभं विविधं मनुष्यः ।
मित्रोद्भवं पार्थिवमानजातं विचित्रवाक्यं प्रणयेन नित्यम् ॥ १३२ ॥

मेषे व्ययस्थे प्रभवेन्नराणां व्ययः सदाच्छादनभोजनैश्च ।
चतुष्पदानेकविवर्धनेन लाभेन नानाविधपौरुषेण ॥ १३३ ॥

वृषे व्ययस्थे व्यय एव पुंसां भवेद्विचित्राम्बरयोषितानाम् ।
लाभेन रण्येन च कृत्रिमेण सुसाधुवादैर्विविधैः सदैव ॥ १३४ ॥

तृतीयराशौ व्ययगे नराणां व्ययो भवेत् स्त्रीव्यसनात्मकैश्च ।
भूतोद्भवो वा सततं प्रभूतः कुशीलजः पापजनाङ्गनैश्च ॥ १३५ ॥

कर्के व्ययस्थे द्विजदेवतानां व्ययो भवेद्यज्ञसमुद्भवैश्च ।
धर्मक्रियाभिर्विविधाभिरेव सुशंसितः साधुजनेन लोके ॥ १३६ ॥

सिंहे व्ययस्थे तु भवेन्नराणामसद्व्ययो भूरितरः सदैव ।
रुपान्नजातश्च कुकर्मणा च निन्द्यः सतां पार्थिवचौरतो वा ॥ १३७ ॥

कन्यात्मके चान्त्यगते व्ययश्च भवेन्मनुष्यस्य हि चाङ्गनोत्थः ।
विवाहमाङ्गल्यमखैर्विचित्रैः सूत्रैः प्रभाभिर्बहुसाधुसङ्गात् ॥ १३८ ॥

तुले व्ययस्थे सुरविप्रबन्धुस्मृतिश्रुतीभ्यश्च कृतो व्ययश्च ।
भवेन्नराणां नियमैर्यमैश्च सुतीर्थसेवाजनितः प्रसिद्धः ॥ १३९ ॥

अलौ व्ययस्थे च भवेद्व्ययस्तु पुंसां प्रसादेन विडम्बिताभिः ।
कुमित्रसेवाजनितः सुनिन्द्यः कुबुद्धितश्चौरकृताधिकारात् ॥ १४० ॥

ABCDIS

132a °मन्ये A, °गमे I  132b मनुष्यं ABCI  after 132 DS add: इति लाभस्थानचिंता  before 133 D adds: अथ मेषादिकव्ययस्थानफलं  133a प्र° om. ABC  133c चतुष्पदानेन I  134a देव° cod.  134c रंणेन DS  134d सुधातु ABCDI °र्विविधैरतीव DS  135c वा om. C  135d कुशीलगः DS °जनांगजैश्च B, °जनांगजश्च DS  136b व्ययोद्भवे जज्ञ° ABCI  136d संसंघितं ABCDI  137c °जातं च cod.  138a कन्यात्मजे C  140b नितंबिताभिः A  140d कुबुद्धित° om. S °कृताद्विकारात् DS

चापे व्ययस्थे परवंचनाभिर्व्ययो भवेत् पापजनप्रसङ्गात् ।
सेवाकृतो वीतधिया च पुंसां कृषिप्रसङ्गात् परवंचनाद्वा ॥ १४१ ॥

मृगे व्ययस्थे च भवेन्नराणां व्ययस्तु पानाशनसस्यजातः ।
स्ववर्गपूजानिरतस्तथाल्पः कृषीविहीनश्च विगर्हितश्च ॥ १४२ ॥

घटे व्ययस्थे सुरसिद्धविप्रतपस्विनां बन्दिभवो व्ययश्च ।
पुंसा भवेत् साधुजनानुरोधाच्छास्त्रप्रदिष्टः प्रथितश्च भूरिः ॥ १४३ ॥

मीने व्ययस्थे जलपानतो वा कुसङ्गमाद्वा प्रभवेद्व्ययश्च ।
पुंसां कुपुत्राशनपानजातस्तथा विवादेन निरर्गलेन ॥ १४४ ॥

ये स्थानचिन्तासु पुरा प्रदिष्टा योगा मया तान् परिहृत्य चैव ।
योगा विचिन्त्याः स्वधिया ततस्तु कार्या नराणां हि शुभाशुभैस्तैः ॥ १४५

## इति श्रीवृद्धयवने द्वादशभावस्थानचिन्ताध्यायः ॥

ABCDIS

141c वित्त° DS, वीति° C 141d कृषेः DS 142b पानासव° DS 142d °विहिनस्य ABCI 143b °तपस्विनं ABCDS °भिवो AB, °भिस्तद् C 143d कथितश्च S 145a-b प्रयोगा दिष्टा S 145b परिह्यय ABCI, corr. to परिहीय C, परिपूज्य D चैतत् ACDIS, स्रेतत् B 145d वाया cod. col. श्री° om. DS द्वादशस्थानाचिंताध्यायः C, स्थानजाताध्यायः DS

# षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

दिशः खरांशोर्हिमदीधितेर्गो बाणास्तथा सौम्यकुजार्कजानाम् ।
स्वराः सुरेज्यस्य सितस्य नागाः प्रमाणतो दीधितयः स्वतुङ्गे ॥ १ ॥

नीचाच्च्युतः सन्मुखरश्मिरिक्तः पराङ्मुखः स्वोच्चगृहाच्च खेटः ।
नीचाश्रितो रश्मिविवर्जितश्च मध्येऽनुपातात् किरणास्तु ये स्युः ॥ २ ॥

ते ताडिताः स्वैः किरणैर्विभक्ताः षड्भिस्तु शेषाः परिचिन्तनीयाः ।
स्वोच्चे तु वसुप्रभवाः स्वभागे षड्भिः स्वहर्म्ये मुनिभिस्तथैव ॥ ३ ॥

सुहृद्गृहे पंचभिरर्कभागे वेदैर्गुणैः सौम्यनिरीक्षिते च ।
त्रिंशल्लवे सौम्यसमुद्भवे च द्विघ्नाः समाः स्युर्यदि चन्द्रहोरा ॥ ४ ॥

जाते बहुत्वे परिहृत्य शेषानेकेन हन्याद्बहुसंख्यकेन ।
अस्तङ्गते शून्यगुणास्तु नीचे दलीकृताः शत्रुगृहे प्रयाते ॥ ५ ॥

स्ववासरे रश्मिजमादधाति फलं ग्रहः सन्मुखरश्मियोज्यः ।
सर्वं तु पापं दलितं विलोमं पराङ्मुखस्थः प्रददाति पुंसाम् ॥ ६ ॥

एकेन मूकः किरणेन मर्त्यः प्रतापहीनः परतर्ककश्च ।
पराक्रमोत्साहधनैर्विहीनः पराजितः पापरतः कृतघ्नः ॥ ७ ॥

द्वाभ्यां दरिद्रः पिशुनस्वभावः सदातिकामी परदाररक्तः ।
द्वेष्टा गुरूणां गुणधर्महीनो विवर्जितो बन्धुजनैः समग्रैः ॥ ८ ॥

---

ABCDIS

1a हिमांशो° S °गोधिते° BI, °वांधिते° D 1b °कुजानी AB after 1 BC (in marg.) I have:

| र | च | मं | बु | बृ | शु | श | यो |
|---|---|---|---|---|---|---|---|
| १० | ९ | ५ | ५ | ७ | ८ | ५ | ४९ |

2a °रक्त: BDS 2d ते ABCI 3c तु om. B तुंगादिवसुखभागे C वस्व° I, वस्त्र° ABDS °प्रभव° ABDIS 4a °रकीयभागे D, द्वादशांशैः C 6a स्वरामरे ABDIS 7a किं दधाति B, विदधाति AI 7b °तर्कुकश्च ABCDI 8c गुणानां ABI

त्रिभिर्हताशस्तनुकोशमित्रो भयाकुलः पार्थिवपीडिताङ्गः ।
वातान्वितः स्त्रीसदृशस्वभावः सुकातरः पानरतस्तथार्तः ॥ ९ ॥

चतुर्भिरिष्टो गुरुबान्धवानां धर्मप्रधानः सततं सुशीलः ।
जितेन्द्रियः पुण्यकथानुरक्तः सुसंयतः प्रीतिकरो द्विजानाम् ॥ १० ॥

नरोऽतुलः पंचभिरेव नित्यं विज्ञानशीलः प्रमदाप्रियश्च ।
वस्त्रान्नपानाशनवस्तुभागी भवेन्नृपाणां प्रथितः प्रसिद्धः ॥ ११ ॥

षड्भिस्तु सत्यो दयितः प्रजानां प्रधानसेवी धनधान्यभागी ।
प्रभूतमित्रः सततं नयज्ञो जितेन्द्रियः सर्वकलासु दक्षः ॥ १२ ॥

स्यात् सप्तभिः पापरतो नृशंसः परापवादैकमनाः सुकामी ।
परान्नभोजी परदाररक्तः प्रभाविहीनः सततं कुशीलः ॥ १३ ॥

नरोऽष्टभिः पापरतः कृतघ्नो विश्वासघाती कृपणस्वभावः ।
नयेन हीनो निजबन्धुयुक्तो वृथाश्रमः स्याद्बहुशत्रुगम्यः ॥ १४ ॥

कुपुण्यभागी कुकलत्रसेवी बुद्ध्या विहीनः प्रणतः खलानाम् ।
भवेन्मनुष्यो नवभिः सुरोगी सुनिष्ठुरो धीररतः प्रमादी ॥ १५ ॥

सुसंमतः सर्वकलासु दक्षः कृपाधिको धर्मपरः प्रधानः ।
देवद्विजानां विनयेन युक्तो नित्यं मनुष्यो दशभिः समेतः ॥ १६ ॥

नरस्तथैकादशभिः प्रधानो धनी विवेकी स्वकलत्ररक्तः ।
भवेद्दयालुर्नृपतेरभीष्टः सन्मानयुक्तः सततं सुखी च ॥ १७ ॥

पुण्याधिको द्वादशभिर्मयूखैः क्षितीश्वराणां दयितः प्रगल्भः ।
भवेत् सुरूपः सुतसौख्ययुक्तो गीतप्रियः शास्त्रकथानुरक्तः ॥ १८ ॥

---

ABCDIS

9b °पीनतांगः ACI, °पीतांगः B   10d सुसंयुतः ABCDI   12a शक्तिस्तु BI
13b सकामः S   14a पापपरः S   14c °धुयुक्तो—15b ख° om. B   15c
सुरागी ABCI   15d °रतिः DS   16c युक्तो om. BI   18c सरूपः ABCI

व्रणज्वराद्यैः सहितोऽतिघोरै रोगैश्च शत्रुप्रभवैश्च दुःखैः ।
त्रयोदशाख्यैः किरणैः सदार्तो भवेन्मनुष्यो बहुवंचकश्च ॥ १९ ॥

विश्वासघाती कपटी नृशंसश्चतुर्दशाख्यैर्मनुजो मयूखैः ।
भवेत् कृतघ्नः परलोकगम्यो मायाधिकः साधुजनैर्विमुक्तः ॥ २० ॥

नरस्तथा पंचदशप्रमाणैर्भवेन्मनुष्यः परदाररक्तः ।
सदा कुशीलः पिशुनस्वभावः क्रियाविहीनः सुनृशंसकामी ॥ २१ ॥

नयान्वितः षोडशभिर्मयूखैर्नरो भवेद् भूषितमानभागी ।
प्रशान्तचित्तः प्रभुतासमेतः प्रियंवदो दाररतः सदैव ॥ २२ ॥

भोगाधिकः सप्तदशप्रमाणैः प्रियातिथिः पुण्यकथानुरक्तः ।
भवेत्तथा दीधितिभिर्जितात्मा शास्त्रानुरक्तः प्रणतारिपक्षः ॥ २३ ॥

अष्टादशाख्यैः किरणैर्विनीतो भवेन्मनुष्यः सुनदारभागी ।
सुसंमतः सर्वकलासु दक्षो जितेन्द्रियः प्रीतिकरो जनानाम् ॥ २४ ॥

एकोनविंशत्किरणैः सरोगी गुरुद्विजानां च विवादशीलः ।
वित्तैर्विहीनः प्रियसाहसश्च सुतीव्रकर्मा पिशुनस्वभावः ॥ २५ ॥

विंशन्मयूखैर्ज्वरपित्तदोषैर्भवेन्मनुष्यो दरपीडिताङ्गः ।
कृशः कृतघ्नः कुजनैः समेतः समत्सरः पुण्यविवर्जितश्च ॥ २६ ॥

स्यादेकविंशत्किरणैर्मनुष्यश्चलस्वभावः प्रियसाहसश्च ।
मित्रार्थदारैः सुजनैर्विहीनः प्रपंचशीलः परवंचकश्च ॥ २७ ॥

द्वाविंशतिर्यस्य नरस्य गावस्तस्य प्रजावित्तयशांसि लोके ।
भवन्ति वस्त्राणि पृथग्विधानि मित्राप्तिरिज्याध्ययनस्य लब्धिः ॥ २८ ॥

ABCDIS

19a विघोरै ABDIS  21b मयूखैः C  22a भया° C  22b °द् भूपति° C  22d दान° C °तरः ABI  24d प्रजानां IS  25b परिवाद° D  27b-d om. B  27b खल° C  सहसाहसश्च C  27c-d om. D  27c स्वजनै° C  28a द्वाविंशतीर्यस्य ABDI  °तिर्यस्य—गाव° om. C  28d मित्राप्तिमि (मी DS)ज्यो° cod.

त्रिविंशतिर्यस्य मरीचयः स्युर्भवन्ति तस्यार्थयशांसि लोके ।
विद्याप्रभुत्वं धनधान्यलाभो विवेकमोजः प्रियता च लोके ॥ २९ ॥

मरीचयो यस्य युगाश्विसंख्यास्तस्य प्रभुत्वं विविधान्नपानम् ।
भवेन्मनुष्यस्य सुहृत्समृद्धिः समागमो बन्धुजनेन नित्यम् ॥ ३० ॥

तत्त्वप्रमाणैः किरणैरतीव प्राप्नोति मर्त्यः परमं च दुःखम् ।
नृपोद्भवं गात्ररुजासमेतं प्रमोषणं चौरकृतं सदैव ॥ ३१ ॥

षड्बाहुसंख्यैः किरणैर्दरिद्रो भवेन्मनुष्यः सततं कुचैलः ।
प्रवासशीलः परनिर्जिताङ्गः सुदीनवृत्तिः प्रणयेन हीनः ॥ ३२ ॥

सप्ताश्विभी रश्मिभिरुग्रकर्मा भवेन्मनुष्यः सुतरां नृशंसः ।
पापात्मकः पापजनप्रसक्तः प्रियाविहीनः सततं विरूपः ॥ ३३ ॥

नागाश्विसंख्यैः किरणैरतीव सन्तुष्टचित्तः प्रभवेन्मनुष्यः ।
सुधर्मशीलः सुरसाधुरक्तः प्रियंवदः पापजनैर्विहीनः ॥ ३४ ॥

गोबाहुरश्मिः प्रणतारिपक्षो भवेन्मनुष्यः सततं मनस्वी ।
प्रियागमः सत्यदयासमेतः सुसंयतः शौचपरः सदैव ॥ ३५ ॥

त्रिंशन्मयूखः पुरुषो मनस्वी सुधर्मशीलः सुतदारभागी ।
महाविभोगी निजबन्धुमान्यः संजायते कीर्तियुतः सदैव ॥ ३६ ॥

रूपाग्निसंख्यैः किरणैः कुचैलः प्रभाविहीनः सुतरां दरिद्रः ।
कुबुद्धियुक्तः सततं नृशंसो रुजासमेतो व्यसनार्तदेहः ॥ ३७ ॥

---

ABCDIS

29a द्वाविंश॰ C, विद्वांश॰ BI, त्रिंश॰ S   29d विवेकलोक॰ ABI, विवेकतुर्य॰ C   30c सुहृत्॰ om. C, समृत्॰ BI   ॰समृद्धिं ABCDI   order in S: 32a, 33b-d, 32b सततं कुचैलः, 32c-d, 33a, 32b भवेन्मनुष्यः   32c परि॰ ABCDI   33a सप्तविंशतिभिरुग्र॰ C   33d क्रिया॰ DS   34c शीलः सुरसाधु॰ om. BI परसाधुभक्तः C   35d सुसंयुतः ABCIS, सुसंकृतः D   36a ॰मयूषैः C   36b ॰दारस्तानी D   36c महाविभोगी om. B   37b प्रतापहीनः D

व्यर्थश्रमो हीनमतिः कुदारः श्रिया विहीनः सुतदारहीनः ।
सुदुष्टवाक्यः परुषस्वभावो द्वात्रिंशभी रश्मिभिरेव जातः ॥ ३८ ॥

त्रिरामसंख्यैः किरणैः कुबुद्धिः पामादिरोगैर्विविधैः समेतः ।
भवेन्मनुष्यः परपीडिताङ्गो लज्जात्मकः कीर्तिविवर्जितश्च ॥ ३९ ॥

युगाग्निसंख्यैः किरणैः समृद्धो भवेन्मनुष्यः सुतमानयुक्तः ।
प्रभूतमित्रः प्रचुरप्रतापः प्रियंवदः कीर्तिसमन्वितश्च ॥ ४० ॥

भवेन्नरो बाणहुताशनाख्यैः सदा मयूखैः सुखपुत्रभागी ।
नयेन युक्तः प्रथितः स्ववर्गे स्थिरस्वभावः सततं महात्मा ॥ ४१ ॥

रसाग्निसंख्यैर्बहुवित्तयुक्तो भवेन्मनुष्यो गजवाजिभागी ।
प्रभूतकोशो निजदाररक्तः प्रियातिथिर्देवगुरुप्रसक्तः ॥ ४२ ॥

स्वराग्निसंख्यैः किरणैरनार्यो भवेन्नरो योगयुतः सदैव ।
प्रभूतशत्रुर्विजितः सुनीचैर्विरूपदेहः सततं दरिद्रः ॥ ४३ ॥

स्यादष्टरामैः किरणैः करालः क्षमाविहीनः सुखवित्तहीनः ।
गीतार्थसत्यः सुतरां दरिद्रो नरः पराधीनतनुः सुनीचः ॥ ४४ ॥

नवाग्निभी रश्मिभिरेव मर्त्यो भवेदसक्तः सुतवित्तहीनः ।
व्ययाधिकः पापरतो नृशंसः स्त्रीलोकहीनः परवित्तलुब्धः ॥ ४५ ॥

खमागराख्यैः किरणैः कृपालुर्नरो भवेत् सत्यदयासमेतः ।
देवानुरक्तो द्विजदेवभक्तः प्रशान्तरूपः प्रथितः पृथिव्याम् ॥ ४६ ॥

चन्द्राब्धिभी रश्मिभिरेव मर्त्यो जितारिपक्षो जयमानयुक्तः ।
भवेन्न नीचः सुधनो महात्मा नृपप्रियः शास्त्ररतः सदैव ॥ ४७ ॥

ABCDIS

38b सुतबंधुहीनः DS 38d द्वात्रिंशता IS 39a त्रिरात्रि° D, त्रिरश्मि° S
rder in S: 40a युगा–किरणैः, 41b-41d, 40a समृद्धो–41a 41b सुत°
BCI 41c स्वभावः C 41d महामुबुद्धिः C 42b °भाजी C 44d
ीच° AC सुनीतः C 45c °धिकः—46a कृपा° om. I 46c द्विजवाक्यमध DS
7a चंद्राब्धिभि AC, चंद्राग्निभी D, चंद्राब्धिभि I, चंद्रादिभि B

द्विसागराख्यैः किरणैर्मनस्वी भवेन्मनुष्यः पितृमातृभक्तः ।
कृपापरः सत्यपरः प्रगल्भः प्रवीणकर्मा रुचिरः प्रशान्तः ॥ ४८ ॥

निरस्तदो दुःखित एव दीन प्रेष्यः सदा सत्यधनैर्विहीनः ।
सम्पीडितो व्याधिभिरुग्ररूपैर्गुणाब्धिसंख्यैः किरणैर्मनुष्यः ॥ ४९ ॥

सम्पीडिताङ्गो नृपतस्करैश्च प्रभूतरोगः कलहप्रियश्च ।
युगाब्धिरश्मी रश्मिभिरेव जातो भवेन्मनुष्यः सुखमानहीनः ॥ ५० ॥

शराब्धिसंख्यैर्मनुजो मयूखैर्भवेद्भिज्ञो ऋजुकर्मसेवी ।
सुतुष्टचित्तः प्रणतो द्विजानां विख्यातपापः प्रभुताविहीनः ॥ ५१ ॥

रसार्णवाख्यैः प्रभुतासमेतो भवेन्मयूखैर्मनुजः सुधीरः ।
प्रियंवदः काव्यकलासु दक्षः क्षमासमेतो विजितारिपक्षः ॥ ५२ ॥

स्वराब्धिभी रश्मिभिर्भूमिपालो भवेन्मनुष्यो गजवाजिभागी ।
सुवित्तवान् धर्मपरः कृतज्ञः सदा मनस्वी गुरुवत्सलश्च ॥ ५३ ॥

अष्टाब्धिभिः स्यात् किरणैः प्रधानः स्यात् सार्वभौमः प्रथितः पृथिव्याम्
मानी गजाश्वाद्ययुतः सुवाग्मी भवेच्चिरायुः प्रमदाप्रियश्च ॥ ५४ ॥

॥ ५५ ॥

एवं फलं पक्ष्यति रश्मिजातं ग्रहः स्ववर्षे दिवसेऽथ मासे ।
सदा विपाके च तथाष्टवर्गे शुभाशुभं पूर्वनिदर्शनेन ॥ ५६ ॥

## इति श्रीवृद्धयवने रश्मिचिन्ताध्यायः ॥

ABCDIS

49a °मेत्र C दीनः om. I 49b प्रेक्ष्यः I 49c °रौद्र° DS, °रुद्र° ABCI 51b रुजु° BD, ऋज° I, ऋजु° A 51c सुपुष्ट° DS 51d वख्यात° AB, प्रख्यात° I 53a-c om. D 53b °भाजी C 53c सुचित्रवान् ABCI 54c माता DS गजाश्वौघ° ABIS सुवाग्मी DS 55 om. cod; C has नवाब्धिः, I :

नवादिवत स्यात् किरणै प्रधान गजाश्वनाथो प्रमदाविलासः ।
विख्यातकीर्ति नृपति भवेन् स कोटिश्व ग्रामाधिपते सुसाध्यं ॥

56a यच्छति cod. col. श्री° om. DS

# सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

यन्मित्रस्य गृहे फलं स्वभवने तुङ्गे त्रिकोणे तथा ।
तत्सर्वं विदधाति जन्मसमये षड्वर्गशुद्धो ग्रहः ॥ १ ॥

एकस्तत्र हि सार्वभौमकरो हस्त्यश्वकोशान्वितः ।
द्याद्यैः किन्नरदेवशक्रविषयो जायन्ति मर्त्या ग्रहैः ॥ २ ॥

मेषोदये सूर्ययुते चतुर्थे जीवे शनौ सप्तमराशिसंस्थे ।
नभस्तलस्थे रुधिरे प्रसूतो भवेन्मनुष्योऽखिलभूमिभर्ता ॥ ३ ॥

मृगोदये वक्रयुतेऽथ सूर्ये पातालगे देवगुरौ कलत्रे ।
कर्माश्रिते सूर्यसुते महीपः समुद्रसीमां प्रभुनक्ति पृथ्वीम् ॥ ४ ॥

कर्कोदये जीवयुतेऽर्कजे च चतुर्थसंस्थे रुधिरे कलत्रे ।
व्योमस्थिते तीक्ष्णकरे प्रसूतः स्यात् सार्वभौमो नृपतिर्गजाढ्यः ॥ ५ ॥

तुले विलग्ने रविजेन युक्ते भौमे चतुर्थे वनिताश्रितेऽर्के ।
खस्थे सुरेज्ये नृपराजराजो भवेन्मनुष्यो गजवाजिनाथः ॥ ६ ॥

चत्वार एते किल सार्वभौमं कुर्वन्ति योगा जनितं मनुष्यम् ॥ ७ ॥

एकेन हीना यदि मण्डलीकं द्याभ्यां चमूपं तमुदाहरन्ति ।
त्रिभिर्विहीना नगराधिनाथं जातं यदि स्यादपि नीचहर्म्ये ॥ ८ ॥

**ABCDGIS**

1a तन्मित्रस्य ABCI ऽथवा C 1b स्वभावे S तुंगे om. S 2b °कोशातं cod. 2c द्वाद्यैः D, द्वाधा B, धाधा A, स्रयाधा S, द्याभ्यां I 2c-d °शक्रसदृशं CD 2d जायंते AB, कुर्वंति CD भौमौ C, भूमौ D नरः CD 3a युते CD 4a च सूर्ये DG, ससौम्ये BI 4b देवगुरुः ABCDI 4c महीजे CDI 4d योगे ABCDI, योगी S 5a ऽर्कजे om. D 6c °राजयोगो G 1 °वजिराजः B 7a चत्वारि G 7b वै (om. S)यो जनितं ABCDIS 8a लीकं G 8b चमूपयु° A, चमूण्वमु° C, चमूप एकमु° D, च सामंतमु° G 8c °नाथः CI, राज्यं D 8d जातो S, याते D

अन्योन्यसंस्था यदि तुङ्गसंस्थास्त्र्यादिग्रहा भूमिपतिं सुजातम् ।
नरं प्रकुर्वन्ति तदा नरेन्द्रं गजाश्वयानं धनसौख्यभाजम् ॥ ९ ॥

निशाकरे कर्कटराशिसंस्थे केन्द्राश्रिते केन्द्रगता यदान्ये ।
भवन्ति खेटाः प्रभवेन्मनुष्यो नानागजाश्वैश्च रथार्थभागी ॥ १० ॥

मूर्त्याश्रितो देवगुरुः कलत्रे शुक्रो निशेशः स्वगृहस्थितश्च ।
तदा भवेद् भूमिपतिः प्रचण्डः प्रभूतकोशः परपक्षहन्ता ॥ ११ ॥

सौम्यः स्वतुङ्गे यदि केन्द्रसंस्थः पूर्णः शशाङ्को धनलाभगो वा ।
जीवेन दृष्टो यदि वा सितेन भूपं प्रसूते सुखिनं सदैव ॥ १२ ॥

लग्ने गुरुः सोमसुतश्चतुर्थे शुक्रो धनस्थो यदि वायसंस्थः ।
तदा प्रसूते क्षितिपं मनुष्यं वर्गोत्तमः स्याद्यदि लग्नसंस्थः ॥ १३ ॥

तुङ्गे कुजस्तीक्ष्णकरः स्वहर्म्ये सौरो मृगे कुम्भधरस्थितो वा ।
षड्वर्गशुद्धो यदि वा हि वक्रः करोति मर्त्यं गुरुभूमिपालम् ॥ १४ ॥

षड्वर्गशुद्धो यदि जन्मकाले केन्द्रेषु सौम्याः खलसङ्गहीनाः ।
तदा प्रसूते वसुधाधिनाथं नरं नरेन्द्रैः प्रणतं सदैव ॥ १५ ॥

वृषोदये मूर्तिगते शशाङ्के पूर्णे कुलीराश्रयसंस्थिते वा ।
सौम्यैः प्रदृष्टे खलदृष्टिहीने भवेन्महीपोऽर्णवमेखलायाः ॥ १६ ॥

त्रिकोणसंस्था यदि सर्वसौम्याः पापास्तथा वृद्धिगताः समस्ताः ।
† षड्वर्गशुद्धे समये च जन्म महीपतिश्चात्र भवेन्मनुष्यः ॥ १७ ॥

**ABCDGIS**

**9a** अन्योन्यस्था ABCDG, अन्योदयस्था IS  9d-10c om. S  **9d** °मानं **ACS,** °माना° BI, °नाना° G  10b केंद्राश्रितं om. A  10c °न्महीपो **G** **12a** कर्मसंस्थः **G**  13a °श्चतुर्थः ABCIS  13d °मस्थो यदि AG  14b सौरे **GS,** पौरे **D**  14c वा—15a षड्वर्ग° om. B  14c यदि जन्मनाथः G  **15d** प्रणतं ] सततं G  16a मृगोदये G  16c प्रहृष्टे B, प्रनष्टे G  खलु संग° G  **16d** °न्मनुष्यो cod. भुवि मेखलायः G  17d जनाधिप° G  सूत्र S

आयस्थिते शीतकरे समग्रे कुजे तृतीये रविजे च षष्ठे ।
कामाश्रिते देवगुरौ हि जन्म भवेन्नराणां वसुधाधिपानाम् ॥ १८ ॥

मूर्तौ गुरुः स्वर्क्षगतः ससौम्यः शुक्रेण दृष्टः शशिनाथवा स्यात् ।
न पापदृष्टो जनयेन्मनुष्यं महीपतिं सर्वसुखाधिवासम् ॥ १९ ॥

शुक्रे तनुस्थे निजहर्म्यसंस्थे षड्वर्गशुद्धे रविणा विहीने ।
भवेन्नरेन्द्रो गजदानसंघैः संसिक्तभूमिः परमप्रतापः ॥ २० ॥

शुक्रे झषस्थे निजभागसंस्थे केन्द्राश्रिते पापविवर्जिते च ।
सौम्येन दृष्टे नृपतिर्मनुष्यो भवेन्महाकोशगजाश्वभाजः ॥ २१ ॥

मूलत्रिकोणे यदि सर्वखेटाः सदा नृपः स्याद्बहुकीर्तिभाजः ।
यस्य प्रयाणोत्थरजोरुणाङ्गः प्रकाशते नैव सहस्ररश्मिः ॥ २२ ॥

वर्गोत्तमस्था यदि वासवेज्याः सर्वे ग्रहा भूमिपतिं मनुष्यम् ।
कुर्वन्ति नागोत्थमदप्रवाहैः संसिक्तभूपृष्ठमसंख्यकोशम् ॥ २३ ॥

सर्वे यदा मित्रगृहं प्रपन्ना ग्रहास्तदा संजनयेन्मनुष्यम् ।
गजाश्ववृन्दक्षतभूमिरेणु सघाहताdित्यमहीवितानाम् ॥ २४ ॥

सर्वे नवांशे यदि संस्थिताः स्वे धराधिनाथं मनुजं तथान्ते ।
कुर्वन्ति नानागजवाजिवृन्दैर्हतारिपक्षं प्रचुरप्रतापम् ॥ २५ ॥

---

ABCDGIS

18a समस्ते BCDI  18b च om. B  18c कर्माश्रिते G  लाभे CD °धिनाथः CD  19c °दृष्टे GIS  19d धर्म° A °सुखाधिनाथं G  20a र्ये° G  20b = 21b in ABCDI  20b °संस्थे S  20c °सिंहैः G वृषस्थे G  °भाव° G  21c सौम्यैश्च G  22b नरा G  22c प्रयाणैः परजो° BCDI  22d न दृश्यते चैव G  23a °स्थे cod.  वासवेज्ये DIS, वा सुरेशो G  23d °कोशः ABCDGI  24a ग्रहा G  24b रा G  संजनयंति मर्त्यं G  24c वराश्व° ABCDIS  °वंद° ACDS, °यंद° B, , वृंदै G  24d °संघोश्वमाचितत्यमहोत्सवानां G  25b जनयंति मर्त्यं G  25c ज° CD

सर्वे समग्रैः प्रबलैः प्रयुक्ता यदा ग्रहाः शोभनहर्म्यसंस्थाः ।
तदार्णवान्तावनिनाथमेकं कुर्वन्ति मर्त्यं सुमहत्प्रतापम् ॥ २६ ॥

चन्द्रे कुलीरे यदि लाभसंस्थे स्वोच्चे गुरुर्दानवपूजितो वा ।
तदा महीपो यदि केन्द्रगो ज्ञो विभाकरो वा यदि सार्वभौमः ॥ २७ ॥

जीवस्त्रिकोणे यदि तुङ्गसंस्थः शुक्रोऽथवा पूर्णतनुः शशी वा ।
लाभे रविर्भूमिसुतश्च षष्ठे तदा महीपं जनयन्ति मर्त्यम् ॥ २८ ॥

शुक्रश्चतुर्थे यदि देवमन्त्री स्यात् सप्तमे सोमसुतश्च षष्ठे ।
मूर्तौ शशाङ्कः परिपूर्णगात्रः करोति जातं नृपमत्र योगे ॥ २९ ॥

स्वभागसंस्थो यदि सूर्यसूनुस्तृतीयगो भूतनयो रिपुस्थः ।
लाभे रविः स्वोच्चगतो यदा स्यात्तदा महीपं प्रभवेन्मनुष्यम् ॥ ३० ॥

हिमद्युतिः पूर्णतनुः स्वतुङ्गे धनस्थितो लाभगतः सुरेज्यः ।
† मूर्तौ शशाङ्कः सकलः ससौम्यः † कामस्थितो भूमिपतिं प्रसूते ॥ ३१

दृष्टोऽधिमित्रैर्यदि शीतरश्मिः केन्द्रस्थितः पूर्णतनुः स्वतुङ्गे ।
करोति भूपालमचिन्त्यवीर्यं नानागजेन्द्रैः सहितं हतारिम् ॥ ३२ ॥

एकोऽपि जीवः कुरुते क्षितीशं स्वोच्चाश्रितः केन्द्रगतो यदा स्यात् ।
मित्रेक्षितो दीप्ततनुर्विपापः शुक्रोऽथवा सौम्यनिरीक्षितश्च ॥ ३३ ॥

ABCDGIS

26a प्रलवैः ABS 26b °संस्थः ABCDG 26c °वानां वनिपं प्रसूतं G 26d सुबहुप्रतापं G 27c महीजो ABCDI 27d विभाम्करो ABCDGI जायनि G सर्वभूमौ G 28c लाभे तनुर्भू° G 29a °श्चतुर्थो ABCDIS देवपूज्य G 29b सप्तमः cod. °श्च षष्ठः ABCDIS, सुखस्थः G 30b ऽरिसंस्थः GS 30d प्रभवे° BCDGI प्रवदे° S 31a °तनुं BCD 31d कामाश्रितो C °पतिः ABCDGI 32b शशांकः G 32c °मसंख्यवीर्यं G 32d हयैर्गजेंद्रैः G 33a जात्य B, जातः G क्षितीशः ABCDGI 33c दीप्ति° BG 33d जीवनि° G

भूपालवंशप्रभवा नरेन्द्रास्त्र्यादिग्रहैरुच्चगतैर्भवन्ति ।
पंचादिभिः स्युर्यदि नीचजातास्तथापि नूनं बहुवृद्धिभाजः ॥ ३४ ॥

पापैः स्वतुङ्गेषु भवन्ति भूपाः पापार्जितैरुग्रधनैः समेताः ।
सौम्यैस्तु सौम्यार्जितवित्तभाजो मिश्रैर्विमिश्राः सततं भवन्ति ॥ ३५ ॥

शुभग्रहालोकितजन्मलग्ने पापैरदृष्टे शुभवर्गसंस्थे ।
भवेत् क्षितीशः प्रचुरप्रतापः सदा मदैर्नागवरैः समेतः ॥ ३६ ॥

कुलीरगे रात्रिपतौ झषस्थे शुक्रेऽथ भौमेऽरिगते विलग्ने ।
षड्वर्गशुद्धे वसुधाधिनाथो भवेन्मनुष्योऽर्थगजाश्वभाजः ॥ ३७ ॥

मूलत्रिकोणे यदि शीतरश्मिः सम्पूर्णदेहो गुरुणा च दृष्टः ।
केन्द्रस्थितेनैव करोति भूपं शुक्रेण वा सोमसुतेन वापि ॥ ३८ ॥

स्वक्षेत्रगो देवगुरुर्विलग्ने शुक्रेण दृष्टः प्रकरोति भूपम् ।
स्ववर्गशुद्धः प्रथितप्रतापं शुक्रोऽथवा तेन निरीक्षितश्च ॥ ३९ ॥

वर्गोत्तमे लग्नगते प्रदृष्टे ग्रहैश्चतुर्भिः शशिना विहीनैः ।
भवेन्महीपो मनुजोऽत्र जातः समुद्रनेमिं वसुधां प्रभुंक्ते ॥ ४० ॥

बुधे विलग्ने रविणा विहीने त्रिकोणगे देवगुरौ स्वहर्म्ये ।
भवेन्महीपः प्रचुरप्रतापो गजोत्थदानार्द्रितभूमिपृष्ठः ॥ ४१ ॥

केन्द्रस्थिते देवगुरौ स्वतुङ्गे बुधेन दृष्टे रविवर्जितेन ।
शुक्रेण वा संभवते नरेन्द्रो हस्त्यश्वसंघैः प्रचुरैः समेतः ॥ ४२ ॥

---

ABCDGIS

34c स्याद्यदि G 34d तथा च CD 35a पापा स्वतुङ्गे प्रभवंति G 36a ...ाले G 36b °संस्थाः AD 37a रात्रिकरे GS 37b ऽथवा भौमयुते ऽथ]शु CD 37d °गजार्थ° D °नागाः G 38b प्रपूर्ण° CD 39d : ...शः परपक्षहंता G 39d विरीक्षितश्च ABI 40c : भवेन्मनुष्यो कृपाण(त्र C)जातः 40d समुद्रसीमां G च भुंक्ते G, प्रयुक्तं A 41a तुंगे G 41b देवगुरु 41c °प्रमीपो I 41d °दृष्टः B 42b °वर्जिते च DG

जीवे धनस्थे सुखगे शशाङ्के लाभस्थिते दैत्यपुरोहिते च ।
लग्ने विपापे पृथिवीपतिः स्यान्नरो नितान्तं रिपुसंघमर्दी ॥ ४३ ॥

वक्रार्कजौ षष्ठगतौ विसूर्यौ केन्द्रेषु सौम्याः सकला यदा स्युः ।
तृतीयगोऽर्को यदि लाभगो वा तदा क्षितीशः प्रभवेत् प्रचण्डः ॥ ४४ ॥

केन्द्रेषु सौम्या यदि सर्व एव पापास्तथा चोपचये प्रयाताः ।
तदा भवेद् भूमिपतिर्मनुष्यः प्रभूतकोशः परपक्षहन्ता ॥ ४५ ॥

सर्वे यदा केन्द्रगता ग्रहाः स्युस्तदाभिजातोऽन्त्यजमन्दिरेऽपि ।
नराधिपः स्यात् खलु भूरिकोशो यत्सैन्यरेणवा कलुषीकृतोऽर्कः ॥ ४६ ॥

वर्गोत्तमस्था यदि वा स्युरेते सर्वे ग्रहाः संजनयन्ति भूपम् ।
करीन्द्रदानौघसुसिक्तभूमिं महाप्रभावं विजितारिपक्षम् ॥ ४७ ॥

मूर्तौ सुरेज्यो धनगो हिमांशुः सम्पूर्णगात्रो भृगुजश्च लाभे ।
जातोऽत्र योगे नृपतिर्मनुष्यो भवेन्नितान्तं बहुरत्नभागी ॥ ४८ ॥

सर्वे सुहृत्क्षेत्रगता यदा स्युस्तदा महीपो न विचार्यमस्ति ।
नानाश्ववृन्दक्षतभूमिपृष्ठः प्रभूतनागः प्रमदाप्रियश्च ॥ ४९ ॥

लग्नं यदा सौम्ययुतं न दृष्टं पापैस्तदा संजनयेन्मनुष्यम् ।
नराधिपं वाजिगजप्रधानं प्रभूतमित्रं प्रवरप्रभावम् ॥ ५० ॥

त्रिकोणसंस्था यदि सर्वसौम्याः पापास्तथा चोपचयप्रपन्नाः ।
जातस्तदा भूमिपतिर्नरः स्यात् सदा कृतघ्नो रणरागयुक्तः ॥ ५१ ॥

---

ABCDGIS

43a शुभगे G 43b °स्थितो ABCDIS °हितश्च ABCDIS 43d रिपुसिंह° G 45b त्वोपचयैः CD प्रजातः ABCI, प्रमाताः G 46a ग्रहा...यदा G 46b तद्र शि° D, तदासि° C °जाते ADI, °जात्ये C औन B न्यजमंदिरेशु G 46c भूमि° G 46d °रेण्या ABCI, °रेषौ G खलु यो भवेयुः G 47c करेंद्र° BCDGI 47d महत्प्रतापं G 48d °भाजी G 49b महीपो – 49d प्रमदा° om. B 49c नागेभ° G °वृंदा° D °क्षिति° G 49d °नागैः S, °रागः G प्रमदापथश्च S 50a च ABGI 50c धाराधिपं G, धनाधि (दि D)कं CD वाजिगतं ABIS 50d प्रचुर° G 51b °स्तदा G 51c °स्तथा ABCIS 51d रिणराजयुक्तः G

सर्वे यदा वीर्ययुता ग्रहाः स्युस्तदा बलिष्ठः प्रभवेत् क्षितीशः ।
यद्धस्तिवृन्दच्युतदानसंघैः संसेव्यते भूमितलं सदैव ॥ ५२ ॥

लग्नस्थिते रात्रिकरे प्रपूर्णे गुरौ कलत्रे रिपुगेऽर्कपुत्रे ।
महीपतिः स्याद्विविधाश्वनागैर्यः सेव्यते भूपतिभिः प्रभूतैः ॥ ५३ ॥

कुजे तृतीयेऽरिगतेऽथवार्के शनैश्चरे लाभगते स्थिरे भे ।
राजाधिराजोऽत्र भवेन्मनुष्यो नानार्थभागी जितसङ्गरश्च ॥ ५४ ॥

स्वांशेऽसितस्तु गगनेऽपि संस्थः शुक्रः कलत्रे स्वगृहं प्रयातः ।
तदा भवेद् भूमिपतिः प्रतापी प्रभूतकोशो जितशत्रुपक्षः ॥ ५५ ॥

स्वत्रिंशभागे यदि देवमन्त्री स्वांशे सितोऽपीनसुतो विलग्ने ।
तदा महीपः प्रचुराश्वभागी भवेन्नरो वारणसार्थयुक्तः ॥ ५६ ॥

आये गुरुः स्वांशगतस्त्रिकोणे शुक्रोऽथवा सोमसुतो त्रिसूर्यः ।
निशाकरो लाभगतः प्रपूर्णस्तदा भवेद् भूमिपतिर्मनुष्यः ॥ ५७ ॥

शुक्रोऽर्थसंस्थस्तनुगः सुरेज्यः स्वोच्चे बुधो वक्रयमौ रिपुस्थौ ।
यदा तदोद्भूतनगो धरापः सुरोपमः कीर्तिनिकेतनश्च ॥ ५८ ॥

मेषे रविः शीनकरो वृषस्थो यदा गुरुर्मीनगतः स्वभागे ।
भवेत् प्रजातः क्षितिपो हतारिः करीन्द्रदानौघसुगन्धितांशः ॥ ५९ ॥

---

ABCDGIS

52c °वृंद(दा D)श्रुत° CD, °वृंदसुत° G  52d om. CD  52d संप्राप्यते G  order in CDG: 54,53  53a प्रसूते G  53b रिपुभे G  53c °नाथैः G  53d भूमिगति° G  प्रसूतैः ABIS  54a द्वितीये G  तथार्के CDG  54c प्रभवे° G  54d °संगनश्च G  55a अंशे G  स्थित° CD, छम° ABIS, कुज° G °स्तुंगगतो GS  ऽत्र G  56b त्र्यंशे G  स्थिते D, स्थितः G  सोमसुतो G  56c प्रभूतः CD  प्रवराश्व° G, प्रचुरार्थ° CD  56d वानसश्च° ABIS, वारुणमत्त° G  57a स्वांशयुत° ABIS  57c सपूर्ण° CD, सुपूर्ण° G  58a-b in G: शुक्रोऽर्थसंस्थः स्वतुंगः शशांकेः सुरेज्य आ त्रिकयमोऽरिसंस्थः  58b वक्रगतो CD  58c तदा स्यात्प्रभ(स S)वेन्नराधिपः ABIS, तदा स्यात्सुनराधिराशे G  58d: शेषेशु कीर्तिप्रबलाकृतेश्च G  59 om. G  59b °भौम° S  59c प्रजापः ABS  क्षतारिः CD  59d °गंधौघसुवासि(शि C) नाशः CD

वृषांशके शीतकरस्तुलांशे शनैश्चरो देवगुरुः स्वतुङ्गे ।
केन्द्राश्रितो दानवपूजितश्च भवेन्महीपः सततं जितारिः ॥ ६० ॥

कर्कांशके कर्कगते शशाङ्के मीनांशके देवगुरौ स्वगशौ ।
लग्नं प्रयातेऽखिलसौम्यवर्गे महीपतिः स्यात् सततं प्रचण्डः ॥ ६१

मीने गुरुः सोमसुतः स्वहर्म्ये मूर्तौ सितः पापविवर्जितश्च ।
करोति मर्त्यं धरणीशमुग्रं प्रभावकोशाश्वगजैः समेतम् ॥ ६२ ॥

सूर्यस्तु लाभे यदि तुङ्गसंस्थः शुक्रेण दृष्टः स्वगृहाश्रितेन ।
करोति भूपालमलंघ्यवीर्यं सदोत्कटं देवगुरुप्रसक्तम् ॥ ६३ ॥

शनैश्चरे लाभगतेऽरिसंस्थे कुजे स्वतुङ्गे दशमे निशीशे ।
नृपो भवेत् सर्वसुखाधिवासः सुसंमतो धर्मपरः सदैव ॥ ६४ ॥

स्वक्षेत्रगे रात्रिकरे सुखस्थे सूर्येऽरिसंस्थे धनगे च सौम्ये ।
महीपतिः स्यान्नयनाभिरामः प्रभूतसौख्यः प्रमदाप्रियश्च ॥ ६५ ॥

धनस्थिताः सौम्यखगा यदा स्युः पापास्त्रिषष्ठाः प्रभवन्ति सर्वे ।
जातोऽत्रयोगे नृपतिर्वरः स्यात् सदा विवेकी पितृमातृभक्तः ॥ ६६

## इति श्रीवृद्धयवने राजयोगाध्यायः ॥

ABCDGIS

60a मेषे रविः शीत° (स्तीक्ष्ण° C)CD प्रभांशे G 60c केंद्रस्थिते G 61b सितांशके CD °गुरुः ABCGI 62d प्रभूत° G 63a सूर्यास्ति CD सूर्ये स्वभागे G 63d °गुरुप्रमक्तः D, °गुरुपमानं G 64b निशेशे D, निशेषेगे C 64d धर्मरतः CD 65a सुतस्थे S 65b ऽम्बरस्थे ABI 65d प्रसूत° D °भूम्या G 66a सौम्यग्रहा CDG 66b °स्त्रिषष्ठाः ABGIS, भवस्था C, नवस्था D सूर्ये CD 66c नृपतिस्तु वा CD col. श्रीवृद्धयवने om. CD श्री° om. S G adds App. IV

# अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

मेषोदयेऽसत्यपरा नृशंसा नारी भवेत् क्रोधयुता सदैव ।
श्लेष्माधिका निष्ठुरवाक्ययुक्ता सदा विरक्ता निजबन्धुवर्गे ॥ १ ॥

वृषोदये सत्यरता मनोज्ञा विनीतचेष्टा पतिवल्लभा च ।
नारी भवेत् सर्वकलासु दक्षा स्ववर्गरक्ता पतिवाक्यमिष्टा ॥ २ ॥

तृतीयलग्नेऽतिकठोरवाक्या स्त्री कामसक्ता गुणवर्जिता च ।
सदा नृशंसा कफवातयुक्ता महाव्यया क्रूरविचेष्टिता च ॥ ३ ॥

लग्ने कुलीरस्य भवेत् प्रसूता नारी सुरूपार्थनयैः समेता ।
बन्धुप्रिया साधुसुशीलवृत्ता प्रभान्विता साधुसुखैः समेता ॥ ४ ॥

सिंहस्य लग्ने वनितातितीक्ष्णा भवेत् कफाढ्या कलहप्रिया च ।
नानामिषैर्दुष्टशरीरगात्रा परोपकारे निरता सदैव ॥ ५ ॥

कन्योदये या वनिताभिजाता सौभाग्यसौख्यैः सहिता हिता च ।
भवेत् सुवर्गा बहुधर्मरक्ता जितेन्द्रिया सर्वकलासु दक्षा ॥ ६ ॥

तुलस्य लग्ने चिरकालकृत्या भवेत् सुमन्दा प्रणयेन हीना ।
सुगर्विता क्षान्तिविवर्जिता च तृष्णाधिका नीतिविवर्जिताज्ञा ॥ ७ ॥

नारी भवेद् वृश्चिकलग्नजाता सुरूपगात्रा नयनाभिरामा ।
सुपुण्यशीला च पतिव्रता च गुणाधिका सत्यपरा सदैव ॥ ८ ॥

चापोदये या वनिताभिजाता सा बुद्धिशूरा पुरुषानुकारा ।
सामैकसाध्या विधिना कठोरा निःस्नेहचिन्ता प्रणयेन हीना ॥ ९ ॥

---

**ABCDIS**

before 1 ABIS have: अथ स्त्रीजातकाध्यायः 1b क्रोधगता ABIS 2a सस्यरता ABI 2b वा AD 2c रक्ता CD 2d °निष्टा S, °मिथ्या I 4a कुलीरस्य] प्रसूतस्य CD, द्रसूतस्य I 4b सरूपा° ABCDI 4c °व्रता AB, °दक्षा S 5b कफाद्या CD, कफाया A 6b सौभाग्य° om. A हिते cod. 6c स्ववर्गे S 7a चिल° B 7c सुवर्गता CD 7d रीति° D, तीते C 9a वा cod. 9b युद्धि° CD °सौरा S 9c निधिना A

मृगोदये स्त्री सुभगा सुसत्या तीर्थानुरक्ता हतशत्रुपक्षा ।
प्रधानवृत्त्या प्रथिता तु लोके गुणान्विता पुत्रवती सदैव ॥ १० ॥

कुम्भस्य लग्ने प्रमदाभिजाता स्त्रीजन्मदक्षा क्षतजार्दिता च ।
नित्यं गुरूणां शुचिरुद्धचेष्टा व्ययाधिका पुण्यपरा कृतघ्ना ॥ ११ ॥

मीनोदये स्त्री बहुपुत्रपौत्रा पतिप्रिया बान्धवलोकमान्या ।
सुनेत्रकेशा सुरविप्रभक्ता नयान्विता प्रीतिपरा गुरूणाम् ॥ १२ ॥

**इति श्रीवृद्धयवने स्त्रीजातके लग्नफलम् ॥**

ABCDIS

10a सुभवा CI, सनवा B 10c °कृत्या S 11d पण्य° S 12d नयार्चिता S, प्रीतिप्रिया A col. श्री°—°जातके om. S °यावने D

# नवपञ्चाशत्तमोऽध्यायः ॥ ५९ ॥

चन्द्रे त्वजस्थे वनिता प्रगल्भा जाता भवेत् कल्पपरा प्रधाना ।
सुरूपगात्रा पतिवल्लभा च सदा गुरूणां प्रणयानुरक्ता ॥ १ ॥

वृषाश्रिते शीतकरे सुशीला विद्याविवेकागमशास्त्ररक्ता ।
तीर्थप्रसक्ता बहुपुत्रपौत्रा पतिप्रिया वित्तपरिग्रहेण ॥ २ ॥

नृयुक्स्थिते शीतकरे विनीता भवेत सुकाया प्रियदर्शना च ।
नानार्थमानैः सहिता विदग्धा परोपकारप्रवणा सुनेत्रा ॥ ३ ॥

कर्कस्थिते शीतकरे तु जाता नारी भवेत पूज्यतमा स्ववर्गे ।
सुमानिनी बान्धवलोकमान्या हतारिपक्षा द्विजदेवभक्ता ॥ ४ ॥

सिंहस्थिते चन्द्रमसि प्रधाना नारी भवेच्छौर्यसमन्विता च ।
प्रियामिषा भूषणवस्त्रभाजा उदारचेष्टा सुभगा सुरूपा ॥ ५ ॥

कन्याश्रिते शीतकरे तु जाता नारी भवेद्वित्तचतुष्पदाढ्या ।
पतिप्रधाना जितशत्रुपक्षा क्षमान्विता शौचपरा सदैव ॥ ६ ॥

तुलाधरस्थे शशिनि व्रताढ्या जाता भवेत् स्त्री हतबन्धुवर्गा ।
पतिव्रता पुत्रवती मनोज्ञा विवर्जिता दम्भमनोभवाभ्याम् ॥ ७ ॥

चन्द्रेऽलिसंस्थे तु सुगुप्तपापा स्थिरस्वभावा सुविदग्धचेष्टा ।
प्रिया गुरूणां नियमैः समेता प्रभूतकोशा विगताभिमाना ॥ ८ ॥

धनुर्धरस्थे शशिनि व्रताढ्या नारी भवेद्दानपरा सरागा ।
गीतप्रिया प्राणिहितानुकूला प्रियागमा स्त्रीजननी विनीता ॥ ९ ॥

ABCDIS

1a क्रियस्थे S, अजस्थे D   1b जा BS   कृल्यपरा CD   1c ॱगात्री ABCD
2d विक्ष° S   4b स्ववर्गान् S   5b-6a in marg. D   5c °वस्त्रमान्या D
5d °नुभगा A   7b हित° S   7d दंत° CD   8b भुवि दग्ध CD   8c हिता S
9c प्राण° B

चन्द्रे मृगस्थे विकरालदंष्ट्रा नारी भवेच्छौर्यपरा मनोज्ञा ।
विद्याधिका सत्यपरा सुरूपा सुसंयता नीतिपरा हतारिः ॥ १० ॥

घटाश्रिते शीतकरे तु जाता नारी भवेच्चन्द्रसमानवक्त्रा ।
सुदानशीला सुतवित्तयुक्ता शुभानुकारा प्रथिताभिमाना ॥ ११ ॥

मीनाश्रयस्थे हिमगौ सुताढ्या नारी भवेद्धर्मपरा सुशीला ।
जितेन्द्रिया सर्वकलासु दक्षा लज्जान्विता मानपरा मनोज्ञा ॥ १२ ॥

**इति श्रीवृद्धयवने स्त्रीजातके चन्द्रराशिगुणाध्यायः ॥**

ABCDIS

10d सुसंयुता ABCDI 11b °मसानु° ABIS, °प्रभानु° CD 11d °मानी C 12a मीनाश्रितस्थे IS, मीनाश्रीतस्थे ABD col. श्रीवृद्धयवने स्त्रीजातके om. S चंद्रराशिगुणाः S

# षष्टितमोऽध्यायः ॥ ६० ॥

जाताश्विनीषु प्रमदा मनोज्ञा प्रभूतकोशा प्रियदर्शना च ।
प्रियंवदा सर्वसहाभिरामा शुद्धान्विता देवगुरुप्रसक्ता ॥ १ ॥

स्त्रीवर्गयुक्ता भरणीषु जाता भवेन्नृशंसा कलहप्रिया च ।
सुदुष्टचिन्ता विभवैर्विहीना क्षतप्रतापा सततं कुचैला ॥ २ ॥

जाता भवेत् स्त्री त्वथ कृत्तिकासु कोपाधिका युद्धपरा विरक्ता ।
प्रद्वेषिणी बन्धुजनेन हीना श्लेष्माधिका क्षान्ततनुः सदैव ॥ ३ ॥

जाता भवेत् स्त्री त्वथ रोहिणीषु सुरूपगात्रा शुचिरप्रमत्ता ।
पतिप्रधाना पितृमातृभक्ता सुपुत्रकन्या विभवैः समेता ॥ ४ ॥

मृगे तु मान्या वनिता सुरूपा प्रसन्नवाक्या प्रियभूषणा च ।
नानार्थवस्त्रान्नपरा सुपुत्रा धर्माश्रया शुभ्रतनुः प्रसक्ता ॥ ५ ॥

आर्द्रासु नारी क्षतमन्युयुक्ता दुष्टस्वभावा कफपित्तभाजा ।
सुरेन्द्रभावा परपक्षरन्ध्रा महाव्यया कृत्रिमपण्डिता च ॥ ६ ॥

पुनर्वसौ दम्भविहीनभावा श्रुत्याधिका पुण्यपरा सुभावा ।
नग्नी भवेद्धर्मपरा मनोज्ञा सुपूजिता नाथवती सदैव ॥ ७ ॥

पुष्येषु जाता वनिता सुरूपा प्रसिद्धकृत्या सुभगा सुपुत्रा ।
देवद्विजार्थे प्रवणा सुहर्म्या सुखाधिका बान्धववल्लभा च ॥ ८ ॥

सार्पे कुरूपा व्यसनाभिभूता क्रियाविहीनातिकठोरवाक्या ।
नारी भवेत् सत्यविहीनकृत्या दम्भान्विता छद्मरता कृतघ्ना ॥ ९ ॥

ABCDIS

1d शुद्धयान्विता S 2d हतप्रतापा CDS 3d क्षाम° cod. 5c-23b follow 55, 120b in S 5d शुभ° S, शुद्ध° A प्रसक्ता om. S 6a आर्द्राभ्यु I,—द्रा हि S कृत° AB 6c °भाजा S °रंध्रपक्षा S 6d महाव्यया कृ° om. S °मंडिता S 7c नारी S °र्मपरा om. S 8a पुष्ये सु° S 8b प्रसिद्धय° D 8c प्रनृणा B, प्रणवा CI, प्रणता AD 9c °वृत्त्या ACDI, वृत्ता B

मघासु मान्या बहुशत्रुपक्षा श्रियाधिका पापविवर्जिता च ।
भक्ता गुरूणां प्रणता द्विजानां नारी भवेत् पार्थिवसौख्ययुक्ता ॥ १० ॥

भाग्ये जितारिः सुभगा सुपुत्रा नयान्विता सद्व्यवहारदक्षा ।
शास्त्रानुरक्ता प्रियवादिनी च स्वीयाप्तपुण्या हि भवेत् कृतज्ञा ॥ ११ ॥

आर्यम्णभे सुस्थिरचित्तवित्ता नयप्रधाना गृहकृत्यदक्षा ।
गुणानुरक्ता व्यसनैर्वियुक्ता नारी भवेद्रोगविवर्जिता च ॥ १२ ॥

हस्ते सुहस्ता शुभनेत्रकर्णा क्षमान्विता शीलधना विधिज्ञा ।
भवेन्नितान्तं वनिता शुभासा महासुखैर्वर्धितगात्रका च ॥ १३ ॥

चित्रासु चित्राभरणा सुरूपा चतुर्दशीमेकतमां हि हित्वा ।
तस्यां च कृष्णे विषकन्यका स्याच्छुक्ले दरिद्रा त्वथ बन्धकी च ॥ १४ ॥

स्वातीषु साध्वी सततं सुताढ्या वित्ताधिका सत्यधनाल्पपाना ।
नारी भवेत् कीर्तिसमन्विता च प्रभूतमित्रा विजितारिपक्षा ॥ १५ ॥

भवेद्विशाखासु सुवाक्यकोमला सुकोमलाङ्गी विभवैः समेता ।
तीर्थानुरक्ता व्रतधर्मदक्षा रामा भवेद्बान्धववल्लभा च ॥ १६ ॥

मैत्रे सुमित्रा विगताभिमाना प्रसन्नमूर्तिः प्रभुतासमेता ।
विनीतवेषाभरणा सुमध्या भक्ता गुरूणां पतिना सदैव ॥ १७ ॥

ज्येष्ठासु रम्या वनिता प्रगल्भा सुचारुवाक्या विनयान्विता च ।
प्रभूतकोशा सुभगा सुताढ्या बन्धुप्रिया सत्यसमन्विता च ॥ १८ ॥

ABCDIS

11a सुभगा om. C  11b भया° B  11d स्त्रीप्राप्त° ABCDI  12a = 11b in S  12a आर्यम्न(म्ना B) मे BI, आर्यम्रमे A, आर्यामृगे D, आर्यम्ने C  12c °र्विमुक्ता S  13a तु हस्ता AS, °षु हस्ता CD  13b क्षेमा° S  13c शुभास्या S  14d °च्छुके DI, °च्छुक्ते C, °च्छुक्ल A  15b °ल्पमाना BCD  16c व्रतकर्म° DS  18b वनितान्विता ABIS  18c प्रभूतकोपा I

मूलेऽल्पसौख्या विधवा दरिद्रा रोगाभिभूता बहुशत्रुपक्षा ।
नारी भवेद्बान्धवलोकहीना पराभिभूता बहुनीचगर्वा ॥ १९ ॥

आप्येऽनुकूला कुलमध्यमुख्या सुपूज्यकर्मातुलवीर्यसत्त्वा ।
विशालनेत्राद्भुतरूपयुक्ता नारी भवेत् कीर्तियुता सदैव ॥ २० ॥

वैश्वे तु जाता वनिता मनोज्ञा भवेद्विनीता प्रथिता नृलोके ।
नानार्थभोगैः सहिता प्रधाना सन्तुष्टचित्ता पतिवल्लभा च ॥ २१ ॥

प्रभूतरूपा हरिभे सुविज्ञा शास्त्रानुरक्ता प्रचुरप्रभावा ।
स्त्री सर्वदा दानरता सुसत्या परोपकारे प्रवणा च नित्यम् ॥ २२ ॥

भवेद्धनिष्ठासु कथानुरक्ता नारी प्रभूतान्नसुवस्त्रभाजा ।
नानार्थदा प्राप्तदयानिषण्णा गुणाधिका सद्गुणचेष्टिता च ॥ २३ ॥

भवेत् सुदान्ता त्वथ वारुणे भे स्त्री संमता पूज्यतमा स्ववर्गे ।
देवार्चनश्रेष्ठजनानुरक्ता सदा हिता सर्वकुतूहलानाम् ॥ २४ ॥

अजैकपादे वनिताभिजाता प्रभूतकोशा सुतलालसा च ।
सत्यप्रदा साधुसमागमोक्ता विद्यान्विता भूरिधना प्रधाना ॥ २५ ॥

उपान्त्यभे स्वामिहितानुरक्ता क्षमान्विता प्रीतिकरा गुरूणाम् ।
प्रशान्तवैरी सुतसौख्ययुक्ता विवेकिनी कृत्यपरा सदैव ॥ २६ ॥

पौष्णे सुरूपा बहुमित्रपक्षा स्वभावशुद्धा व्रतचारिणी च ।
तेजोन्विता भूरिचतुष्पदाढ्या हतारिपक्षा प्रियदर्शना च ॥ २७ ॥

**इति श्रीवृद्धयवने स्त्रीजातके नक्षत्रगुणाध्यायः ॥**

ABCDIS

20b °वीर्यसत्या ABCDI 21a मनोज्ञा om. A 21b नृलोके CDI 21c °भागैः CD 22b °प्रभावान् D 22d प्रतिणा S 23b °भावा A 23c-24a वा° om. A 23c प्राप्तिहया S निषाणा D, निषणा BCI 24 om. D 25b श्रुत° S 25c सत्यात्रदा ABCDS, सत्यावदा I 26c प्रशांतगर्वा S सुखसौख्य° AB 26d सत्यपरा S 27a सुपूज्या S 27b °ज्वारिणी B 27c-d °चतु°—हतारि om. A col. श्री°—°जातके om. S °यावने D नक्षत्रफलाध्यायः S

# एकषष्टितमोऽध्यायः ॥ ६१ ॥

मूर्तौ रविस्तीव्ररुजां प्रसूते नारीं सदा दुःखशतैरुपेताम् ।
दुष्टस्वभावां सुकृशां कृतघ्नां परान्नरक्तां प्रभया विहीनाम् ॥ १ ॥

धनाश्रितोऽर्को धनधान्यहीनां कठोरवाक्यां गतभक्तिभावाम् ।
युद्धप्रियां द्वेषरतां खलां च नारीं प्रसूते गतसौहृदां च ॥ २ ॥

तृतीयगस्तीक्ष्णकरः प्रसूते सुखेन युक्तां वनितां सदैव ।
नीरोगदेहां सुसुरूपवक्त्रां विशालनेत्रां † जनितां नितान्तम् ॥ ३ ॥

चतुर्थगस्तीक्ष्णकरः प्रसूते सौख्येन हीनां वनितां सदैव ।
सरोगदेहां विकरालदंष्ट्रां प्रभाविहीनां जनताविरुद्धाम् ॥ ४ ॥

सुताश्रितः स्वल्पसुतां प्रसूते नारीं प्रधानां व्रतसंयुतां च ।
स्थूलास्यदन्तां पितृमातृभक्तां प्रियंवदां ब्राह्मणसंमतां च ॥ ५ ॥

षष्ठे दिनेशः कुरुते प्रगल्भां हतारिपक्षां वनितां विदग्धाम् ।
प्रशान्तचर्यां प्रियधर्मकृत्यां धर्मानुरक्तां सुभगां सुरूपाम् ॥ ६ ॥

सूर्येऽस्तसंस्थे पतिना विमुक्ता नारी तथा सर्वसुखैर्विमुक्ता ।
सदैव रौद्रा प्रणयेन हीना कफाश्रया किल्बिषिणी कुरूपा ॥ ७ ॥

स्थानेऽष्टमे वासरपः प्रसूते दारिद्र्यदुःखान्वितबन्धुगोत्राम् ।
नारीं कुधर्मान्वितसर्वकृत्यां विषादयुक्तां क्षतजार्दिताङ्गीम् ॥ ८ ॥

धर्मस्थितो वासरपः प्रसूते नारीं कुधर्मां प्रियसाहसां च ।
भाग्यैर्विहीनां बहुशत्रुपक्षां प्रभूतरोषां विभवैर्विहीनाम् ॥ ९ ॥

ABCDIS

1a °स्तीक्ष्ण° S °रुजं ABCDI 1b नारीं तथा तीव्ररुजासमेतां ABCDI 1c सुकृत्यां C, सुकृतां D 2c द्वेषवतीं खलानां D 3b सौख्येन S 3d विशालवक्षां जनताविरुद्धां S 4d प्रभाव° BCI 5a सुखाश्रिता C 5c स्थूल्यास्य° AB 6a षष्ठो cod. 6b प्रणतारिपक्षां ABI 7c प्रणवेन ABI 8b दरिद्र° S 9a धर्माश्रितो CD

कर्माश्रितो वासरपः प्रसूते कुकर्मरक्तां वनितां सदैव ।
प्रभाविहीनां शिथिलां स्वभूतौ स्वभावकृष्णाभ्यधिकां नितान्तम् ॥ १० ॥

लाभाश्रितः संकुरुते दिनेशो नारीं सलाभां बहुपुत्रपौत्राम् ।
जितेन्द्रियां सर्वकलासु दक्षां क्षमान्वितां बान्धवपूजितां च ॥ ११ ॥

असद्व्ययां द्वादशगो दिनेशो नारीं प्रसूते विनयेन हीनाम् ।
बहुव्ययां पापपरां नृशंसां सर्वाशयां शौचविवर्जितां च ॥ १२ ॥

**इति सूर्यफलम् ॥**

चन्द्रो विलग्ने यदि शुक्लपक्षे नारीं प्रसूतेऽतिसुरूपगात्राम् ।
कृष्णे कृशां दीनतरां सरोगां विवादशीलां सततं कुचैलाम् ॥ १३ ॥

धनाश्रितः शीतकरः प्रसूते प्रभूतवित्तां प्रणतां प्रधानाम् ।
धर्मानुकूलां पतिकृत्यदक्षां नयाधिकां ब्राह्मणसंमतां च ॥ १४ ॥

चन्द्रस्तृतीये कफवातसारां नारीं प्रसूतेऽतिकठोरवाक्याम् ।
कुसंश्रितां नीतिविवर्जितां च स्वभावदुष्टां कृपणां कृतघ्नाम् ॥ १५ ॥

चन्द्रः सुखस्थो बहुसौख्ययुक्तां नारीं प्रसूतेऽद्भुतभूषणां च ।
स्थिरस्वभावां श्रुतसर्वकृत्यां भोगाधिकां देवगुरुप्रभक्ताम् ॥ १६ ॥

सुताश्रितः शीतकरः सुपुत्रां करोति नारीं गुणगौरवाढ्याम् ।
प्रभूतभृत्यां सुखसत्ययुक्तां सुसंयतां भर्तृपरां सुरूपाम् ॥ १७ ॥

चन्द्रोऽरिसंस्थः कुरुतेऽल्पवित्तां प्रभूतवैरां विनयेन हीनाम् ।
चलस्वभावां क्षतसर्वगात्रां रोगाभिभूतां तनुतासमेताम् ॥ १८ ॥

· ABCDIS

10a कामाश्रितो D 10c स्वभूतोः C, स्वभूतः D, स्वभूत्ये AI, स्वकृत्ये B, स्वपत्ये S 10d °कृष्णात्य° S, °कृष्णोत्य° CD, °कृत्याभ्य° A 11b सलाभ्यां CD order in B: 12, 13c-d, col., 13a-b, 14 col: after इति B adds: श्रीवृद्धयवने रविफलं S 14b प्रणतां om. AB 14c पतिपक्षदक्षां S 15c कुसंसृता ABCDI, कुत्संसृतां S 16c श्रुत° BCDI 17c B has 16d in place of सुखसत्ययुक्तां 17d °संयुतां ABCDI, °संमतां S

चन्द्रोऽस्तसंस्थः कुरुते विदग्धां पतिप्रियां धर्मविवेकयुक्ताम् ।
सुचारुवाचां विभवैः समेतां तेजोन्वितां शौचसमन्वितां च ॥ १९ ॥

चन्द्रोऽष्टमस्थः कुरुते नृशंसां नारीं कुनेत्रां कुकुचाभगां च ।
विहीनवेशाभरणां सरोगां नितान्तमत्यद्भुतगर्हणां च ॥ २० ॥

धर्माश्रितः शीतकरः प्रसूते प्रभूतधर्मां वनितां सुमध्याम् ।
भोगाधिकां कल्यतमां मनोज्ञां सुभृत्यपुत्रां च सुभूरिसौख्याम् ॥ २१ ॥

कर्माश्रितः शीतकरः प्रसूते प्रभूतहेमद्रविणां प्रसिद्धाम् ।
नारीं निरीहां कुलसर्वमुख्यां त्यागान्वितां पुण्यपरां सुसत्याम् ॥ २२ ॥

लाभाश्रितः शीतकरः सुलाभां भव्यां विधिज्ञां कुरुते सुदान्ताम् ।
नारीं प्रपन्नप्रणयेन युक्तां दानान्वितां व्याधिविवर्जितां च ॥ २३ ॥

करोति चन्द्रो व्ययगो व्ययाढ्यां गतप्रभावां वनितां सुतीव्राम् ।
दीनाननां नीतिविवर्जितां च क्षमाविहीनां निधनां नितान्तम् ॥ २४ ॥

इति चन्द्रफलम् ॥

लग्नाश्रितो भूतनयः प्रसूते नारीं महारक्तसुदुःखिनाङ्गीम् ।
गतप्रभावां पतिनातिरक्तां सुदुर्भगां गर्वसमन्वितां च ॥ २५ ॥

धनाश्रितो भूतनयो विशीलां धनेन हीनां कुरुते कुकान्ताम् ।
वराधिकां कामपरां सरोगां रोगाधिकां कोशविवर्जितां च ॥ २६ ॥

तृतीयसंस्थः कुरुते महीजो नारी नितान्तं सुभगां सुशीलाम् ।
बन्धुप्रियां साधुरतां प्रशस्तां विहीनरोगां प्रश्रितप्रभावाम् ॥ २७ ॥

ABCDIS

20b कुकुर्चा° CD 20d निंदान्विता° D 21b सुमेध्यां CD 21d °पुत्राश्च ABCDS °संख्यां S 23b सेवाविधि° CD 23c प्रसन्न° S, प्रसान्नां D, प्रपसं° C col: after इति B adds: श्रीवृद्धयवने 25c °तिरिक्तां DS 25d जर्व° A 26b-27b om. C 26b कुरुते om. A विकांतिं S 26d केश°S

चतुर्थगो भूतनयः प्रसूते नारीं हताशां हतकर्मकृत्याम् ।
सौख्येन हीनां विधनां विशीलां जनैर्विरक्तां सततं सरोषाम् ॥ २८ ॥

सुताश्रितो भूतनयः प्रसूते नारीं कुपुत्रां त्रपया विहीनाम् ।
कुशंसितां पापविधानरक्तां श्रुतेन हीनां हतबन्धुवर्गाम् ॥ २९ ॥

रिपुस्थितो भूतनयः प्रसूते नारीं सनाथां हतशत्रुपक्षाम् ।
प्रभूतकोशां सुजनानुरक्तां विद्याधिकां रोगविवर्जितां च ॥ ३० ॥

अस्तस्थितो वै धरणीसुतस्तु बाल्ये प्रसूते विधवां च नारीम् ।
दुष्टस्वभावां विभवेन हीनां सुकुत्सिताङ्गीं गुणवर्जितां च ॥ ३१ ॥

मृत्युस्थितो भूतनयः प्रसूते प्रभूतरोगां सुकृशां विनाथाम् ।
दारिद्र्यदुःखक्षतशोकभाजां हिंसाधिकां कान्तिविवर्जितां च ॥ ३२ ॥

धर्माश्रितो भूतनयो विधर्मां करोति नारीममुखां सुरोगाम् ।
भाग्यैर्विहीनां सुजनैर्निरस्तां प्रियामिषां पानपरां सदैव ॥ ३३ ॥

कर्माश्रितो भूतनयः प्रसूते नारीं कुकर्मप्रवणां कुभावाम् ।
शीलेन हीनां निरतां विधर्मे लज्जाविहीनां मतिवर्जितां च ॥ ३४ ॥

लाभाश्रयस्थः कुरुते महीजः प्रभूतलाभां वनितां निरीहाम् ।
शुभस्वभावां विविधोपचारां रतां पतौ प्रीतिपरां सुधर्मे ॥ ३५ ॥

व्ययस्थितो भूतनयः प्रसूते नारीं कृतघ्नां गुणवर्जिताङ्गीम् ।
असह्ययां पानरतां नृशंसां मदातुरां प्राणविवर्जितां च ॥ ३६ ॥

इति भौमफलम् ॥

ABCDIS

28b हताशां om. B 28c विधिनां C, निधिनां D 28d °निरक्तां ABI 29c कुसंगिनां CD, कुसंमनां S 29d श्रुतेन BI 30c °क्रोधां B 31a अस्तंश्रितो भूतनयः सदा च D 32c दरिद्र° S °रोगभाजां S 33a विधर्मां]प्रसूते D 33b-34c om. I 33b °मसुखां om. A, सुमुखां BS 34b कुकर्मां cod. 34d लक्षा° I 36c पानपरां BS 36d प्राशा° A col: after इति B adds: श्रीवृद्धयवने

करोति सौम्यस्तनुगः सुरूपां पतिप्रधानां नयधर्मयुक्ताम् ।
विशालनेत्रां प्रचुरान्नपानां प्रियां सदा सत्यसमन्वितां च ॥ ३७ ॥

धनस्थितः सोमसुतः प्रसूते धनान्वितां शुद्धियुतां सुरूपाम् ।
नारीं द्विजाराधनतत्परां च क्रतुप्रियां श्रीसहितां गुणाढ्याम् ॥ ३८ ॥

तृतीयगः सोमसुतो धनाढ्यां नारीं प्रसूते सुतमानभाजाम् ।
जनानुकूलां प्रभुतासमेतां बन्धुप्रियां प्राणयुतां सुभाषाम् ॥ ३९ ॥

सौम्यः सुखस्थः ससुखां प्रसूते नतां प्रभूतैः सुजनैः सुभृत्याम् ।
देवद्विजाराधनतत्परां च प्रख्यातवंशां प्रियधर्मवर्गाम् ॥ ४० ॥

सुतस्थितः सोमसुतोऽल्पपुत्रां स्वल्पान्नवित्तां कलहप्रियां च ।
वृथाटनां गर्हितसर्वकृत्यां लक्ष्म्या विहीनां हतसाधुपक्षाम् ॥ ४१ ॥

सौम्योऽरिसंस्थो हतशत्रुपक्षां नारीं प्रसूते सुरया समेताम् ।
गतायुषां तीव्रकरां सुकामां परोपकारव्यसनाभिभूताम् ॥ ४२ ॥

सौम्यः कलत्रे प्रवरां विदग्धां शास्त्रानुरक्तां शुभभर्तृकां च ।
करोति नारीं नियमैरुपेतां शुभप्रभावां प्रणयान्वितां च ॥ ४३ ॥

मृत्युस्थितः सोमसुतः कृतघ्नां नारीं प्रसूते विगताभिमानाम् ।
निरस्तधर्मां जनताविरुद्धां सदातुरां भीतिसमन्वितां च ॥ ४४ ॥

धर्माश्रितः सोमसुतः सुधर्मां धन्यां प्रसूते वनितां विनीताम् ।
भाग्याधिकां कीर्तिपरां सुदक्षां क्षमाधिकां सत्यसमन्वितां च ॥ ४५ ॥

ABCDIS

37a तनुगः ] सुभगां CD 37d प्रियंवदां D सत्य° om. A 38a प्रसूते ] धनाढ्या C, सुताढ्यां D 38b शुद्धिमतां CD 39c जनानुरक्तां S 39d सुतासां D 40a सुमुखां S 40b प्रसूतैः D सभृत्यां BC, प्रसूत्यां D, सुभृत्यैः S 42d °काराख्यसना° S 43b °कर्तृकां S 43d °प्रभानां C, °प्रधानां D 44c जनसंविरुद्धां cod.

कर्माश्रितः सोमसुतः सुकर्मां पतिप्रधानां वनितां प्रसूते ।
प्रभूतकोशाश्वसुवर्णभाजां नयप्रधानां विनयैः समेताम् ॥ ४६ ॥

लाभाश्रितः सोमसुतः प्रसूते नारीं प्रभूतप्रियपुष्टचित्ताम् ।
सुलाभयुक्तां शुभशीलभाजां पतिव्रतां † वासकसंमतां च ॥ ४७ ॥

व्ययस्थितः सोमसुतः प्रसूते नारीं विलक्ष्यां विगतप्रतापाम् ।
विवादशीलां विकलां कृशाङ्गीं गुणैर्वियुक्तां सुजनैर्निरस्ताम् ॥ ४८ ॥

इति बुधफलम् ॥

लग्नाश्रितो देवगुरुः प्रसूते सुसत्ययुक्तां सुमनोज्ञभोगाम् ।
गम्भीरवाक्यां प्रियसाधुपक्षां सुरूपगात्रां प्रमदोत्तमां च ॥ ४९ ॥

धनस्थितो देवगुरुः प्रसूते प्रभूतवित्तां सुभगां मनोज्ञाम् ।
सुधर्मिणीं नीतिपरां प्रधानां गतस्पृहां हानिविवर्जितां च ॥ ५० ॥

तृतीयसंस्थः कुरुते सुरेज्यो नारीं नितान्तं विहितप्रभावाम् ।
सदोषयुक्तां गुरुताविहीनां विवर्जिताङ्गां निधनैः समेताम् ॥ ५१ ॥

चतुर्थसंस्थः कुरुते सुरेज्यो नारीं सुखाढ्यां बहुखानपानाम् ।
प्रभूतभृत्याभरणां प्रसिद्धां सुपूजिताङ्गीं गुणगौरवां च ॥ ५२ ॥

सुतस्थितो देवगुरुः सुपुत्रां नारीं प्रसूते हतपापकृत्याम् ।
सदानुकूलां व्रतधर्मदक्षां सत्यात्मकां रम्यसभां सुभव्याम् ॥ ५३ ॥

जीवोऽरिसंस्थो बहुशत्रुपक्षां नारीं विधत्ते नयसंयुतां च ।
बह्वापदां त्राससमन्विताङ्गीं प्रधानचर्यां कृतकोपचाराम् ॥ ५४ ॥

---

ABCDIS

47b °दुष्टचित्तां CD   47c सुलालयुक्तां I   47d पतिप्रियां D वासिक° D
48d गुरुर्वियुक्तां S   col: after इति B adds: श्रीवृद्धयवने   49a लाभाश्रितो D
49b °ज्ञसोमां D   50c प्रभावां CD   50d गता° D मान° CD   51b: सस्नेहता बंधुजनात् (नः C) सकाशात् CD   51c सुदोष° S   51d सदैव S   52a °संगीः A
52b सुखाप्त्याशनपानयुक्तां S   बहुसन्नपानां ABI   52c °भृत्या° I   53c व्रतकर्म° D
53d °त्मकां—54b om. A   53d सत्यात्मिकां S   54b सुधत्ते cod.

कलत्रगो देवगुरुः प्रसूते सुभावयुक्तां प्रमदां सुपुण्याम् ।
ज्ञानानुरक्तां बहुशास्त्रभाजां पतिप्रियां कीर्तिसमन्वितां च ॥ ५५ ॥

जीवोऽष्टमस्थः कुरुतेऽल्पसत्यां नारीं विशीलां पतिना विमुक्ताम् ।
स्थूलांघ्रिहस्तां व्यसनप्रधानां बह्वाशनां रोगसमन्वितां च ॥ ५६ ॥

आरामकूपामरसत्यरक्तां तडागवृक्षोद्भवकृत्यतुष्टाम् ।
रम्यां प्रशस्तां द्विजभक्तियुक्तां महाधनां † नीचजनां कृतज्ञाम् ॥ ५७ ॥

कर्माश्रितो देवगुरुः प्रसूते नारीं सुदान्तां बहुकीर्तियुक्ताम् ।
श्रियान्वितां शिल्पपरां सुसत्यां प्रख्यातकर्मां प्रगुणां गुणज्ञाम् ॥ ५८ ॥

प्रभूतदासीं विनयप्रगल्भां नारीं प्रसूतेऽद्भुतचेष्टितां च ।
लाभाश्रितो देवगुरुः प्रसूते सदानुरक्तां गुणकीर्तनेन ॥ ५९ ॥

व्ययस्थितो देवगुरुः प्रसूते साधुव्ययां रागसमन्वितां च ।
लाभाभिभूतां कुलधर्महीनां निसर्गदुष्टां परधर्मपक्षाम् ॥ ६० ॥

इति गुरुफलम् ॥

लग्नाश्रितो दैत्यगुरुः प्रसूते नारीं सुकान्तां सुभगां विदग्धाम् ।
विद्याधिकां दोषविवर्जिताङ्गीं हतारिपक्षां सततं सुशीलाम् ॥ ६१ ॥

शुक्रो धनस्थः सधनां प्रसूते विदग्धचेष्टां प्रमदां दुरापाम् ।
धर्मध्वजां धर्मपरां धनाढ्यां विख्यातकर्मां मृदुभाषिणीं च ॥ ६२ ॥

ABCDIS

55b सुताव° CD 56b विभक्ता S 56c स्थूलार्द्धि° CD 57b वृक्षोभय° S 57d महाधनी ACIS °नां च जनां S, °नां A order in S: 58a, 58d-59c, 58b-c, 59d 58c श्रेयोन्वितां S 59a °दासां I 59d-60b साधुव्ययां om. I 60a व्ययाश्रितो D 60b °समान्वितागीं S col: गुरु-फलमिति D after इति B adds: श्रीवृद्धयवने 62c सधन्यां S

तृतीयगो दैत्यगुरुः प्रसूते नारीं दरिद्राद्भुतबन्धुवर्गाम् ।
विहीनकोशां पतिना विमुक्तां सुनिष्ठुरां गद्गदभाषिणीं च ॥ ६३ ॥

सुखाश्रितो दैत्यगुरुः प्रसूते प्रभूतसौख्यां वनितां धनाढ्याम् ।
विलासलीलां प्रियधर्मकृत्यां जितेन्द्रियां वंशविभूषणां च ॥ ६४ ॥

करोति शुक्रः खलु पंचमस्थो नारीं समृद्धां बहुकन्यकाढ्याम् ।
रम्यानुरागां खलसङ्गहीनां नित्यं प्रधानां निजवेश्ममध्ये ॥ ६५ ॥

शुक्रोऽरिसंस्थः प्रकरोति नारीमीर्ष्याप्रधानां बहुकोपयुक्ताम् ।
तीव्रस्वभावां विजितारिपक्षां सदा निरस्तां पतिपुत्रवर्गैः ॥ ६६ ॥

कलत्रगो दैत्यगुरुः प्रसूते नारीं प्रभूतद्रविणप्रभावाम् ।
पतिप्रियां शास्त्ररतां प्रगल्भां हितां द्विजानां जनवल्लभां च ॥ ६७ ॥

शुक्रोऽष्टमस्थः कुरुते प्रसक्तां विषादभाजां विभवैर्विमुक्ताम् ।
दयाविहीनां परवंचनार्तां कुचैलिनीं धर्मविवर्जितां च ॥ ६८ ॥

धर्माश्रितो धर्मपरां प्रसूते शुक्रः सुमुख्यां वनितां नु लोके ।
नानार्थवस्त्राश्रयभोजनाढ्यां सुपुष्टचित्तां पुरुषानुरागाम् ॥ ६९ ॥

कर्माश्रितो दैत्यगुरुः प्रसूते नारीं यशस्यां सुधनैः समेताम् ।
प्रसिद्धकर्मप्रतिपूजिताङ्गीं प्रज्ञाधिकां कल्यतरां सुसत्याम् ॥ ७० ॥

लाभाश्रितो दैत्यगुरुः प्रसूते प्रभूतलाभां वनितां सदैव ।
विमुक्तदोषां बहुशास्त्ररक्तां महाप्रभावां विविधाश्रयां च ॥ ७१ ॥

व्ययस्थितोऽसद्व्ययदुःखभाजां नारीं प्रसूते भृगुजः सकामाम् ।
मायाधिकां कृत्रिमवाक्यरक्तां रोगाभिभूतां मतिवर्जितां च ॥ ७२ ॥

इति शुक्रफलम् ।

---

ABCDIS

65b नार्दीं B, नीचां ACDI 65c रमा° A खलु BC 65d नित्यं प्रधानां om. A 66d मति° CD 67b प्रभूतप्रविण° S 68d कुचैलनी BCI 69b समुख्यां ABCDI 72a दैत्यगुरुः स्व(प्र CD) भजं (वां CD) BCDI °भार्गा A 72c मायाविनीं S छत्रिम° D col. after इति B adds: श्रीवृद्धयवने

करोति सौरः खलु लग्नसंस्थो विरूपदेहां वनितां नितान्तम् ।
अमाश्रिकां कीर्तिविवर्जिताङ्गीं स्थूलास्थिदन्तैर्नयनैर्विहीनाम् ॥ ७३ ॥

धनस्थितः सूर्यसुतः प्रसूते धनेन हीनां वनितां निरस्ताम् ।
सदाभिभूतां प्रणयेन हीना नृशंसभावां नयसङ्कुलां च ॥ ७४ ॥

तृतीयसंस्थो रविजः प्रसूते दक्षां प्रधानां वनितां सुधन्याम् ।
बहुप्रजां त्राणविधानसक्तां प्रशंसितां साधुजनेन नित्यम् ॥ ७५ ॥

करोति मन्दः सुखगः ससौख्यां मतिप्रहीनां वनितां कृतघ्नाम् ।
चलस्वभावां विभवैर्विहीनां सदा हतां नीचसमागमे च ॥ ७६ ॥

सुताश्रितो भास्करजो विपुत्रां नारीं प्रसूते घृणया विहीनाम् ।
प्रभूतदर्पां गणिकानुकारां विवर्जितां साधुसमागमेन ॥ ७७ ॥

मन्दोऽरिसंस्थः कुरुतेऽतिमन्दां नारीं प्रधानां तनयैः समेताम् ।
प्रभूतवस्त्राभरणैः समेतां गुणानुरक्तां सुतवल्लभां च ॥ ७८ ॥

सौरोऽस्तसंस्थो विधवां प्रसूते विवर्जितां वा वनितां सदैव ।
रोगाधिकां पानपरां कुमित्रां प्रभूतदोषां बहुकूटभाजाम् ॥ ७९ ॥

स्थानेऽष्टमे सूर्यसुतः प्रसूते नारीं प्रदग्धां निजकर्मदोषैः ।
दुष्टस्वभावां गतधर्मसत्यां मलिम्लुचां वंचनतत्परां च ॥ ८० ॥

धर्माश्रितः सूर्यसुतः प्रसूते कुधर्मरक्तां वनितां सदैव ।
व्ययाधिकां लुब्धसुहृत्समेतां विद्याविहीनां न नतां कदाचित् ॥ ८१ ॥

कर्माश्रितः सूर्यसुतः प्रसूते कुकर्मरक्तां विकृतानुकाराम् ।
कुशास्त्रसङ्गव्यसनाभिभूतां निसर्गदुष्टां धनवर्जितां च ॥ ८२ ॥

ABCDIS

73c श्रमा° B °धितां CD 73d °दंतां S 74d जय° B 75d प्रशं° om. IS 76a सुसौख्यां S 76d सहा D हितां S °गमेन D 77a शुभाश्रितो CDI 78b नयनैः IS, नय B, यनै A 78c प्रभूतरत्ना° D 79c भोगाधिकां S पापपरां D 81c लब्ध° I 81d विषा–हीनां B, द्विविद्याहीनां I 82a सूर्यसुतः om. B 82b विभूतानुकारां B

लाभाश्रितो भास्करजः प्रसूते नारीं सुपुत्रां सुधनैः समेताम् ।
सुरूपदेहां विविधान्नपानां प्रभूतलाभां भयवर्जितां च ॥ ८३ ॥

व्ययाश्रितो भास्करजः प्रसूते रक्ताधिकां वातकफप्रगल्भाम् ।
विवेकहीनां कुटिलस्वभावां सदा निरस्तां व्यसनाकुलां च ॥ ८४ ॥

इति शनिफलम् ।

एतत् फलं स्त्रीषु विशेषतश्च प्रोक्तं स्वभावे फलदं सदैव ।
शेषं नराणां विधिना प्रवाच्यं हित्वा तु योगान् नृपसंभवांश्च ॥ ८५ ॥

**इति श्रीवृद्धयवने स्त्रीजातके भावफलाध्यायः ॥**

ABCDIS

84a व्ययस्थितो S 84d मया C, भस्त्रा D col. after इति B adds: श्रीवृद्धयवने 85d हित्वानुयोगान् S col. श्री° om. S स्त्रीजातके om. S स्वस्था-फलाध्यायः BS

# द्विषष्टितमोऽध्यायः ॥ ६२ ॥

मूर्तौ सुरेज्योऽस्तगतः शशाङ्कोऽथवा स्ववर्गे गगने च शुक्रः ।
जातान्त्यजानामपि मन्दिरेऽत्र योगे भवेत् पार्थिववल्लभा च ॥ १ ॥

केन्द्रेषु सौम्या यदि वृद्धिभाजः पापाः कलत्रे च मनुष्यराशिः ।
राज्ञी भवेत स्त्री बहुकोशयुक्ता नित्यं प्रशान्तारिमुखेन पुष्टा ॥ २ ॥

एकोऽपि जीवो स्ववर्गशुद्धः केन्द्रे यदा चन्द्रनिरीक्षितश्च ।
राज्ञी भवेत् स्त्री सुधनात्र जाता वरेभदा नार्द्रनितम्बदेशा ॥ ३ ॥

लाभाश्रितः शीतकरो भृगुश्च कलत्रगः सोमसुतेन युक्तः ।
जीवेन दृष्टः कुरुतेऽत्र राज्ञीं लोके स्तुतां बन्दिजनेन नित्यम् ॥ ४ ॥

बुधो विलग्ने यदि तुङ्गसंस्थो लाभाश्रितो देवपुरोहितश्च ।
नरेन्द्रपत्नी वनितात्र योगे भवेत प्रसिद्धा धरणीतलेऽस्मिन् ॥ ५ ॥

तृतीयगः सोमसुतोऽम्बुसंस्थः षड्वर्गशुद्धो यदि देवमन्त्री ।
मूर्तौ भृगुः पार्थिवसंमतां च करोति नारीं बहुवाजिवृन्दाम् ॥ ६ ॥

कर्कोदये सप्तमगे शशाङ्के चतुष्टये पापविवर्जिते च ।
राज्ञी भवेद्भूरिगजाश्वयुक्ता पतिप्रधाना विजितारिपक्षा ॥ ७ ॥

षड्वर्गशुद्धैस्त्रिभिरेव राज्ञी चतुर्भिरीशस्य तथैव पत्नी ।
पंचादिभिर्देवविमानभाजा त्रैलोक्यनाथप्रमदा तथा स्यात् ॥ ८ ॥

तुङ्गाश्रिते शीतकरे सुखस्थे जीवेन दृष्टे परिपूर्णदेहे ।
विद्याधरी चात्र भवेत् प्रधाना राज्ञी जितारिर्बहुपुत्रपौत्रा ॥ ९ ॥

---

ABCDIS

1b यशस्ववर्गे C 1c °मूर्ध्नि ABCDI ऽत्र om. B, ऽपि D, च CI 2c=3c in S 3c सुधमा C वरे सदा BCD 4d स्तुतीं ABCDI बंदिवरैः सदैव S 5a बुधे ABCDI °संस्थे ABDI 7a समगे—8c °देवविº om. A 8d त्रिलोक्य° B °नाथो CS 9d जितारी cod.

स्वक्षेत्रगः सोमसुतोऽम्बुसंस्थः षड्वर्गशुद्धः सुरराजमन्त्री ।
शुक्रेण दृष्टः प्रमदां प्रसूते राज्ञीं महाशब्दसमन्वितां च ॥ १० ॥

वक्रस्तृतीये रिपुसंस्थितो वा षड्वर्गशुद्धो रविजश्च लाभे ।
स्थिरे विलग्ने गुरुणा च युक्ते राज्ञी भवेत् स्त्री पतिवल्लभा च ॥ ११ ॥

आयस्थितस्तीक्ष्णकरः स्वतुङ्गे मूर्तौ शशाङ्कः परिपूर्णदेहः ।
सौम्योऽम्बरस्थः कुरुते च राज्ञीं पतिप्रधानां बहुपुत्रपौत्राम् ॥ १२ ॥

षड्वर्गशुद्धे दिवसाधिनाथे तृतीयगे सूर्यसुते रिपुस्थे ।
भवेच्च जाता प्रमदासु राज्ञी धर्मप्रधाना पतिवल्लभा च ॥ १३ ॥

स्थिरे विलग्ने रसवर्गशुद्धे सौम्येन युक्तेऽथ वीक्षिते च ।
तुङ्गाश्रिते चैकतमेऽत्र राज्ञी नरेशवृन्दानुगता सदा स्यात् ॥ १४ ॥

इति श्रीवृद्धयवने स्त्रीजातके राजयोगाध्यायः ॥

---

ABCDIS

10a स्वक्षेत्रवर्गः CD स्वसंस्थः CDI, प्यसंस्थः A, च संस्थः B 11a °स्तृतीयो cod. 12b पतिपूर्ण° AD 14a षड्वर्ग° S 14c च DS 14d यदा ABCDI col. श्री° om. S स्त्रीजातकाध्यायः S

# त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

प्रियंवदः सत्यपरः प्रगल्भः सौभाग्ययुक्तः प्रमदाप्रियश्च ।
जातोऽश्विनीषु प्रभवेन्मनुष्यः सुभूषणासक्तमनाः सदैव ॥ १ ॥

क्रूरस्वभावः सुखलः कृतघ्नश्चलः कृशाङ्गः परदाररक्तः ।
नृशंसकर्मा परवित्तलुब्धो भवेन्मनुष्यो भरणीषु जातः ॥ २ ॥

क्षुधार्दितः पापमतिर्नृशंसो बह्वाशिनः सत्यधनैर्विहीनः ।
वृथाटनः स्यात् परसेवकानां कठोरवाचस्त्वथ कृत्तिकासु ॥ ३ ॥

धर्मप्रधानो निपुणः सुशीलः प्रियंवदः शास्त्ररतः सुखाढ्यः ।
स्याद्रोहिणीषु प्रवरः कुलस्य पुमान् विवेकी रतलालसश्च ॥ ४ ॥

शय्यासनाच्छादनभोजनाढ्यो भवेन्मनुष्यो विषमप्रधानः ।
सौम्यः सुरूपो नृपकृत्यदक्षः सदानुरक्तो गुणिनां गणेषु ॥ ५ ॥

क्षुद्रात्मकः कान्तियशोविहीनः स्वबन्धुयुक्तः प्रमदाजितश्च ।
आर्द्रासु कोपोपहतः कृतघ्नो भवेन्मनुष्यः प्रियसाहसश्च ॥ ६ ॥

दाता विभुः शास्त्रकथासु दक्षः प्रभूतमित्रः सततं प्रगल्भः ।
पुनर्वसौ स्यान्मनुजः प्रतापी विचक्षणः पार्थिववल्लभश्च ॥ ७ ॥

सम्पूर्णगात्रः सुभगः प्रसन्नः स्वधर्मरक्तः पितृमातृभक्तः ।
भवेन्मनुष्यश्च चतुष्पदाढ्यः पुष्ये प्रसूतः प्रणतो द्विजानाम् ॥ ८ ॥

ABCDIPS

1d सभूषणा° ABCDIP 2a कृतज्ञ° ABIP 2b कृशांगः om. A, कृशालः BI 2c परविप्र° cod. 3a सुधा° BCDIP 3d °स्तथा I कृष्णकालु BI, कृष्णकायः CDP 4a निपुनैः IP 4d विताकी D, वितकी BCIP 5c सरूपो CDIP नृपकुस्य° ABCIP, नृपकुक्ष° D 5d गुणेषु S, सुरूपां ABCIP, सरूपां D 8b °रिक्तः BCI

दुष्टस्वभावः परवित्तहारी मलिम्लुचः प्राणिवधानुरक्तः ।
सार्पे प्रसूतः प्रभवेन्मनुष्यो वृथाटनः कामनिपीडिताङ्गः ॥ ९ ॥

पित्र्ये कृतघ्नः परुषस्वभावो भवेन्मनुष्यः सुकृतार्थहीनः ।
मायापदुर्गुह्यरुगार्तदेहः सदा खलः प्राणिविवेकदक्षः ॥ १० ॥

उग्रस्वभावः प्रचुरप्रकोपः सदा वधं वांछति ।कः करालः ।
प्रपंचशीलः स्मरसम्प्रयुक्तो भाग्ये नरोऽनन्तपरः प्रसन्नः ॥ ११ ॥

सत्येन युक्तश्च महाप्रगल्भो नरो मनस्वी भवति प्रधानः ।
दाता कृपालुः सुतरां विदग्धः प्रियातिथिः कीर्तिविवर्धनश्च ॥ १२ ॥

हस्ते नरः पुण्यवसासमेतः सौभाग्यगान्धर्वरतो नयज्ञः ।
उदारचेष्टो नृपतेरभीष्टः सदानुरक्तः सुरविप्रकार्ये ॥ १३ ॥

चित्रा विचित्राम्बररत्नभोगी भवेन्मनुष्यः प्रणतारिपक्षः ।
स्वरप्रतापी सुतरां नयज्ञः प्रसन्नचेताः सततं विधिज्ञः ॥ १४ ॥

वायव्यभे भूतियुतो मनुष्यो भवेत् सुरूपो वनितास्वभीष्टः ।
प्रभूतलाभः प्रथितः कृतज्ञः स्वाध्यायसक्तः सततं विधिज्ञः ॥ १५ ॥

इन्द्राग्निदैवेऽग्निक्रियाप्रसक्तो धातुप्रवादी निपुणः प्रकामः ।
कुस्त्रीषु रक्तः सुधिया विहीनो हितः परेषां भयसंयुतश्च ॥ १६ ॥

धीरोऽटनः स्थिरसुहृत् परदेशगामी क्षुधासुखी विविधरत्नसुखार्थभोक्ता ।
जात्यार्थतो यशसि तेजसि च प्रकृष्टो धमार्थवान् सुहृदमित्रकरश्च मैत्रे ॥१७॥

ABCDIPS

9a परिवीत° IP  9d कर्म° S  10a पित्रे BI, पैत्र S, पित्त CDP, पित्र A  पुरुष° I  10b मनुष्यो हि सुतार्थ S  10d प्राण° BCDIP °वधक° AS, °वैक° BI  11b शाछशिकः S  11d वरो IP ऽनन्तपरः om. A  12b प्रभावी D, प्रभावः CP  12d कांति° A  13a पुण्यवंशः S  14c स्वरे ABC  15b सरूपो AD  15c प्रसूत° D  15d प्रभया समेतः S  16a °दैवा° CDIPS °प्रशस्तो CDP  17a नटः I स्थिरसुकृत् I, सुकृत् CDP  17b क्षुधी D °रक्त° P, °सुखार्थि° BCIP  17c यशीशि ABP जासर्वतो CDP  17d मैत्रे om. CDP, मात्रे BI

शाक्रे नरः शौर्यधनैः समेतस्तथा सुशीलः सुरपूजिताङ्गः ।
उत्साहयुक्तः सततं सगर्वः सुसंयुतस्त्रासकरः परेषाम् ॥ १८ ॥

मूले सुमानी नृपतुल्यवित्तो भोगानुरक्तो व्यसनैर्विहीनः ।
प्रियात्मजः स्त्रीदयितः सुताढ्यो जितारिपक्षः क्षतपापसंघः ॥ १९ ॥

आप्ये प्रियापानरतस्तपस्वी महांश्च वेत्ता रिपुलोकपूज्यः ।
विद्वान्स्वनीत्यर्थकरानुरक्तो जितेन्द्रियश्च प्रचुरप्रभावः ॥ २० ॥

वैश्वे मनुष्यः कृपया समेतो भवेत् प्रचण्डो रणलब्धकीर्तिः ।
दाता प्रभुः कृत्यपरोऽर्थयुक्तः सुश्रामयुक्तः पशुसंयुतश्च ॥ २१ ॥

श्रुतानुरक्तः श्रवणे मनुष्यस्तपः प्रशंसासु सदानुरक्तः ।
धनाभिक्षीणः पशुपुत्रदायी भृत्यार्थयुक्तः प्रणतानुकूलः ॥ २२ ॥

धनी धनिष्ठासु भवेत् प्रसूतो नरो निरीहो नत एव लोके ।
धर्माधिकः सत्यदयाभियुक्तः प्रभूतभृत्यः सततं च दाता ॥ २३ ॥

भवेन्मनुष्यः खलु वारुणे भे वाताधिकः श्लेष्मयुतो दुगपः ।
भयैः समेतः सुतरां कृतघ्नो विदेशसेवी निजबन्धुहीनः ॥ २४ ॥

अजे जितारिर्जितपापपूगो भवेन्मनुष्यः श्रुतसौख्यभागी ।
स्वदाररक्तः परदारबाह्यो विनीतवेषो विगतारिपक्षः ॥ २५ ॥

---

ABCDIPS

18b °पूजितांतः cod. 18d °स्त्रीस (सु S)करः cod. 19a मूलेषु मानी cod. 19d °संगः S 20a आपे BIP, अपि C श्रिया° I °पानपर AI 20c विधा° BCDIP °करासुरक्तो CDP 21a विश्वे CIP 21b °लुब्ध° ABCDIP 21c °परोष° CDP, °परोष्य° B 22b प्रशंसाम ABCIP, °प्रशंसोस S 22c सतामर्भाष्टः om. A °पुत्रदागां(गं D) CDP, °पुत्रहागां ABIS 23d प्रभूतमृत्युः CDIP 24a वारणे BS, तारुणे CP मे om. I 25a °पूर्णो ABCD 25b भवेन्मनुष्यः om. P 25d विनीतवेषो om. B

जातस्त्वहिर्बुध्न्यगते शशाङ्के नरः प्रधानश्च कुलस्य मध्ये ।
उदारचेष्टः प्रचुरान्नपानः सुधर्मशीलः प्रभवेत् सुदीर्घः ॥ २६ ॥

पौष्णे प्रसिद्धः सचिवो नृपाणां भवेन्मनुष्यः सततं प्रहृष्टः ।
आरामवापीविपिनानुरक्तः सुविज्ञया जीवितदुष्टलोकः ॥ २७ ॥

इति श्रीवृद्धयवने नक्षत्रगुणाध्यायः ॥

ABCDIPS

27a नराणां D    27c °विपिला° BCIPS, °विपना° D    col. श्री° om. S

# त्रिषष्टितमोऽध्यायः (अधिकः—२) ॥ ६३B ॥

लग्नस्य भागे नवमे विवस्वान् नरं प्रसूते विजितं खलं च ।
नीचानुरक्तं वृजिनैः समेतं जिह्मस्वभावं सततं सुशीलम् ॥ १ ॥

नवांशको रात्रिपतेर्विलग्ने करोति मर्त्यं बहुशोकनिन्द्यम् ।
कृष्याप्तवित्तं सुतसौख्ययुक्तं प्रियातिथिं सर्वजनप्रियं च ॥ २ ॥

नवांशको भूमिसुतस्य लग्ने करोति मर्त्यं बहुदुःखयुक्तम् ।
पित्तज्वरातृट्परिपीडिताङ्गं प्रतापहीनं सततं कुचैलम् ॥ ३ ॥

लग्ने नवांशः शशिनन्दनस्य करोति मर्त्यं बहुकीर्तियुक्तम् ।
मेधाविनं सर्वसुखर्द्धिभाजं विवेकिनं पण्डितमल्पवैरम् ॥ ४ ॥

नवांशको देवपुरोहितस्य लग्ने विधत्ते सुतवित्तशस्यम् ।
† नरातिगावः कनकं हयाजः सदा नराणां नृततेश्च पूजाम् ॥ ५ ॥

नवांशको भार्गवनन्दनस्य लग्ने विधत्ते बहुवस्त्रभोगान् ।
धर्मक्रियासिद्धिपरोपघातं दीर्घाङ्गनासङ्गसुखं सदैव ॥ ६ ॥

नवांशकः सूर्यसुतस्य लग्ने नृणां विधत्ते बहुभूमिनाशम् ।
अर्थक्षयं व्याधिमनन्तमुग्रं प्रमोषणं चौरकृतं सदैव ॥ ७ ॥

सूर्यांशको वासरपस्य लग्ने नरं प्रसूते बहुमन्युवश्यम् ।
लौल्यान्वितं धर्मसुतैर्विहीनं निस्त्रिंशमुग्रं चपलस्वभावम ॥ ८ ॥

सूर्यांशको रात्रिपतेर्विलग्ने करोति मर्त्यं बहुरत्नभाजम् ।
नानार्थलाभैः सहितं सुशीलं कुलप्रधानं बहुमित्रयुक्तम् ॥ ९ ॥

---

ABCDIPS ( LXIII-B=XXIV 22-48)

2a-b in marg. D 2c कृशा° BCDIP 3c °ज्वरासृक्परि° AS 4c-21d °के om. D 5c नरो तिगावः सततं हयाजः ABI, नरो तिमान्यः बहुपुत्रभाजं CP 6d °संघसुखं CIP 7d प्रपोषणं CP 8b °मन्युयुक्तं CP 8d निस्तृंषा° ABCIP

# त्रिषष्टितमोऽध्यायः (अधिकः—१) ॥ ६३A ॥

[ लग्नेऽर्कदृष्टे सुनृशंसचेष्टो भवेन्मनुष्यः परुषस्वभावः ।
सदाभिमानी नतिधर्मवृत्तो रुजान्वितो द्वेषरतः सुभीतः ॥ १ ॥

चन्द्रेक्षिते धर्मपरो मनुष्यो भवेद्विलग्ने वरयानभागी ।
स्त्रीभोगभोगी प्रभया समेतः प्रियंवदः शास्त्रकथानुरक्तः ॥ २ ॥

कुजेक्षिते श्लेष्मविकारदोषैः सम्पीड्यते रक्तसमुद्भवैश्च ।
लग्ने मनुष्यः परिभूतदेहः सदातुरः शास्त्रसमन्वितश्च ॥ ३ ॥

बुधेन दृष्टे सुरसत्यभागी भवेन्नरः सत्यपरः सुशीलः ।
नरेन्द्रपूज्यः प्रथितः प्रसन्नः प्रियंवदो दानपरोऽल्पकोपः ॥ ४ ॥

लग्ने सुरेज्येन विलोकिते च भवेन्नरो रत्नगजाश्वभाजः ।
नानार्थलाभैः सहितः प्रगल्भः प्रधानसेव्यो द्विजदेवभक्तः ॥ ५ ॥

शुक्रेक्षिते सत्यपरो मनुष्यो भवेन्नरः पुण्यपरः कृतज्ञः ।
यज्वा विवेकी सुदृढः प्रतापी हतारिपक्षः प्रणतः प्रसन्नः ॥ ६ ॥

सौरेण दृष्टेऽल्पसुखो विलग्ने भवेन्मनुष्यो भयसङ्कुलात्मा ।
रोगान्वितः स्वल्पसुतोऽल्पवित्तो नीचानुरक्तः सततं कृतघ्नः ॥ ७ ॥

**इति श्रीवृद्धयवने लग्नदर्शनचारः ॥**

ABCDIPS ( LXIII-A = XXXVI )

1b पुरुष° AC  1c नत° ABCDIPS  1d वंशा° ABCDIP सुभातः I, सुभीकः AS, परांसुकः CDP, सुकः B  3d °स्त्रीषुसम° S  4d त्पकालः I  6b भवेत्सदा S  कृतघ्नः A  6c यज्ञा I, यज्ञे ABCDPS  7a °सुखी S  7b °संकुलश्च ABCDPS  7c °स्तुल्यसुतो D, °स्तुल्ययुतो BCP, °स्तल्ययुतो S  col. श्रीवृद्धयवने om. S  श्री° om. B  लग्नदर्शनाध्यायः D

सूर्यांशको भूमिसुतस्य लग्ने नरं प्रसूते रुधिरामयाढ्यम् ।
पामादिरोगैर्व्यसनैः समेतं प्रपंचयुक्तं रणकातरं च ॥ १० ॥

सूर्यांशकः सोमसुतस्य लग्ने नरं प्रसूते सुभगं सुशीलम् ।
विद्यासु रक्तं गुरुलोकभक्तं परैरधृष्यं रतलालसं च ॥ ११ ॥

सूर्यांशको देवपुरोहितस्य करोति मर्त्यं बहुशास्त्ररक्तम् ।
जनानुरागेण युतं विनीतं प्रभूतमित्रं रणकोविदं च ॥ १२ ॥

सूर्यांशको भार्गवनन्दनस्य लग्ने प्रसूते सुभगं मनुष्यम् ।
रूपान्वितं पार्थिवमानयुक्तं प्रियातिथिं पुत्रधनैः समेतम् ॥ १३ ॥

सूर्यांशको भास्करनन्दनस्य नरं प्रसूते रणरोगयुक्तम् ।
नरं कुशीलं निजबन्धुहीनं शोकार्दितं हानियुतं सदैव ॥ १४ ॥

त्रिंशांशको भूमिसुतस्य लग्ने करोति मर्त्यं व्यसनाभिभूतम् ।
व्यपेतशीलं बहुवैरयुक्तं प्रपूजितं भूपतिना सदैव ॥ १५ ॥

त्रिंशल्लवः सूर्यसुतस्य लग्ने करोति मर्त्यं परदेशरक्तम् ।
क्षुत्तृट्क्षमार्तं बहुरोगयुक्तं स्त्रीणामभीष्टं प्रणतारिपक्षम् ॥ १६ ॥

॥ १७ ॥

---

**ABCIPS**

10c प्रमादि° BI 11d °रत्रृष्यं A, °रदृल्यं CP, °रद्रव्यं S, °रद्रयं I तरलालसं I, रत्नभालसं S 12c °रोगेण I 13c °मानभाजं S 14b °मुक्तं BCIP 16b परदेशयुक्तं A, सररेसरक्तं, S, सररेसयुक्तं CP, सरैसयुक्तं, B, सुनरेसयुक्तं I

17 om. cod.; CP provide:

त्रिंशांशको देवपुरोहितस्य लग्ने यदा राज्यधरो धनाढ्यः ।
सुरूपदेहो गुणवान् सुभाषी धर्मप्रियो दीर्घसुनेत्रगौरः ॥

I has: त्रिशत्रवः देवगुरोरु प्रसूते लग्ने यदा सर्वकलाप्रपूर्णः ।
निरोगदेह बहुशास्त्रवादी महत्प्रतिष्टा धनध्यान्ययुक्तं ॥

त्रिंशांशकः सोमसुतस्य लग्ने नरं प्रसूते सुखिनं समृद्धम् ।
सुतीर्थयुक्तं प्रियबन्धुमान्यं † प्रवारितं धर्मपरं सलज्जम् ॥ १८ ॥

त्रिंशांशको भार्गवनन्दनस्य लग्ने प्रसूते सदयं मनुष्यम् ।
लज्जाधिकं सत्यपरं कृतज्ञमुदारचेष्टं बहुलाभयुक्तम् ॥ १९ ॥

लग्नं यदा स्थानबलेन युक्तं तदा नृणां स्थानविवृद्धिदं स्यात् ।
करोति पूजां नृपलोकजातां सौभाग्ययुक्तं च कलत्रजातम् ॥ २० ॥

लग्नं यदाशोत्थबलेन युक्तं तदा प्रसूते गुणिनं मनुष्यम् ।
सर्वासु दिक्षु प्रकरोति लाभं रोगारिनाशं प्रियतां च लोके ॥ २१ ॥

चेष्टाबलाढ्यं प्रकरोति लग्नं नृणां सुचेष्टां प्रियवित्तलाभम ।
मिष्टान्नपानं विविधं च लोके चतुष्पदानामधिपत्यतां च ॥ २२ ॥

लग्नं यदा कालबलेन युक्तं तदा नराणां प्रियलाभकारि ।
सदा नृपूजां नृपतेः मलाभं रोगक्षयं साधुजनेन सख्यम् ॥ २३ ॥

लग्नं यदा स्थानबलेन हीनं तदा प्रसूते परदेशरक्तम् ।
स्वस्थानविद्वेषपरं सुजिह्मं परान्नरक्तं परदाररक्तम् ॥ २४ ॥

आशाबलोनं प्रकरोति लग्नं धान्यार्थहानिं सततं नराणाम् ।
प्रमोषणं तस्करचारकाद्यैः पराभवं शत्रुकृतं सदैव ॥ २५ ॥

ABCDIPS

18a सूर्यसुतस्य BI     18b-d in CP are:

गुणानुरागी वपुक्लिन्नगात्रः ।
रामानुयायी च दृढा च वाणी
आ जन्मतुल्यं सदृशो मनुष्यः ॥

18c सुतार्थ° AB, सुहार्थ° I     18d प्रवारितं om. A     19b=18b in S     19c हतज्ञ° I     20b °वृद्धदं C     20c °लोकभाजां A, °लोकपूजां BCIP     22b प्रियतां च लोके ABCDIP     22c विविधां ABCDIP     23c सुलाभं S     24d °दार° om. A °भाजं S     25c °वारकाद्यैः cod.

चेष्टाबलोनं प्रकरोति लग्नं नृणां कुचेष्टाः परदारजाताः ।
कुचैलतां शोकमनन्तरोगं स्वबन्धुवैरं परतर्ककत्वम् ॥ २६ ॥

लग्नं यदा कालबलेन हीनं नरं तदा हीनतरं प्रसूते ।
विधर्मशीलं विगताभिमानं श्लेष्मार्दितं चौरविवर्जितं च ॥ २७ ॥

इति श्रीवृद्धयवने लग्नचाराध्यायः ॥ ]

ABCDIPS

26b-d om. CDP 26d °तर्ककं च S, °तर्कुकं च AB 27a लग्नं ] एवं CDP col. श्री° om. S लग्नचारः समाप्तः S

# चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

एतद्यदुक्तं ग्रहजं समस्तं शुभाशुभं तत्सुधिया प्रगम्यम् ।
शरीरचिह्नैरधुना ब्रवीमि जडात्मकार्थे शकुनैर्निमित्तैः ॥ १ ॥

न वीक्षते यः पुरुषो द्युमार्गे वसिष्ठभार्यां च तथा च वत्साम् ।
षण्मासमग्रे प्रवदन्ति तस्य संजीवितव्यं पठनप्रतापाः ॥ २ ॥

अवीक्ष्यमाणो ध्रुवमम्बरेशं विष्णोः पदान्तं क्षितितारकं च ।
संजीवतेऽब्दद्विभिराकृतौजा विनष्टचित्तो मनुजः सुदीनः ॥ ३ ॥

यो वीक्षते मातृगृहं † च उल्कां यायित्यमानं च शनैश्चरं च ।
व्यभ्रे च वै पूर्णशशिं विरश्मिं संजीवते वत्सरमर्धहीनम् ॥ ४ ॥

यः खण्डभास्करं पश्येद्रश्मिहीनमथापि वा ।
उल्कया हन्यमानं वा स जीवते दिनत्रयम् ॥५॥

शक्रायुधं पश्यति यो निशायां दिवा च भानि प्रभया युतानि ।
स मासमेकं मनुजोऽत्र लोके संजीवतेऽसौ विभवैर्विहीनः ॥ ६ ॥

दृष्ट्वा च काकं सुरतप्रसक्तं मार्जारकं वा द्विरदं च मर्त्यम् ।
मासद्वयं जीवति दुःखयुक्तः सर्पं च सिंहं सरभं शृगालम् ॥ ७ ॥

† पश्यर्षभो बर्हिं च पीयते गो स्वयं च वा गो पिबते स्वदुग्धम् ।
मासत्रयं वर्षयुतं पुमांश्च संजीवति स्म स्वजनाभिभूतः ॥ ८ ॥

ABCDIPS

2a द्युमार्गे BCP 2b °भावं S, °णा/भार्या C तथापवत्सां ABCDIP 2c परमास° AB 2d संजीवतव्यं ABCDIP °प्रतापः CP, °प्रपातः AS, °व्रतायः I, °प्रतापं D 3a °माणे ABCDS °मंव्यरेषं BI, °मेव्यरेषां D, °मंत्यरेषां C, मव्यरेषं P 3b विभो CDP, विलो BI 3c संजीविते BIPS द्वाद्विभि° ACD, ब्दाद्विभि° BIPS °र्ह्रकृतौ° cod. 3d °वनिष्ट° ABI, वरिष्ट° CDP 4a वीक्ष्यते BDS 4c वत्रे CDP 4d संजीविते ABIS, विजीहिते CDP °मूर्द्ध° CDP 5d जीविति BCIP, जीवि A 6b भानि om. BCDIP 7c दुःख° om. P 8c पुमसिं IPS, पुमां ABCD

कबन्धमालोकयतेऽम्बरस्थं यो राक्षसं वाथ पिशाचकं वा ।
मासाष्टकं जीवति तत्परः सः प्रभूतकोशाकुलितो मनुष्यः ॥ ९ ॥

रात्रावुलूको गृहमूर्ध्निसंस्थो यस्य प्रवारं कुरुते त्रिवारम् ।
संवत्सरेण प्रददाति मृत्युं नरस्य तस्याद्भुतरोगपार्श्वात् ॥ १० ॥

गृध्रो यदा वायसपोतको वा शिरः समारोहति यस्य पुंसः ।
स सप्तमासाद्बहुदुःखभागी जीवेत्ततो वाथ कपोतकश्च ॥ ११ ॥

खण्डं पदं यस्य नरस्य पङ्के नरं प्रदत्तं ह्यथवा च धूल्याम् ।
संवत्सरार्धं प्रवदन्ति तस्य शंसन्ति शास्त्रार्थविदां वरिष्ठाः ॥ १२ ॥

व्यङ्गं समालोकयति क्षणं यश्छायापुमांसं शनिजप्रसूतम् ।
अङ्गाधिकं वा सकलं न पश्येत् स मासमेकं पुरुषोऽत्र जीवेत् ॥ १३ ॥

आदर्शके वा घृततैलमध्ये न पश्यति स्वं वदनं नरो यः ।
व्यङ्गं समालोकयति स्म जीवेत् षण्मासकं वा बहुहीनरोगः ॥ १४ ॥

संजायते यस्य नरस्य गात्रे कुगन्धवक्त्रं व्रणवर्जितं च ।
वर्णस्य नाशं † सुमरो न बाह्यं स वर्षमेकं यदि जीवति स्म ॥ १५ ॥

यो नासिकाग्रं न नरः प्रपश्येज्जिह्वाग्रभागं न च पृष्ठिभागम् ।
स जीवते वर्षमिति प्रदिष्टं महामुनीन्द्रैर्यवनप्रधानैः ॥ १६ ॥

---

ABCDIPS

9c सामाष्टकं AC 9d प्रभूतशोका° AS 10b त्रिरात्रं S 10d तदाद्भुत° ABD 11a वीग्रसर्पातको D 11d जीवेथतो cod. 12a यस्य भवेन्नरस्य S 12b पंके प्रदत्तं S 12d वरिष्टः ABCDIP 13a व्यंगे cod. समालोपयति, I समान्वो-ऽयति CP, समाचोपयति D, समानोपयंति B 13b वाया° AD °प्रसूते ACD 13c अंगाधिको ABCDIP 14a-c om. BCDIP 14b पश्यते A 14c स AS 14d स मासकं CDIP, सकं B 14d वा—16aयो om. A 14d वा om. BCD वद° BCIP वंदर° D 15b वर्ण° B 15c वर्षस्य BCDIP न] म CDIPS 15d सर्वस्वमेकं BCDIP स्म] तु S 16a च नरो न पश्येत् S 16b जिह्वाय° BCDIP 16c जीवति ABCDS 16d °नींद्र°—17c मास° om. B 16d °प्रभावैः ACDIP

स्नातस्य यस्याशु करौ च पादौ संशुष्यते † वत्सहितौ नरस्य ।
स मासमेकं शरदं च जीवेत् पिपासितस्या†ह्वतेऽथवा हि ॥ १७ ॥

वामाङ्गभागः स्फुरते नरस्य यस्याक्षियुग्मं सततं त्रिरात्रम् ।
मासत्रयं जीवति तत्परे सः † क्षनार्तबन्धुप्रभुमस्य यानः ॥ १८ ॥

पुरीषमूत्रं कुरुते प्रभूतं यः स्वस्थताढ्योऽपि नरः स जीवेत् ।
संवत्सरार्धं प्रभुताशनो वा भवेदकस्मान्मरणं नरस्य ॥ १९ ॥

मित्रैर्विरोधं कुरुते पुमान् यो मैत्रं द्विषद्भिः पतितैश्च हीनैः ।
स जीवभागी भवतीह वर्षं विद्वेषकोपश्च सुरद्विजानाम् ॥ २० ॥

आरुह्य कृष्णं महिषं नरो यः स्वप्ने प्रगच्छेद्दिशि दक्षिणस्याम् ।
संवत्सरार्धं स च जीवते स्म खरोष्ट्रगोभारवणाश्रयो वा ॥ २१ ॥

स्मितं घुषं यः पुरुषं प्रपश्येत् स्वप्ने विवस्त्रं † प्रसनं न दत्तम् ।
विहीनकेशं स च जीवते स्म मासद्वयं द्वादशरात्रियुक्तम् ॥ २२ ॥

यो मज्जनेऽप्यम्बुवहस्य मध्ये स्वप्नेऽथवा स्याद्दशनैर्विहीनः ।
केशैश्च शेषे रजनीविभागे स जीवते मासयुतं त्रिरात्रम् ॥ २३ ॥

कृष्णाङ्गनालिङ्गति यं मनुष्यं स्वप्ने विवस्त्रा स्मितमायधाग ।
कृष्णाम्बरा वा स हि मासमेकं संजीवते पंचदिनैः समेतम् ॥ २४ ॥

ABCDIPS

**17a** यस्य शु IP यस्य सु ACDS　**17b** संशुष्यतः.. सहितौ S　**17d** °स्याह्वते D　थवां हि IPS, थि चाहि D　**18a** स्फुरति S　**18b** °युक्तं S　**19a** पु (सु D) राशमूर्तं BCDIP　प्रसूतं P　**19b** °ताढ्यो cod.　जीवे IP　**20b** मित्रं ABCDIP　**21b** स्वप्न IP　प्रज्ने S　**21c** च म I　**21d** °रवटाश्रियो S　**22a** स्मिते BS　घुषं CDP, गुम्नं BIS, पुम्न A　पहषं CDIP　**22b** म्वस्नं IP, खस्नं D　दंतिं D　**22d** °रात्र° IP, °तन° S　**23a** यंवत्रस्य A, यंन (च om. S) वहस्य PS, यं-वअस्य I, य-बहुहस्य B, यो मज्जनस्य D, यं °वज्जनस्य मध्ये° C, तु गजोत्थयानं in marg. C　**23b** °शंगे° c d.　**24a** कृष्णांगना° AS, कृष्णांमा° BCDIP　**24c** कृष्णांबरा om. A　°बरं BCD　**24d** °तं–25c जीव° om. B

यस्तास्यते वस्त्रविवर्जिताङ्गैः स्वप्ने नरो योऽसितवस्त्रकैर्वा ।
स जीवभागी मुनिभिः प्रदिष्टः संजीवते † याव दिनानि विंशत् ॥ २५ ॥

भस्माङ्गदिग्धस्तु भवेन्नरो यः स्वप्ने हि वा गच्छति दक्षिणाशाम् ।
स मासमेकं दिनसप्तयुक्तं स जीवभागी मुनिवाक्यमेतत् ॥ २६ ॥

योऽभ्यङ्गयुक्तं निजगात्रमेव प्रदृश्यति स्वक्षिविभूषितं वा ।
प्रभूतमानं त्वथवा सहास्यं स वर्षमात्रं यदि जीवभागी ॥ २७ ॥

ताम्रस्य पात्रं कुरुते नरो यः स्वप्ने विवस्वान् प्रहसान् विकेशः ।
रक्ताम्बरो वा दिशि दक्षिणस्यां प्रयाति सः स्याद्दिवसार्धजीवी ॥ २८ ॥

स्वप्ने निशान्ते पतति स्म कूपे पङ्केऽथवा तैलघृतस्य मध्ये ।
मासत्रयं पंचदिनैः समेतं स जीवभागी मनुजोऽत्र भावी ॥ २९ ॥

ऋक्षैः सृगालैरथ शूकरैर्वा यस्तास्यते मद्गुकपिंजलैर्वा ।
स्वप्ने निशान्ते तु ततस्त्रिरात्रं स जीवते मासयुतं मनुष्यः ॥ ३० ॥

स्वप्ने बिडालं यदि कृष्णवर्णं प्रपश्यति स्वाङ्गविभागलग्नम् ।
नरस्त्रिगात्रं नवमासयुक्तं स जीवति स्मार्थसुतैर्विहीनः ॥ ३१ ॥

दोलाविरूढः पुरुषो निशान्ते करोति नृत्यं यदि वाथ गीतम् ।
स्वप्ने न देशाल्लभतेऽङ्गवासं स दूरजातैर्विभवैर्विहीनः ॥ ३२ ॥

---

ABCDIPS

25a वस्ताधने AI, वं:धनं D, वाभ्रा (भ्रा om. P)धने CP 25b रापित° AIS, दापित° CP, पत° D 25d संजायते S 26a °दिग्वस्त्र ABCDIP 26b स्वप्ने सरोहवावां कृति S हवा ABCDIP 27b °दश्यति I, °दस्यति D, °पश्यति S स्वाक्षि° S स्ताक्षि° ABCD, स्राक्षि° IP 27c प्रभूल्य° ABI, प्रभृत्य° S सहस्यं cod. 27d सर्वेर्श° BI, सर्वस्य° CP यजि IP 28a नाम्न (म्य P, क्या D स्य BCDP, corr. to मासस्य C 28b विवस्व cod. प्रहसन् cod. 28d प्रियाविश BCDIP 29a प्रहति cod. 30b यस्ता (स्व CDP) न्यमेत (य AC, क I) दृष्ठ (द्रु B, ह्र I, वृ D,—P) कियंगलैर्वा cod. 30c शनत° ABCIS,—तृतृ D——त्त° P 31d स्मार्त° BCDP 32a पुरुषो om. DP 32c °ल्लभगे cod. 32d स om. A, सु° S विभवै° om. A, विसवै° P

यश्चक्रसंस्थं: निजदेह†वद् भूमं प्रपश्येत् † स्वप्ने प्रपन्नः ।
विदेशवासं लभते स मर्त्यः पराभवं सामकृतं महान्तम् ॥ ३३ ॥

यो यन्त्रमारूढमवेक्षते स्म निजं शरीरं च प्रसुप्त†मार्गम् ।
स वित्रिमासे तु समे प्रवासं समश्नुते बन्धुजनेन सार्धम् ॥ ३४ ॥

यः कृष्णसर्पेण सुदारुणेन सन्दंश्यते स्वप्नपथं प्रपन्नः ।
सम्पीड्यते भूपतितो मनुष्यो वृकेण वा भूतपिशाचकेन ॥ ३५ ॥

यो हन्यते कृष्णनरैः सुरेन्द्रैः स्वप्नेऽथवा वायसमंघसंघैः ।
सम्पीड्यते रोगशतैर्विचित्रैः परप्रवादैर्निज†प्रभावः ॥ ३६ ॥

यः कण्टकाग्रैः प्रतिभिन्नदेहं प्रपश्यति स्वं मनुजो निशायाम् ।
स्वप्ने स रोगं ज्वरजं प्रभूतं समश्नुते मासयुगस्य मध्ये ॥ ३७ ॥

स्वप्ने नरोऽश्नोत्यदनानि मर्त्यो यः कामिरक्तानि मनोहराणि ।
विस्फोटकानां स भवेत प्रभागी मासस्य मध्ये सरिपुप्रजानाम् ॥ ३८ ॥

यः शुष्कवृक्षं यदि वा स्म शातं समारुहेत्स्वप्नपथं प्रपन्नः ।
स भीतिमासाद्य नराधिपस्य संसेवते रोगशतानि मर्त्यः ॥ ३९ ॥

स्वप्ने नरो यो विदधाति हास्यं द्यूतक्रियां चैव कपर्दकोत्थाम् ।
स हीनकोशः पतिभूपतेः स्म विपक्षसंघैर्गतिदीनचेष्टः ॥ ४० ॥

---

ABCDIPS

33a निजदेहमव° S, निजदेव° CDP, निशदेह्व° A 33b °द्रूमं C, °भ्रमं S, °द्रुमं I, °द्रमं P 33c विवेश° D निदेश° BI, निवेश° CP स om DP 34a °मेहेक्षते CDP 34b-c °मार्गं स वित्रि° om. A 34b मार्गे IP, °मंगी S 34c स वि° om. DP, तु] त्रि° D, नृ° P 35a यः om AB 35b संदश्यते ABCDIP 35c भूपतो DP संपीड्यते]--क्ष(ह D)ते DP 36a हन्य° om. DP 36b थवा om I पयस° ABD गगस° I °शब्दसंघैः S 36d °प्रवामै° DP °र्नित° DIP, °त° S °प्रवाल: C, प्र---P, --D 37c रोमं CDP स्वरजं B 37d °दागस्य CDP 38a श्ये DP वदराणि om. 38b काम° D 39a श्मसानं S 40b ककर्द° D, कर्द° BCIP °कोत्थं ABCDIP

घृतेन गात्रं परिमार्जते यस्तैलेन वा कृष्णविलेपनेन ।
स रोगभागी मनुजोऽद्भुतः स्याद्विहीनवित्तः परदेशभागी ॥ ४१ ॥

गृहे कपोतो मिहिरो मृगो वा यस्याश्रये सङ्कुरुते प्रवेशम् ।
तस्यायुरुक्तं दिवसानि सप्त मासत्रयं भूरिकफार्दितस्य ॥ ४२ ॥

पुष्पान्विताः स्युर्यदि धेनवोऽग्निं मुंचन्ति वासानि तथा निशीथे ।
गच्छन्ति वेगात् प्रविशन्ति मन्दं गृहेऽर्धवर्षं प्रवदन्ति वायुः ॥ ४३ ॥

निरर्गलाः स्युर्यदि लाङ्गलोत्थास्तिलाः खडश्लेषकमाषकाश्च ।
द्विशीर्षका व्रीहियवास्ततः स्यान्मासेन मृत्युर्भवनाधिपस्य ॥ ४४ ॥

शुष्कस्य दारोर्यदि संप्ररोहस्तैलस्य दार्ढ्यं घृतचिह्नितस्य ।
दुग्धस्य रक्तं स्वगुरुप्रतापं नो यस्य विन्द्यान्मरणं नरस्य ॥ ४५ ॥

इति श्रीवृद्धयवने मृत्युज्ञानाध्यायः ॥

ABCDIPS

41a प रे ( र D ) माजने DIP 42a कपोतो ( तो om. A ) इतरो° ABCDIP 42b °श्रयः ABCDIP 42c तस्यायदु ( व B ) क्तं BCDP, तस्या-क्तं I 42d °श्रयो IP °कपर्दितस्य cod. 43a धेनुवा° IP – नि DP 43c प्रवदन्ति ABCDIP 43d चायुः S 44a लांगलोत्थ ( त्वं P ) इछा ( तथा P ) ABCDIP 44b तीलाखधे' ABCI, तीग्धे' D, वी-खधे° P, स्तिलाः स्वध° S °माशकश्च ABIP, °मीशकश्च CD 44c विशीर्षका S °यवासन: BCIPS, °यवासं न AD 45b वार्व्यं P, वार्यं D धृति° CD °चिह्नितश्च S, °चिंति – – – स्य P, चिंत्रिकस्य C, चिंति – – D 45d निंद्या° IP
col. श्री° om. S

# पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

सद्योदितं पश्यति योऽर्कपुत्रं भूम्यात्मजं वा शशिनन्दनं वा ।
स रोगभागीह भवेन्मनुष्यो मासस्य मध्ये धनवर्जितश्च ॥ १ ॥

अङ्गाहतस्यारवमेव यस्य शृणोति † वा यस्य भ्रुवं हि तस्य ।
मासद्वयेनैव धनस्य हानिर्हृद्रोगता स्यात् प्रियविप्रयोगः ॥ २ ॥

कोशात्स्वयं यस्य सुसंयुतोऽपि निष्कामतेऽसिक्षुरिका तथापि ।
तस्याहवः स्याद्दशरात्रमध्ये स्वयं यदि स्यादपि तापसेन्द्रः ॥ ३ ॥

यस्यायुधं प्रज्वलतेऽग्निहीनं सुरक्षितं वा विदधाति भङ्गम् ।
स निर्जितः शत्रुगणेन संख्येदैत्यैर्व्रजेद्यद्यपवृत्तशत्रुः ॥ ४ ॥

यस्याश्वपुच्छानलमस्फुलिङ्गा जयन्ति शत्रोर्गृहमध्यतो वा ।
स पक्ष्मणाभुक्तशरीरदर्पः † कृत्वा समाप्नोति हि वर्षमध्ये ॥ ५ ॥

कण्डूयनं पादतलस्य यस्य तस्य प्रवासो दिनपंचमध्ये ।
भविष्यति वा बहुवित्तनाशः शिरस्य वा बन्धुजनेन वैरम् ॥ ६ ॥

अङ्गं स्फुरत्तीव्रं हि यस्य वामं रूक्षत्वमायाति च सर्वगात्रम् ।
भयं स शीघ्रं लभते मनुष्यो मासस्य मध्ये परलोकजातम् ॥ ७ ॥

**ABCDIPS**

1a सद्यो° BCDIPS, ससो° A क्षिपुत्रं cod. 1b भूम्या असं cod. 1d °वर्जितस्य cod. 2a °स्यानव° ABIS, °न्यानवा° CDP, corr. to °स्यानवा° I 2c हानिं cod. 3a कोशः ABCDIP सुसंयतो S 3b निः° ABCIPS, नि° D, सिक्षुरिता BCDIP 3d त्रयं CDP स्याद्दयि° IPS °तायमेंद्रा CDP 4a °हीनः ACDP 4b भागं CDP 4d °व्रजे ABIS, वंके C, om. DP स्यादपि cod °भृत° DP 5b शात्रा ABCDIP ग्रह° ABI 5c पक्षणा° A 6a कंडूवायुन ABCIS, कंडूवायतो DP गद° DP 6b तस्य om. B 6c त्रा cod. °नाश cod. 6d शिरोथवा cod. 7a स्फुरंतिबर्हि ( हि IS ) cod. वामं om. S

जनापवादं पुरुषस्य कार्यविनाशनं वा भवति श्रमं वा ।
चतुष्पदानां प्रभवेच्च मासं तस्याशु रोगः कलहो भयं च ॥ ८ ॥

गृहे विशालाः कलहा नरस्य यस्य प्रकुर्वन्ति सदा कुशापि ।
श्वानस्तथा तस्य दधन्ति रोगं षण्मासकं चित्रभवेन सार्धम् ॥ ९ ॥

गावो निशायां प्रमदन्ति यस्य वर्त्मेन युक्ता ह्यथ रोमहीनाः ।
बन्धुप्रनाशं प्रवदन्ति तस्य सुबन्धनं वा गुरुशोचनं च ॥ १० ॥

यस्मिन्नुलूको विशते दिने च कपोतको वा चटको मृगो वा ।
चतुष्पदाच्छादनबान्धवानां नाशं विधत्ते सभयं हि तत्र ॥ ११ ॥

मुग्धः कुमारो यदि वा च कन्या ब्रूते कुवाक्यं हि नरस्य यस्य ।
कार्यं विना तद्भवति द्रुतं हि तथा नरस्यापि महाप्रभस्य ॥ १२ ॥

यतोऽथवा स्त्रीयमलं प्रसूते गौर्वा नरस्य प्रभवेद्धि तस्य ।
षण्मासमध्ये विभवस्य नाशं भूपालजं वा भयमुग्रमेव ॥ १३ ॥

सुवर्णनाशं च नरस्य यस्य संजायते वस्त्रनिदाघमेव ।
आर्तास्तथास्यापि भवेत्तु तस्य व्रणाद्भयं देशपरिच्युतं वा ॥ १४ ॥

निद्राधिकस्यापि वसेन्नरो यः कर्त्तास्य रात्रौ पुरुषं विकार्यम् ।
अश्नाति सन्ध्यासमये स भृत्यैर्विपूज्यते बान्धववाहनैश्च ॥ १५ ॥

---

ABCDPIS

8b सवति DS, शवति BI, श्रावभि CP corr. to शवति C 8d तस्यायु cod. कलहं ABCDIP 9b यस्य om B सदा om. A 9c श्वाना° ABIS, स्वनो° CP, स्वन° D 10a प्ररुदंति S, प्रभवंति CD, corr. to प्रमदंति C युक्तं ABCDIP 10b ह्यप cod. 10c °विनाशं S 10d वा S 11a विशवे A, विशे BCDIP दिमे CDP 12b कुते BI, कुरुते CDP 12b नरस्य—12c om. A 12c °द्भुतं वै तिद्रुतं BCDIP 13a जयतो S, कतो ABCDIP 13c षण्मासमध्ये om. A 13d भयभू ( मू BI )पं BCDIP 14a °नासश्च S यस्य om. B 14b °दाघते च BCIP, °दाघचेन D 14c आर्तास्त om. S, यर्तास्त° ABI, यत्तत्ति° CDP, corr. to यर्तास्ति° C °थस्यापि S, °थस्यपि ABCDIP भवेयु S, भविषु ABCDIP 15b कर्तिस्यं P, वर्तिस्व° ABCDI, वर्तिस्व S 15c सुत्वे AC, सुतै° P 15d °पुज्यते S

कृष्णं सितं पश्यति यश्च कृष्णं सितस्वभावं पुरुषो विरोगः ।
स भूपतेः संलभते विवादं विपक्षयान् बन्धुजनेन युक्तम् ॥ १६ ॥

यो ब्राह्मणत्वेष्टिदिवाल्यत्वाद्योगीन्द्रमुख्यादथ तापसाद्वा ।
सर्वं समाप्नोति नरः स शीघ्रं सर्वस्य दासो गुरुशोक एव ॥ १७ ॥

यस्य प्रभाते कलहो गृहे स्यात् प्राप्तेऽथवा भोजनके च काले ।
तस्यार्थनाशं प्रवदन्ति सन्तः प्रभूतशोकं ह्यचिरेण भावि ॥ १८ ॥

यस्मिन् गृहे वृद्धिमुपैति कासः कुशोऽथवा कण्टकताड एव ।
रोगप्रवृद्धिः प्रभवेद्धि तस्य वित्तक्षयं शत्रुविवर्धनं च ॥ १९ ॥

भिन्नानि भाण्डानि दधाति गेहे पुमान् यदा यः प्रतिमुक्तलज्जः ।
विमुच्यते वित्तसुतैः स नूनं शीघ्रं यदि स्यादपि वज्रपाणिः ॥ २० ॥

प्रनष्टचैलं यदि वा कदन्नं संशोचते यः पुरुषः सदैव ।
स मुच्यते वित्तचतुष्पदाभ्यां रोगाभिभूतः परमार्दितश्च ॥ २१ ॥

प्रदुष्टशीला कलहप्रधाना सुकर्कशाक्षी दयिता च यस्य ।
भवेन्नरस्य प्रणयेन हीना तस्याशुनाशं भवतीप्सितस्य ॥ २२ ॥

यः सूर्यवातैर्घनसम्भवैश्च निहन्यते श्री परिधानकैर्वा ।
स मुच्यते वार्ययशोर्थमित्रैः स्वयं यदि स्यादपि वित्तभासः ॥ २३ ॥

यः स्पृश्यते मार्जनिकारजोभिश्छागोत्थजैर्वा मृतहस्तिजैर्वा ।
संस्पृश्यते सोऽलसमोहकामैर्युद्धप्रनाशो विभवक्षयैश्च ॥ २४ ॥

---

ABCDIPS

16a यस्य cod. 16b मित° BP 16c संभूक्ते S 16d °क्षयं BCDIPS, °क्षनं A नित्यं D 17b °मुख्यानथ cod. °माद्रा CDP, °साक्यं S, 17c सुशीघ्रं DS 17d दासं cod. कुरु° ABDIP °मेत्र cod. 18a प्रभावे D 18b प्राप्तो IP 18c वायार्थ° DP 19b °मेव cod. 19c °प्रवृद्धिं ACIS 19d °प्रवर्धनं S 20b सदाधः ABIP 20d यज्ञपाणिः D 22a °शीलः cod. °प्रधानः cod. 22b यदिता BCDIP, corr. to यदि वा C 22c हीनं ABCDIP 22d °नाशो S भवतीमि ( शि A ) ABCDIP 23a °घन° CDIP °भवैर्वा S 23c वोवयशो° BCDIP 23d विभासः CDP, corr. to वित्तनासः C 24a स्पृशते A 24b मृतहस्तिजैर्वा om. D °हस्यजैर्वा ABCIPS 24c सा ( मा B )ल्हसमेह° ABCDIP 24d यद्धि° S

सन्ध्यागमे यः शयनं विदध्यादुत्तिष्ठभागी मलिनाम्बरश्च ।
मलाढ्यदेहः स भवेत् सुशीघ्रं लक्ष्म्या विहीनोऽपि हि देवराजः ॥ २५ ॥

यः सेवते कामपरः स्त्रियस्तु रजस्वलाः पंच समस्तहीनाः ।
स चायुषा मुंचति शीघ्रं † संफलं † सोऽपि यदि स्यादपि चक्रपाणिः ॥२६॥

पादैरधौतैश्च समश्नुते नरं यो भूमिहीनं शुचिताविहीनः ।
स मुच्यते भूरिधनोऽपि सर्वैर्लक्ष्मीविकारैः सुतबान्धवैश्च ॥ २७ ॥

पुष्पाणि वाघ्राय पुनर्मनुष्यो बध्नाति यो मूर्ध्नि विवेकहीनः ।
स मुच्यते शीघ्रमशेषवित्तैर्निर्माल्यमाघ्राति च गन्धलुब्धः ॥ २८ ॥

रात्र्यर्धकाले प्रतिपद्दिने च मध्यस्थिते वापि सहस्ररश्मौ ।
यो दन्तकाष्ठस्य करोति कर्म स मुच्यते सर्वधनप्रकारैः ॥ २९ ॥

प्रसादितस्तत्त्वविवर्जितेन पलाशकाशप्रभवेन मर्त्यः ।
काष्ठेनः यः स्यात् सुदरिद्रयुक्तो यो हीनवर्णां प्रकरोति भार्यान् ॥ ३० ॥

विहीनवर्णोऽथ प्रधानवर्णः स मुच्यते सर्वधनैर्यशोभिः ।
यो दन्तकाष्ठस्य करोति कर्म स दैन्ययुक्तः कृतदग्धदेहः ॥ ३१ ॥

## इति श्रीवृद्धयवनेऽनिष्टसूचनाध्यायः ॥

ABCDIPS

25b °दुत्थिष्ठ° ABCDIP, °दुच्छिष्ट° S मलिनस्व (श्च BCDIP) रश्च cod. 25c बला° C. ला° DP 25d सूक्ष्म्या ABCDIP पीह S. पि DP 26a स्त्रि (स्व DP) यं रजो cod. 26b रजज्वला BCIP 26c मुच्यति ABCDIP 27a पादैर° BCDIPS 28a चाघ्राय IS, वाघ्राच A 28b °हीना IP 28d °घ्रांति ABCDIP 29a सत्यर्ध° ABIS °पद्दले ABCDIP 29b °रश्मेः ACIPS 30a प्रमादित° ABCDP, प्रमाहितो I 30b मर्त्यं ABCDIP 30c कष्ठेन ABCD 30d °वर्णः ABCDIP 31c कर्म om. S 31d यो ABCDIP, ये S दैन्य° DIPS col. श्री° om. S निष्ट° om. D, अनिष्ट° CIP, अविनिष्ट° A, श्वनिष्ट° B मिश्रिकाध्यायः S

# षट्षष्टितमोऽध्यायः ॥ ६६ ॥

यस्याङ्गभागे स्फुरति प्रधानं याम्यं नरस्याद्भुतमेव तस्य ।
सम्पद्यते वांछितमर्थलाभः प्रियेण सङ्गः सुखसंयुतश्च ॥ १ ॥

यः प्रातरुत्थाय गृहे स्ववक्त्रं सम्पद्यते वा कुरुते स्वमध्ये ।
सः स्त्रीसमेतः सुचिरं च कालं सुखानि भुङ्क्ते निजबन्धुजानि ॥ २ ॥

हस्तौ समालोक्य नरो पुरो यः संवीक्ष्यतेऽन्यस्य नरस्य वक्त्रम् ।
प्रभातकाले न हि तस्य भावि श्रियो विनाशो बहुदुःकृतानि ॥ ३ ॥

अभीष्टदेवं स्मरते नरो यः प्रभातकाले स्तुतिमन्त्रपूर्वः ।
न विघ्नमाप्नोति स तद्दिने च चारित्रहीनोऽपि दुराशयोऽपि ॥ ४ ॥

यः स्पर्शते गां प्रयतः प्रभाते स्त्रीवृक्षकं वा गुरुपादकं वा ।
स दीर्घजीवी तु भवेन्मनुष्यः श्रिया समेतः सततं सुखाढ्यः ॥ ५ ॥

प्रणम्य विप्रान् स्वसुरान् गुरूंश्च यः प्रातरुत्थाय करोति कर्म ।
निजां सुसिद्धिं सकलां लभेत श्रुत्वातिथिं ब्राह्मणवक्त्रजातम् ॥ ६ ॥

भारार्तदेहस्य ददाति मार्गं यो हीनकस्यापि वयोर्थवर्णैः ।
स स्यात् सदैव प्रभुतासमेतः प्रभूतवित्तागमतुष्टचित्तः ॥ ७ ॥

एकं श्मशानं परिहृत्य दूराद्यो गच्छते चत्वरकं च नित्यम् ।
न तस्य पापं पुरुषस्य लोके संजायते नार्थयशःप्रनाशः ॥ ८ ॥

ABCDIPS

1a °भागः S  1b याम्यो S  वर° IP  2b वा ] चासु cod.  3b स्यस्य B, भ्यस्य CDIP  3c न—4b °काले om. D  3d व च BCIP, न च S दुष्कृतं च S  4a °देवा P, °देवः ABCDI  4b °पूर्व CDIPS  4c श(स I) तद्दिनेश BCDIP, शतदिने च A  5a गौः ABCDIP  प्रयतः om. A  5c सु° APCDIP  तु ] सु cod.  7c सत्मात् BCDIP, सत्यात् A  7d °वित्रागम° BCDP  °चित्ततुष्टः S, °दुष्टचित्तः ABCDIP  8b गच्छते च° om. P

यो वृद्धलोकं वयसा गुणैर्वा नमस्करोति प्रथमं मनुष्यः ।
स दीर्घजीवी सुखवित्तयुक्तो भवेद्विरोगः प्रथिताभिमानः ॥ ९ ॥

स्त्रीभिर्न दुष्टाभिरकारि सङ्गं यो वैश्यवर्णैः सुसुहृत्प्रकारैः ।
स विघ्नहीनो मनुजः सदैव जीवान्वितो धान्यधनैः समेतः ॥ १० ॥

न नग्नशायी न च दीर्घसूत्री सन्ध्याप्रभोजी मनुजो न यः स्यात् ।
न सेवते सर्वसुखानि नित्यं जीवेच्चिरं बान्धवलोकमान्यः ॥ ११ ॥

स्वप्ने नरो पश्यति यो नरेन्द्रं द्विजं च देवं वृषकं हयं च ।
प्राप्नोति वित्तं स सहस्रमध्ये पूजां च लोके जनसंमतं च ॥ १२ ॥

पितॄन् समालोकयते मनुष्यः स्वप्ने प्रहृष्टान् सुमनोभिरामान् ।
सुवृद्धिमाप्नोति कुलस्य नित्यं हिरण्यलाभं नृपतिप्रसादम् ॥ १३ ॥

यस्तुङ्गमारोहति यो द्विपेन्द्रं गिरिं गृहं वा सुरमन्दिरं वा ।
प्राप्नोति मर्त्यो विभुतासमेतो धर्मप्रवृद्धिं गुरुतां च लोके ॥ १४ ॥

फलानि लब्ध्वा लभते सुताढ्यः पुष्पाणि लाभं जनतासमुत्थम् ।
सिताम्बरं स्वर्णयवप्रलाभान् प्राप्नोति वित्तं व्यसनक्षयं च ॥ १५ ॥

स्वप्ने प्रभुङ्क्ते घृतपायसं यो मासं सुरां पुष्पफलानि मर्त्यः ।
स मासमध्ये लभते प्रकामं श्रिया समेतं वरवाहनं च ॥ १६ ॥

विष्टानुलेपं कुरुते नरो यः स्वप्नेऽथवा मैथुनमन्ययोनौ ।
मासैश्च षड्भिर्लभतेऽतिकामो नृपप्रसादं परमां च संपत् ॥ १७ ॥

ABCDIPS

9a वयसो S, वयशै D, वयशं ABCIP 9c सु° ABCDIP 10b वेश° IP, वेष° S सुसुत्प्र° CDP 11b संस्था° A 12a नरो पश्यति यो om. B 12d °संमतश्च S 13a °लोकयतयैर्मनुष्यः DI 14a य IP, स° S 14b सर° BCDIP गिरं BCD 14d °प्रवृद्धं A, °प्रसिद्धिं S 15a सुखाढ्यः CDP 15d वित्तं om. B, व्यय्रं CDIP 16a प्रभुक्ते CDI, प्रयुक्ते BP 17c निकामं S

आरुह्य गात्रं मनुजस्य याति स्वप्ने नरो यो वृषभस्य वापि ।
मासत्रयेण प्रभुतां समेति स्ववर्गमध्ये च महाजने च ॥ १८ ॥

गृह्णाति वीणामथवा वयांसि स्वप्ने नरो यः कुरुते सुरेज्याम् ।
स वस्त्रलाभं लभते विशिष्टं त्रिरात्रिमध्ये वरवाहनं च ॥ १९ ॥

वंशं समारुह्य नरो जलान्तं यो याति मर्त्यः सितवस्त्रधारी ।
स मुच्यते तु व्यसनैः समस्तै रोगैश्च युक्तैः सुतबन्धुवर्गैः ॥ २० ॥

भूपं नरो पश्यति स्वप्नकाले सेनापतिं वाथ कुमारकं वा ।
दशाहमध्ये स लभेन्मनुष्यश्चतुष्पदाच्छादनभोजनानि ॥ २१ ॥

यो भक्ष्यते मत्कुणवृश्चिकाद्यैः खरप्रसूतैरपरैर्मनुष्यः ।
स्वप्ने स भागी भवति प्रजानां नीरोगदेहो दिनपंचकेन ॥ २२ ॥

स्वप्ने द्विजो वा सुरसत्तमो वा पितामहो वा यदि जल्पति स्म ।
न सप्तरात्रेण भवेत् सुभव्यं शुभं यदि स्यादथवा च पापम् ॥ २३ ॥

यो वीक्षते रात्रिपतेः स्वचिन्तां पूर्णां रवेर्वा मनुजः प्रसुप्तः ।
स वांछितार्थं लभते सुशीलं मासस्य मध्ये नृपतेश्च मानम् ॥ २४ ॥

सूर्येण शुक्लेन नरः प्रसुप्तः स्वप्ने च संदृश्यति यो वराङ्गम् ।
स वांछितं लभ्यमवाप्य † यस्य तस्याब्दमध्ये सुतभाजनं स्यात् ॥ २५ ॥

यो वृक्षमारुह्य सुदीर्घशाखं करोति शास्त्राध्ययनप्रसङ्गम् ।
लब्ध्वा स विद्यां परमां सशौचां मासस्य मध्ये सुखभोगभागी ॥ २६ ॥

---

ABCDIPS

18a मनुजस्वजा ( या B ) ति ABCDIP 18c स लेभे S 19a बधंसि A, वृयासि I, च वंशीं S 19d त्रिरात्र° IPS °मध्ये om. D 20b यायाति BCDP, यायाशु S, परपाति A 20c मुच्य BCD तं BCDIP, च A 20d मुक्तैः ABCDP, मुक्तः IS 21a भूमिं cod. पश्यति ] नरपतिं I 22a भक्षते ABCDIP 22b स्वर° ABCDI 23b वा ] पि S यलाति IP 24a वीश्यते I स्ववित्तां cod. 24c सुवांछितार्थं BCDP 25a सर्वेण S 25b संदृश्यति S वरोगं AC 25c यस्य om. S 25d यस्या° ABCDIP 26b शास्त्राध्ययन° S 26c लब्धा IP ससौच्यां IS, शसौच्यां B, ससौच्यं CD

यो रज्जुबन्धैः सुदृढैः प्रसुप्तः स्वप्ने नरो † लाभनरं प्रति स्म ।
स पुत्रलाभं लभते मनुष्यो नृपप्रसादं च दशाहमध्ये ॥ २७ ॥

यो रक्तपानं कुरुते मनुष्यो मद्यस्य वा पानममिश्रितस्य ।
स धर्मकार्यं कुरुते सुशीलं सुखान्वितं देवगुरूपसेवम् ॥ २८ ॥

यो मर्त्यमांसं यदि वा गजस्य प्रभक्षते स्वप्नगतो मनुष्यः ।
अमेयरूपं स लभेत् स्वयानं मासार्धमध्ये वरवाहनं च ॥ २९ ॥

छत्रं ध्वजं वा लभते सुयाने स्वप्ने नरो यो व्यजनं शिवं च ।
स भूमिलाभं नृपतिप्रसादं समश्नुते मासयुगस्य मध्ये ॥ ३० ॥

यो मक्षिकाभिर्मधुसम्भवाभिः सन्दंश्यते वा मधुपैः सुशुक्लैः ।
स्वप्ने स भोगी भवति द्विपानां हयोत्तमानां च दिनत्रयेण ॥ ३१ ॥

उपानहौ यो लभते मनुष्यः स्त्रीणामभीष्टं यदि वाप्यशौचम् ।
विभूषणं स क्षितिभाजनः स्याद् दिनद्वये नास्ति विचारमस्य ॥ ३२ ॥

स्वप्ने सृगालं यदि वा सृगालीं निरीक्षते यो मनुजः शुनीं च ।
स्वप्ने स हन्यान्निजशत्रुवर्गं मासस्य मध्ये गतसर्वरोगः ॥ ३३ ॥

सुशुक्लवस्त्राभरणैः समेतां संवीक्षते यो वनितां प्रसुप्तः ।
स्वप्ने स भोगी वरवाहनानां भवेद्धनानामपि वांछितानाम् ॥ ३४ ॥

---

ABCDIPS

27a प्रसुप्तैः cod. 27b स्वप्ने—नरं om. S नरै cod. लाभ नरं om. cod., in marg. C 27c सुपुत्र° P 28b पानसमि° cod. 28c धर्मकालं D सुशीलः S 28d om. cod., in marg. C देवगुरुस्वसेवनं C 29b प्रलक्षते ABIP, प्रलक्ष्यते CDS 29c अमेस्व° cod. स्वलमेत् IP, लभते S 30a सुयानं IPS 31a मक्षका° CDIP °सभृताभिः BCDIP, °ताभिः A 31b सदश्यते ABCDP स° D, स्व° AC °शुकैः S, °शुचैः I 31c स्वभोगी IP 32b °शौची ABCDS 32c °मक्षिति° ABCDIP, भक्षति S 32d वास्ति CDIP °मस्ति cod. 33a सृगालिं ABIP 33b निरीक्ष्यते CD, निश्यूदये AS, निस्पृथते BI श्रुतिं ABCDI, चिशुं S, क्रतिं P 33c न BCDIP 33d °रोगैः ABCDIP 34a °वक्रा° BCIP 34b संवीक्षिते AD, संवीक्ष्यते CP

यः शुक्लमाल्याम्बरवाहनाद्यैर्युक्तं प्रपश्येत् पुरुषं प्रसुप्तः ।
स्वप्ने भवेद् भूरिसुखैः समेतः सुपुत्रभोगी मनुजो विरोगः ॥ ३५ ॥

वृद्धस्त्रियं पश्यति यो मनुष्यः शुक्लाम्बराढ्यां सितचन्दनां वा ।
स्वप्ने भवेद् भूरिधनस्य भोक्ता सुभूमिपानामतिवल्लभश्च ॥ ३६ ॥

निजं शरीरं गतजीवितं यः संवीक्षते वा निगडैः प्रबद्धम् ।
सुपुत्रलाभं लभते मनुष्यः मासद्वयेनापि पितृप्रसादम् ॥ ३७ ॥

सरित्समुद्रं यदि वा तडागं विगाहते यो मनुजः प्रभावात् ।
स्वप्ने नदीं वा परिमुच्यते सः समस्तविघ्नैर्धनधान्ययुक्तः ॥ ३८ ॥

कृष्णं नरं बाहुबलेन मर्त्यः स्वप्ने निहन्ति प्रविगर्जमानः ।
स्यात् स नूनं परिशुद्धदेहो ग्रहोत्थपीडापनयैः समस्तैः ॥ ३९ ॥

तादृक्स्त्रियं यो विनिहन्ति मर्त्यः स्वप्ने गजं वा यदि शूकरं वा ।
स मुच्यते मृत्युभयैर्विकारैर्नीरोगदेहं सततं सुखी स्यात् ॥ ४० ॥

ज्वलन्तमग्निं यदि वा सधूमं संवीक्षते यो मनुजोऽथ मन्दम् ।
स्वप्ने स भागी वरवाहनानां स नन्दते वैरिभिः सेवकानाम् ॥ ४१ ॥

## इति श्रीवृद्धयवने शुभस्वप्नाध्यायः ॥

ABCDIPS

35b प्रसुप्तं cod. 35d स पुत्र° CDP 36b च DP 36c भोग्यः ABIS 36d °धानाम° BCDIP °वल्लभं च ABCDIP 37b संवीक्ष्यते ABCIP 37d पितुः C °प्रसादात् S 38c स्म CDP 39a कृष्णे IPS 39b प्रविगर्तं° A °मानी ABCDIP 39c परियुक्तदेहो S 39d ग्रहो° om. A 40a नोदृक् D, नोद्रिक् ABCIPS श्रियं BCDIPS विनहन्ति ABCIP 40c मनुष्यते BCDIP, स मुच्यते A 41a जलंत° BCDIP 41b स वीक्ष्यते C 41c स्वभागी IP 41d वैरिभि ABCDP col. श्री° om. S

# सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

प्राग्ब्राह्मणा प्रोक्तमनेकरूपं यच्छाकुनं पूर्वजकर्मसाक्षम् ।
तन्मीनराजो यवनाधिराजः समासतः सारतरं चकार ॥ १ ॥

मनोविशुद्धिः सकलस्य मूलं नीतिर्यथा सद्विभवस्य पुंसाम् ।
तस्माद्विशुद्ध्या मनसः प्रकार्यं कृत्यं विशेषेण विदेशयानम् ॥ २ ॥

यो याति मर्त्यः शकुने प्रशस्ते मनोविशुद्ध्या सुदिने मुहूर्ते ।
व्यावर्तते लब्धयशः प्रभावः स एव हत्वारिगणान् समस्तान् ॥ ३ ॥

मूढोऽन्यथा यः शकुने दिने च कुर्वन्मनुष्यो व्रजते विदेशम् ।
स भूरियानाश्वबलोत्कटोऽपि सङ्ग्रामदुर्गोऽभिनिमज्जति स्म ॥ ४ ॥

यथा सुराणां प्रवरो मुरारिर्गङ्गा नदीनां द्विपदां च विप्रः ।
तथा प्रधानः शकुनः प्रदिष्टो वाक्यम्भवो गर्गपराशराद्यैः ॥ ५ ॥

यच्छ्रूयते यानविधौ तु वाक्यं मतेप्सितं वा सहजं नराणाम् ।
तद्रूपिणां तत्र फलं विचिन्त्यं कार्यं प्रयाणं विनिवर्तनं वा ॥ ६ ॥

तस्मिन् प्रदेशे यदि कुम्भहस्ता कन्या समागच्छति सौम्यरूपा ।
यातुर्वदेद्दिक्षु फलं समग्रं विबालका चार्धफलप्रदात्री ॥ ७ ॥

निर्ग्रन्थकं चाङ्गमथ प्रपश्यन् कृष्णं विशालं गृहशूकरं वा ।
यः प्रस्थितः प्रागलभते स दुःखं कार्यस्य नाशं भयमुग्रशोकम् ॥ ८ ॥

---

ABCDIPS

order in S : 1a-b, 2c-d, 1c-d, 2a-b 1b यष्टाकनं BCIP 1c तस्मिन् रराज S यवनाधिराजः om. A 1d सभासनं सारमलं S 2b पुंसः S 2c तत्स्यात् विशुध्य S 3a यायाति BCDIP 3d हंता° ACDIP °रिगणस्य पस्तान् A 4a पूटो A भीकुने CDIP, कुने B 4b व्रजिने CIP 4c °पालाश्व° ABCDIP ऽपि ]ग्रः ABCDP 4d भिसिमज्जति ABD, भसिमज्जति CIPS 6a यः श्रूयते CDP वाक्यं A, वासं P 6c तद्रूपिणं DS 6d प्रवानं ABCDIP 7c °विदे° CIS 7d चार्थ° ABCDIP, वार्ध° S 8a वाग° I 8b ग्रह° D 8d भयशोकमुग्रं ABCDIP

काको यदा शुष्कतरोः शिखाग्रे विरौति दीप्ताहिभिराश्रितस्य ।
तदा भवेन्मृत्युभयं गतस्य गृध्रोऽथवा बन्धनमाशु धत्ते ॥ ९ ॥

कृष्णाहिरेव प्रकरोति मृत्युं दृष्ट्वा उलूकः प्रमदाविनाशम् ।
प्रदीपनोत्थज्वलनः सुरोगं घनः प्रसृष्टो धनधान्यनाशम् ॥ १० ॥

भूमिप्रकम्पो वरयोधनाशं बन्धुक्षयं संजनयेच्च गर्जिः ।
प्रचण्डवातो बहुशत्रुवृद्धिं सौम्योऽपि वा सन्मुख एव यातुः ॥ ११ ॥

वामाङ्गकम्पो गृहभङ्गकारी क्षुतः स्वपक्षाद्भयमातनोति ।
युद्धं नराणां प्रकरोति युद्धं रुतं रुतेनैव समन्वितं च ॥ १२ ॥

कुर्वन्ति सिद्धिं गगनेचराणां हृदि स्थिताः सन्मुखमागताश्च ।
आर्द्रामिषं तोयगतं वराहं सिद्धं च मत्स्यं फलमासवं च ॥ १३ ॥

मतङ्गजं पश्यति यः पुरस्तात् संप्रस्थितस्तस्य भवेत् सुसिद्धिः ।
शंखं हयं शुक्लमथातपत्रं व्रतान्वितं चामरमिष्टवस्तुम् ॥ १४ ॥

दृष्ट्वा नरो यानविधौ वृषं च † रस्माग्यतं सद्यसभागतोऽपि ।
कालोलकः खंजनकश्चकोरो हारीतनामा वृषभश्च चापः ॥ १५ ॥

वामागताः सिद्धिकराः प्रदिष्टाः श्यामा रलाश्चापि † कवेषिकन्याः ।
श्येनः शृगालश्चलमांससंज्ञस्तच्छुक्लपुच्छः ॥ १६ ॥

---

ABCDIPS

9a यथा cod. 9b दीप्तादिभिमा° cod. 9d गृध्रवो BI 10b दृष्टावु° S 10c सुरगं S, स्वरेण BCDIP 10d धनः cod. प्रमृष्टो S 11a °प्रकूपो BCDIP, प्रकोपो S 11b संजनयेथ cod. 11c °वृद्धिः ABCDIP 11d सौम्ये S सोमो CDIP समुखं DIP 12b क्षुता BCIP °द्भुत° D 12d रुतं om. A, रुते IS, प्रकुरुते CDP, corr. to रुते C रुतेनैव] रुते BI, धनहानि CDP समन्विते ABIS 13b सन्मुखभागताश्च ABCDIP 13c चदाहं S 14c शाखं A 15b रस्मान्यतं B सद्यः ससागतो S 15c कालोयकः cod. °शु (°सु IPS) कोरो ABCIPS 16a वामांगकाः cod. 16b रला चापि IPS कर्वेविष° A 16c-d om. A 16d °स्तछुक्ल° BCDIP

यस्य प्रयाणे प्रभवन्ति ताना एते प्रकुर्वन्ति हि तस्य लाभम् ॥ १७ ॥

नृजा मृगा दक्षिणगा यदा स्युः कपिंजलो भास उलूककश्च ।
यातुः सदा सौख्यकराः प्रदिष्टाः पुंस्कोकिला वाकुलसारसाश्च ॥ १८ ॥

शब्दं मृगेन्द्रस्य विशालकस्य श्रुत्वा कपीजाहककौशकानाम् ।
विद्वान्न गच्छेन्मनसापि मार्गं यो वांछते श्रीविजयश्च नित्यम् ॥ १९ ॥

यस्योपदेशः कुरुतेऽर्थहानिः तस्यैव नाशः स्वशरीरहानिः ।
अश्रुप्रवाहो बहुदुःखशोकं पाथेयहानिः कलहं विचित्रम् ॥ २० ॥

वस्त्रानुरोधश्च करोति दाघं प्रवारणं विघ्नकरं प्रदिष्टम् ।
निमन्त्रणं यच्छति भूमिवैरं काष्ठागमो मृत्युकरश्च यातुः ॥ २१ ॥

अधोमुखः कुम्भ उरुप्रकोपं नित्यं विधत्ते रमणीशिरःस्थः ।
शरीरनाशं महिषाधिरूढः पुमान् यदा वाभिमुखः प्रयाति ॥ २२ ॥

कृकालिकाकूजितमेव वासं शत्रुप्रवृद्धिः प्रणये नराणाम् ।
स्वदेहरक्तप्रभवं च दुःखं प्रमोषणं कुप्यनरस्य रोधः ॥ २३ ॥

शिश्नः प्रयातः कुरुते विषादं दम्भोत्थमीतिं परचक्रजाताम् ।
नाशो विनाशं सुतबान्धवानां शृगालिकाः सौख्यकराः प्रदिष्टाः ॥ २४ ॥

छर्दिर्ज्वरो वेष्टजनस्य नासो याने विधत्ते सुखसौख्यहानिम् ।
अनिष्टलाभः प्रकरोत्यनिष्टं गोसंक्षुतं प्राणहरं हि यातुः ॥ २५ ॥

रक्षान्वितं यः पुरुषं पुरस्ताद् दृष्ट्वा विदेशं जडताभिमूढः ।
स बन्धमाप्नोति रिपोः सकाशात् साक्षाद्यदि स्यादपि देवराजः ॥ २६ ॥

---

ABCDIPRS

17a नारा A 18c यानौ BCDIP यदा D 18d वांजुल° BCIP, वांजल° AS R begins again with °श्च 19a विशालकश्च ABCDIP 19b शृत्वा ABCDIPR, corr to स्मृत्वा C कपे° ARS, केये BCDIP 19c °जाकेन् BCDIP 19d वांछति AS 20a यानो° cod. 21c निमंत्रयां R 22d समेति RS 23b प्रणयेन्नराणां RS 24a विवादं A 24b °वक्रजातिं BCDIP 24d शृ (सृ RS) तंचताः cod. 24d °कराः—25b °सौख्य° om. DP 25b °हानिः ABCDIP 26b जडताति° CDIPRS 26d स्याद्यदि ABCDIPS

सृगालिका यस्य करोति शब्दं याम्यस्थिता यानविधौ नरस्य ।
तस्यार्थहानिर्मरणं च दुःखं भवेदनिष्टं फलमेव कृत्स्नम् ॥ २७ ॥

पूर्णाननश्चावटकोऽथवा च वामेन याता स्वयमातनोति ।
रिक्ताननोऽपि प्रभुतां विचित्रां सुभूतिभागं यदि याति हृष्टः ॥ २८ ॥

करोति सौख्यं खलु तस्य भूषा कपिंजलश्चापि नृपप्रसादम् ।
याम्याश्रितो हृष्टमतिः सुनादैर्नन्दन् विचित्रं मधुरं प्रशस्तम् ॥ २९ ॥

प्रायः प्रदोषं कुलकः प्रहृष्टो वामाङ्गसंस्थः कुरुते नरश्च ।
गोयानमम्बं चटिका कुमारी सिद्धिप्रदाः स्युरपसव्यसंस्थाः ॥ ३० ॥

## इति श्रीवृद्धयवने मिश्रिकाध्यायः ॥

ABCDIPRS

27b याम्या° ABCDIP यस्य नरस्य तने ABCDIP 27d कृत्स्नं C 28a °श्चाटको LCDIPS, om. D, श्चा टो C, °श्चाटको A c प्रभुत्वा CP, प्रत्ना ABDIRS 28d सुभूति S हृष्टः CDP 29a तस्थ ABIR, तः S भूषः ABCDIPR 29c हृष्ट C °ती BCDIPS, °भीः AR 29d नंदं IP 30a प्राया BCIP 30a प्रहृष्टो col. om. D 30a प्रहृष्टो RS 30c गोधव° RS °मंपं cod. col. श्री° om. RS स्वप्नाध्यायः CIP, शपुनाध्यायः B

# अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

सामान्यमुक्तं फलमेतदेव शुभाशुभं यानकृतं नराणाम् ।
गृहस्थितानामधुना ब्रवीमि सर्वास्ववस्थासु च विस्तरेण ॥ १ ॥

यस्यां रविस्तिष्ठति सा प्रदिष्टा दिग्धूमिता यास्यति यत्र पश्चात् ।
अङ्गारिणी स्यादथ तेन युक्ता सितप्रदीप्ताश्च दिशस्ततोऽन्याः ॥ २ ॥

दीप्ता शिवा रोगभयं विधत्ते वित्तस्य नाशं रिपुसङ्गमं च ।
यानक्षयं मित्रजनैर्विरोधं प्रारम्भकाले यदि कर्मणः स्यात् ॥ ३ ॥

अङ्गारिणी विघ्नकरी प्रदिष्टा शिवा नराणां बहुशोकदात्री ।
इष्टैर्वियोगं कलहं करोति तनुक्षयं विप्लवमुग्रवैरम् ॥ ४ ॥

आधूमिता तु भिषचारधूर्तं प्ररोषणं संजनयेत् सृगाली ।
धर्मार्थहानिं च कलत्रदोषमसह्यं देशविनिर्गमं च ॥ ५ ॥

शान्ता शिवा संजनयेत् प्रशान्तिं चतुष्पदाच्छादनभोजनानि ।
धर्मप्रवृद्धिं नृपतिप्रसादं विद्यागमं साधुजनेन सख्यम् ॥ ६ ॥

† आ सप्त यो यावदिदं फलं स्याच्छब्दः शिवायाः परतोऽफलश्च ।
त्रैराशिका दन्तरजैश्च शब्दैर्वदेदनिष्टं यदि वा प्रशस्तम् ॥ ७ ॥

केचिच्छिवा वीतफलं रुतं च वदन्ति चन्द्रोज्ज्वलशर्वरीषु ।
तथा मृतो यः परिसंस्थितः स्याद् विशेषतः कार्त्तिकशुक्लपक्षे ॥ ८ ॥

ABCDIPRS

1d °स्वघस्थासु RS, स्विमस्थासु I  2b धिग्धू° B, भिक्पू° RS, A ends with दिग्धू°  2c अंगारणी cod.  2d °प्रदीप्तश्च BCDIP  3c °क्षया BCDIP विझमं BC  4a अंगारणी BCD  4b शिवं BCDIP  4d विघ्नव° S, विप्णव° I  5a स्त cod.  °मूर्तं BCD  5c °हानिश्च cod.  6a धिवा BCDIP  जनये BCDIP  प्रयातिं BCDIP  6d विद्यागमं BCDIP  7a यांगाय° CDP  7b शिवा सा परते cod.  7c शांशि ( सि IP )का BCDIP  8a वी-फलं BR, वीफलं DIP, विफलं S  8c यो RS  °स्थिताया cod.  8d वशेशिनः BCDIP

पूर्वं स्वरं या कुरुते सुरौद्रं सौम्यं ततः शंसति शोभनं सा।
अन्योन्यथा शोकभयं विधत्ते शान्तापि पुंसां सहसा सृगाली ॥ ९ ॥

मौनं समागच्छति या रवेण राजाश्वगोधायसमुद्भवेन।
सा शंसति स्त्रीधनधान्यलाभं शत्रुक्षयं दूषितदिक्स्थितापि ॥ १० ॥

सव्यापसव्ये न समं सृगाली यदा विरौति प्रकरोति हानिम्।
गजार्थहानिः प्रभवेत् सदैव शस्त्रप्रकोपं मतिविभ्रमं च ॥ ११ ॥

आद्ये विभागे दिवसस्य काको नरेन्द्रमानं बहुसौहृदं च ॥ १२ ॥

द्वितीयभागे दिवसस्य काको नभःस्थितः शंसति कोपमुग्रम्।
धर्मक्षतिं पापजनेन सख्यं रोगातुरत्वं विनयक्षतिं च ॥ १३ ॥

तृतीयभागे दिवसस्य नित्यं वियद्गतः शंसति मानवानाम्।
काको भयं बन्धुजनेन वैरं जनापवादं मतिविभ्रमं च ॥ १४ ॥

अन्त्ये विभागे दिवसस्य काको वियद्गतः पुत्रसुखं विधत्ते।
नृपप्रसादं धनधान्यलाभं धर्मप्रसिद्धिं सततं नराणाम् ॥ १५ ॥

भूमिस्थितः पुत्रयशांसि सूते काको विभागे प्रथमे दिनस्य।
आरोग्यमैश्वर्यमनिष्टनाशं महाप्रभावं रिपुसंक्षयं च ॥ १६ ॥

द्वितीयभागे दिवसस्य काको भूमिस्थितः पापमतिं प्रसूते।
पुंसां तथा निर्घृणतामकीर्तिं युक्तानि नानाविधचेष्टितानि ॥ १७ ॥

तृतीयभागे दिवसस्य काको भूमिस्थितः संजनयेत् प्रहर्षम्।
धनागमं साधुजनानुरागं प्रियेण सङ्गं विनयं सुखं च ॥ १८ ॥

---

**BCDIPRS**

9b स: BCDIP 9c विवक्तः BCDIP 10b °गोधाघ° IPRS, °गोभाध° BCD 11c °हानिः om. D, °वाजि BCIPRS 12a कालो D 12b-c om. cod. 13d रोगातुरं न BC °क्षिति BCDIP 15a अंते BCDPR, अंमे I 15d °प्रसिद्धं CPRS 17d युक्तानियेना° S °चेटनानि BCDIP 18b संजयन् B, संजनत् CP, corr. to संजनयेत C R ends with 18d सगं

चतुर्थभागे दिवसस्य काको भूमिस्थितः संजनयेदसिद्धिम् ।
विदेशवासं स्वकलत्रनाशं कुटुम्बदुःखं सुभयं सदैव ॥ १९ ॥

विरौति काको यदि वा रजन्यां गृहे गृहस्थस्य करोति नाशम् ।
वने नगेन्द्रस्य पुरे सदैव नृपस्य राष्ट्रस्य च तत्पुरस्य ॥ २० ॥

यस्योत्तमाङ्गं स्पृशति प्रतीपोऽभिपश्मुहुः पादतलेन काकः ।
मृत्युर्भवेत्तस्य नरस्य शीघ्रं षण्मासमध्ये सह बन्धुवर्गैः ॥ २१ ॥

वैशाखमासे निलयं च काकः कुर्याद्यदा पूर्वविभागसंस्थः ।
अश्वत्थवृक्षस्य जलस्थितस्य वृद्धिं विधत्ते चतुरोऽपि मासान् ॥ २२ ॥

आग्नेयभागेऽग्निभयं विषादं व्याधिं प्रकोपं परचक्रसङ्गम् ।
काको विधत्ते विनयेन पश्चात् स्वस्थानतो द्वादश योजनानि ॥ २३ ॥

करोति काकः खलु दक्षिणस्थो नित्रासकृद्रोगभयं जनानाम् ।
उद्वेगचिन्तां भयशोकपादान्महाव्ययं राजकृतं सदैव ॥ २४ ॥

काको यदा नैर्ऋतभागसंस्थस्तदा सुवाते जनतानुरक्तम् ।
दुर्भिक्षजातं सततं च दुःखं धर्मस्य हानिं कलहं नितान्तम् ॥ २५ ॥

वृष्टिं सुभिक्षं धनधान्यवृद्धिं करोति काकः खलु पंचमस्थः ।
धर्मस्य वृद्धिं भयशोकनाशं नरेन्द्रवृद्धिं जनतानुरागम् ॥ २६ ॥

वायव्यदिक्स्थः प्रकरोति काकः क्षेमं सुभिक्षं पशुपुत्रवृद्धिम् ।
नीरोगतां सर्वजनस्य सौख्यं यज्ञोत्सवं यज्ञविदां सदैव ॥ २७ ॥

BCDIPS

19b भूति° S संजनयंति CDP, संजनदा° BI 19d °दुषं BC 20c पुरे cod. नरेंद्रस्य D, नगर्यैद्रस्य S वने cod. 21a प्रतापो BCDIP 21b भषण् S 21c-22a om. D 21d °वर्गः S, °वर्गे BCD 22a विशाख° BC 23c विबस्वं BC, विशस्वं DP विविधेन S 24c °शोकदाया° IS 25c दुर्भक्ष° B 26d °रोगं D

सौम्ये विभागे बलिभुग्विधत्ते प्रकामवृद्धिं सततं सुखानि ।
द्विजातिपूजां गुरुदेवभक्तिं व्याधिक्षयं पार्थिवजं च हर्षम् ॥ २८ ॥

ईशानसंस्थस्तु करोति काको नरेन्द्रवैराणि पृथग्विधानि ।
दुर्भिक्षमार्तिं व्यसनं जनानां परस्परस्नेहविनाशमेव ॥ २९ ॥

इति श्रीवृद्धयवने काकरुताध्यायः ॥

BCDIPS

28a सौम्यैर्वि° BCDP 28c °पूज्या BCD col. श्रीवृद्धयवने om. S काकरुताध्यायः BC

# नवषष्टितमोऽध्यायः ॥ ६९ ॥

॥ १ ॥

नरेन्द्रमानं सुरतप्रसौख्यं श्यामा द्वितीये प्रहरे प्रसूते ।
पुत्रस्तलाभं कलहस्य नाशं व्याधिप्रनाशं सुतमीप्सितं च ॥ २ ॥

तृतीययामेऽतिजयं सुवाते श्यामा नराणां गृहसंस्थितानाम् ।
भोगीष्टमीशानमरिक्षयं च प्राणात्ययं बन्धनमिष्टलाभम् ॥ ३ ॥

अन्त्ये विभागे दिवसस्य सूते श्यामा सुखं पार्थिवजं च लाभम् ॥ ४ ॥

अनिष्टरूपा न कदाचिदेव स्यात् पातकी पावनसौम्यदिक्स्था ।
निन्द्येऽपि देशे विकृतस्वराशिः प्रभूतसौख्यास्त्रयशांसि सूते ॥ ५ ॥

श्यामा यदा देवगृहे प्रसूते शस्तेऽथ वृक्षे विदिशं विहाय ।
तदा भवेत् क्षेममथार्थवृद्धिः सुवृष्टिपुष्टा नृपतिप्रवृद्धिः ॥ ६ ॥

श्मशाननिम्नास्थिकसङ्कुलेषु देशेषु हानिं कुरुते प्रसूता ।
श्यामा नरेन्द्रस्य तथा पुरस्य दुर्भिक्षमार्तिं बहुरोगतां च ॥ ७ ॥

चतुर्भिरण्डैश्चतुरोऽपि मासान् श्यामा प्रसूता जनयेत् सुवृद्धिम् ।
त्रिभिस्तथा त्रीन् युगलप्रसूत्या मासद्वयं चैकमिहैकसूत्या ॥ ८ ॥

**इति श्रीवृद्धयवने श्यामाचेष्टिताध्यायः ॥**

**BCDIPS**

1 om. cod.   2d °प्रवाशं ( सं S ) cod.   3c °मीष्टानं D   4c-d om. cod.   6b शस्ते ] यदा CDP, corr. to प्राप्त C   6c °वृद्धि BCD   6d °पुत्राम् CDP, °पुत्रा B, पुत्र S. पुरतान् I   7a शाशान° DP   7b देशेषु om. BCDIP   7d °मार्त्त BCDIP   8a °रावै° BCDPS, °चै° I   8b प्रसूते cod. 8c त्रीमि° cod.   त्रीयुगल° S   8d °द्वयेनाम ( श S ) मि° cod.   °सूत्य CDIP col. श्रीवृद्धयवने om. S   °वृद्धयवने om. BI   श्यामचेष्टितं cod.

# सप्ततितमोऽध्यायः ॥ ७० ॥

सम्पूर्णवक्त्रो यदि सारमेयः प्रदक्षिणं याति गृहप्रवेशम् ।
प्रशस्तवर्णः कुरुतेऽर्थलाभं सौख्यं समाच्छादनभोजनानि ॥ १ ॥

यातोऽपसव्येन तथाप्रणाशं शत्रुक्षयं वांछितमेव धत्ते ।
किंचित् फलं रिक्तमुखोऽपि दद्यात् कृष्णः शुनो व्याधिसमन्वितश्च ॥ २ ॥

गृहस्थितानां यदि सारमेयः प्रदक्षिणो मन्युरुषं निषीदेत् ।
करोति पुत्रांश्च यशांसि सौख्यं तस्मिन् दिनेऽभ्यागतदर्शनं च ॥ ३ ॥

शुनो नखाग्रे यदि याति वामं करोति यात्रां गृहपस्य सद्यः ।
मानेन वा गच्छति तस्य मार्गे फलं तदर्थेन वदेन्मनस्वी ॥ ४ ॥

करोति मूत्रं यदि सारमेयो वामेन गुह्यं हरितं सितं वा ।
पाथस्य दद्यात् स हि यानसिद्धिं मार्गेऽथवा भूमितलं पवित्रम् ॥ ५ ॥

सव्योपगः स्याद्यदि मध्यदेशं पादेन कण्डूयति दक्षिणेन ।
यातुस्तदा शंसति कार्यसिद्धिं वामेन बन्धं यदि वा विनाशम् ॥ ६ ॥

तदापसव्येन गतोऽर्थलाभं वामेन कण्डूयति चेन् सुतुष्टिम् ।
† वामेन रिपोश्च यशोविनाशं सर्वप्रदेशे विपरीतमेव ॥ ७ ॥

---

BCDIPS

1b प्रदक्षिणा DIP  1c प्रसश्य° CDIP  2a याने IPS  2c फलं रिक्तफलं मुखो CDP  2d कुष्टः BCDIP सुतो BCDIP  3a स्थितायां D  3d भाग्यत° C  4a स्थानात (स्न S)खाग्रा cod.  4c नच्च S, नश BI, स D, श CP, corr. to तस्य C  4d नदर्थेन BIS  5a मूर्तं CDIP, धूर्तं B  5b गत्वा S, गुह्या BCDIP हरिते सिते cod  5c पाथस्य D म CDP, corr. to म C  5d om. BCDIP  order in BCDIP: 6d-7b, 6a-6c, 7c; B omits 7a-b and 6a  6b दक्षणेन CDPS  6c तद BCDIP, corr. to तदा C  सिशति BCDIP  6d मानेन CDIP  7a तथा° CPS, भया° I  7b सुदृष्टिं D  7c रि (रै D) पोच BCDIP, रिप्व S

शुनो हि शुक्लस्य फलं हि सद्यः सारङ्गवर्णस्य फलं त्रिरात्रे ।
रक्तस्य पक्षेण पिशङ्गितस्य मासेन कृष्णस्य तु वत्सरेण ॥ ८ ॥

वामं तथानिष्टफलं प्रदिष्टमर्धे मुनीनां च निशागमे च ।
शरत्समुत्थं विफलं च सर्वं रोगाभिभूतस्य तथार्दितस्य ॥ ९ ॥

ऊर्ध्वाननः श्वा यदि रौति रावान् वसन्तकाले स्वयमातनोति ।
गृहोपरिस्थो गृहपस्य नाशं परस्य देशस्य च पार्थिवस्य ॥ १० ॥

ग्रीष्मे यदा क्रन्दति सारमेयो हर्म्यस्य पृष्ठेऽग्निभयं विधत्ते ।
ऊर्ध्वाननः शत्रुकृतं भयं वा व्याधिं प्रकोपं परचक्रसङ्गम् ॥ ११ ॥

वर्षासु वृष्टिं प्रचुरां विधत्ते कालेयकः श्वोर्ध्वमुखस्तथाधः ।
क्षेमं सुपुष्टिं गृहपस्य तुष्टिं नीरोगतां शत्रुविनाशमेव ॥ १२ ॥

सदा फलं स्याच्छरदि स्वनादः स्वराग्नितप्तस्य मदोद्धतस्य ।
नेत्रापि पापं फलमाशु धत्ते परस्य शब्दानुरतः पुरस्य ॥ १३ ॥

हेमन्तकाले यदि सारमेयो रात्रौ विरौति गृहपृष्ठसंस्थः ।
कृत्वोर्ध्ववक्त्रं कथयत्यनिष्टं स्वभूपजातं जनसंक्षयं च ॥ १४ ॥

ऊर्ध्वाननस्थः शिशिरे यदि श्वा नदन्नितान्तं कुरुते सुभिक्षम् ।
पुरस्य देशस्य च रोगनाशं धर्मप्रवृद्धिं विनयोन्नतं च ॥ १५ ॥

## इति श्रीवृद्धयवने श्वाचेष्टिताध्यायः ॥

BCDIOPS

8a स्थानं cod. शुक्रय col. 8c पिवांछितस्य S 8d तु—9d °भूतस्य° om. D 8d तु om. B 9c सस्तुर° BCIP 10a उद्यानतः BCDIP यं [illegible]रौति BCDIP वारान् BCDP 11a य[illegible] [illegible]ति BCDIP 11b ह° om. BCDIP, corr. C 11c स्वा° BCDIP, corr. C 12b स्वार्थं CD, स्थार्थ° BIS स्थोर्ध्व° O, [illegible] P °थाधः BC, °[illegible] DIP 13a [illegible] BCDIPS 13b °ित (से P) तमस्य BCDIPS 13c पासं BCDP 13d मरस्य S 14b रात्रौ CDPS, रावं B, om. I 14c कत्वा BCDIP 14d स्वस्व° CDP 15a °स्याच्छिशिरे S 15d °वृद्धं BIP [illegible]नयो (ये S) त्नमश्च cod. col. श्री° om. S श्वाचेष्टितं S, स्थानेष्टिताध्यायः D

# एकसप्ततितमोऽध्यायः ॥ ७१ ॥

यदा पुरं यान्ति विशासु गावः कुर्वन्ति नाशं नृपतेः पुरस्य ।
यानागमं स्वस्य सुतस्य नाशं रोगातुरत्वं परदेशसङ्गम् ॥ १ ॥

शिरोर्ध्वनाला यदि वोर्ध्वपुच्छा गावः प्रगच्छन्ति सुखप्रमाणाः ।
प्रातः पुरात् काननमुग्रवेगाः प्रयान्ति नाम्यापि समं विनाशम् ॥ २ ॥

गोक्षीरपानं वृषभो विधत्ते यदा तदा वत्सपतेर्विनाशम् ।
दुर्भिक्षमार्तिं परचक्रसङ्गं रोगातुरत्वं व्यसनं पुरस्य ॥ ३ ॥

स्वयं यदा स्वादति गौः स्वदुग्धं पयोधरस्थं कुरुते विनाशम् ।
गोपस्य तस्या यदि वा विनाशं महाभयं शत्रुकृतं सदैव ॥ ४ ॥

युग्मप्रसूता निजगोपनाशं प्राप्नोति धत्ते विषमं तदैव ।
दारेण सार्धं म्रियते यदा वा करोति राष्ट्रस्य पुरस्य नाशम् ॥ ५ ॥

वत्सान्विता स्याद्यदि गौः पुरस्तादुक्ताविशेषाच्छुभचेष्टिताच्च ।
यातुर्विधत्ते विजयं प्रतापं स्ववित्तलाभं त्वरिसंक्षयं च ॥ ६ ॥

## इति श्रीवृद्धयवने गोचेष्टिताध्यायः ॥

## इति श्रीयवनेश्वराचार्यविरचितं मीनराजजातकं समाप्तम् ॥

BCDIOPS

1a पुरं B, पुर O, तरं C  यान्ति B, मंति OS, यांति CDIP  1b नृपतेप् रम्यं BCDIP  1c त्वथ BCDP, त्वत्य I, त्वत्र O  1d °सग corr. to °संगं C  2b प्रय गच्छंति C, प्रयच्छंति DP  सुगप्रमाणः cod.  2c काननृ° CPS, कांनमृ° B, कांतरु° I, चाननृ° D  3b नस्वसुतं cod.  4c नस्माद्यदि OPS  4d नदैव S  5a नियु ( य D ) गोप° BCDIOP  5b नदैव BCDIPS  5c प्रियते OP, ध्रियते I  6a तत्सान्विना BCDOP, तत्स्वर्गता S  स्याद् om. BCDIP  6b °चेष्टिताश्च BCDIOP  6d हरि° CDIP, corr. to °सरि° C, °सरि° B  col. श्रीवृद्धयवने om. I, यवने D  गोविचेष्टितं cod.

# APPENDIX I

These verses follow XLVII. 29 in I:

सूर्यारसौराष्टमगा मनुष्यं क्लीबं धनं संजनयन्ति मर्त्यम् ।
नानाश्ववस्त्रैर्द्रविणैः[ र्वि ]मुक्तं रोगैर्गुणं संयुतकष्टमृत्युम् ॥

सूर्यज्ञजीवाष्टमगा मनुष्यं नरं प्रकुर्वन्ति सुहृद्विमुक्तम् ।
[ f ]वमुक्तहर्म्यं रुजया समेतं हीनाधिकांगं गुणवर्जितं च ॥

सूर्यज्ञशुक्राष्टमगा मनुष्यं नरं प्रकुर्वन्ति दरिद्रताढ्यम् ।
गतप्रतापं विभवैर्विहीनं पराङ्मुखं शास्त्रगुरुद्विजानाम् ॥

सूर्यज्ञसौराष्टमगा मनुष्यं क्षतप्रदग्धं गतशौचसत्यम् ।
शीलेन हीनं विकृतप्रधानं दयाविहीनं रुजया समेतम् ॥

सूर्यामरेज्याभृगुजा मनुष्यं मृत्युस्थिताः संजनयन्ति नित्यम् ।
नवार्तमत्यद्भुतवातभजं सदा कृतघ्नं नियमैर्विहीनम् ॥

सूर्यामरेज्यार्कसुता मनुष्यं मृत्युस्थिता संजनयन्ति नित्यम् ।
दानेन हीनं क्षतपीडिताङ्गं पराङ्गनासङ्गयुतं सदैव ॥

चन्द्रारसौम्याष्टमगा मनुष्यं नरं प्रकुरुते धनेन हीनम् ।
प्रभूतशास्त्रार्थयशोविहीनं पराङ्गनासंयुतगं सदैव ॥

चन्द्रारजीवाष्टमगा मनुष्यं धनैर्विहीनं जनयन्ति मर्त्यम् ।
विरक्तपौरं विनयेन हीनं निःसङ्गपापं विकृतानुकारम् ॥

चन्द्रारशुक्रा यदि मृत्युसंस्था धर्मार्थकामं विनयासमेतम् ।
प्रभूतकोशं गजवाजिभाजं जितेन्द्रियं शौचसमन्वितं च ॥

चन्द्रारसौरा यदि मृत्युसंस्था नीचप्रसक्तो निजबन्धुवैरम् ।
कलीप्रियो( यं ) दुष्टकलत्रपुत्रं सौख्येन हीनं परदेशरक्तम् ॥

चन्द्रज्ञजीवाष्टमगा मनुष्यं परार्तिहीनं बहुवित्तभाजम् ।
स्त्रीणामभीष्टं धनधान्यसौख्यं कुलप्रधानं गजवाहनाष्य(ढ्य)म् ॥

चन्द्रज्ञशुक्राष्टमगा मनुष्यं धनं सुखं सत्यकथानुरक्तम् ।
उदारवाक्यं सुभगं सुगात्रं वजिप्रियं भर्वसुखैः समि(मृ)द्धम् ॥

चन्द्रज्ञसौराष्टमगा मनुष्यं पुत्रैर्विहीनं धनधान्यरोधम् ।
वस्त्रैर्विहीनं सुखधर्महीनं शत्रो(त्रू)दयं मानविवर्जितं च ॥

चन्द्रामरेज्याभृगुजाष्टमस्था भवन्ति दीना धनधान्यहीनाः ।
नानाविधानात्मजनापमानाः स्युर्मानवा हीनजनानुपाताः ॥

चन्द्रासुरेज्यार्कसुता मनुष्यं स्थानेऽष्टमस्थैर्धनधान्यहीनाः ।
सर्वाङ्गवीर्यैर्विकलो मनुष्यः कलत्रवृत्तिः †समरंति भीरुः ॥

भौमज्ञजीवा यदि रन्ध्रसंस्था नरं प्रकुर्वन्ति धनैर्विहीनम् ।
कुटुम्बिभिर्वैररतं गुदार्तं वातार्तिदं पीनप्रकोपनं च ॥

भौमज्ञशुक्रा यदि रन्ध्रसंस्था रोगार्तिदं वित्तविवर्जितं च ।
धान्यांशुकैर्हीनतरं पुमांसं कुर्वन्ति कामातुरचित्त†दात्यम् ॥

भौमज्ञसौरा यदि रन्ध्रसंस्था नरं प्रकुर्वन्ति शठं सुतीक्ष्णम् ।
द्वित्रिकलत्रैः सह भोगयुक्तं पित्तप्रकोपं क्षयरोगिणं च ॥

भौमामरेज्यौ भृगुजश्च रन्ध्रे नरं प्रकुर्वन्ति धनैर्विहीनम् ।
चौरं च पैशुन्यरतं नितान्तं धर्मद्विषं क्रोधरतं कुवध्यम् ॥

भौमामरेज्यार्कसुताश्च रन्ध्रे रोगार्दितं लोहभयार्दितं च ।
धान्यैर्धनैर्हीनतरं कुभार्यं कुर्वन्ति शत्रोः सुभयानि लोके ॥

भौमासुरेज्यार्कपुताश्च रन्ध्रे पापान्वितं क्रूरतरं पुमांसम् ।
कुर्वन्ति नारीगणवर्जितं च दा(द)यादवर्गैः सह युद्धमानम् ॥

सौम्यामरेज्यौ भृगुजश्च रन्ध्रे नरं प्रकुर्वन्ति धनै. समेतम् ।
दातारमुग्रं कलहे रतं च विद्वांसमायुष्यं विविधं धनं च ॥

सौम्यामरेज्यार्कसुताश्च रन्ध्रे नेत्रेण हीनं कलहप्रियं च ।
वस्त्राशनोपायविवर्जितं च पराश्रयं पशुजवाविहीनम् ॥

सौम्यासुरेज्यार्कसुताश्च रन्ध्रे नरं प्रकुर्वन्ति विदेशभाजम् ।
परगङ्गनाशं( सं )वन[ नं ] चित्तकृत्यं नृपात्( द् ) भयं लोकभयं नितान्तम् ॥

जीवासुरेज्यार्कसुताश्च रन्ध्रे आयुष्ययुक्तं बहुरोगयुक्तम् ।
कलत्रसन्तानसुखेन हीनं विद्या रतं कैतकितं( वकं ) नरं वा ॥

**अथ मृत्युस्थानकान् ( के ) चतुर्ग्रहयोगमाह ॥**

रवीन्दुभौमेन्दुसुताष्टमस्था नरं प्रकुर्वन्ति सुदीनगात्रम् ।
रोगाभिभूतं परदेशरक्तं धनैर्विहीनं कुधिया समेतम् ॥



## APPENDIX II

These verses follow XLVII . 74 in I.

सूर्यारशुक्रार्कसुताः सुरन्ध्रे स्थिता मनुष्यं खलु कामयुक्तम् ।
कुर्वन्ति वित्तेन विवर्जितं [च] खलस्वभावं स्वजनैर्विरोधम् ॥

सूर्यज्ञजीवासुरपूजिताश्चेत् (द्) भवन्ति रन्ध्रे मनुजं प्रकुर्युः ।
कामातुरं कर्मविगृह्यकं [च] निजस्वभावं च परं कुबुध्यम् ॥

सूर्यज्ञजीवार्कसुताश्च रन्ध्रे कुर्वन्ति नानाविधरोगयुक्तम् ।
भाग्यैर्विहीनं चपलस्वभावं हंसारतं पानरतं मनुष्यम् ॥

सूर्यज्ञशुक्रार्कसुताश्च रन्ध्रे कुर्वन्ति भार्यासुतवित्तहीनम् ।
कुटुम्बवैरं कुजनैश्च मैत्र्यं विदेशतीर्थागमणाभिलापम् ॥

सूर्यामरेज्याभृगुजार्कपुत्रा रन्ध्राश्रिताः संजनयन्ति नित्यम् ।
सङ्ग्राममृत्युं † स्वधनुसमेतं कुर्वन्ति हिंसां स्वजनैर्विरोधम् ॥

चन्द्रारसौम्यामरपूजिताङ्गा मृत्युस्थिता मृत्युवशं मनुष्यम् ।
कुर्वन्ति नानाविधि( ध )रोगयुक्तं तिर्यं मृ ( र्यङ्मृ )त्युं तुछ( च्छ )स्वभावयुक्तम् ॥

चन्द्रारसौम्यासुरपूजिताश्चेत्( न् ) मृत्युस्थिताः † सर्मतुदं मनुष्यम् ।
पराङ्गनाभोगरतं विवादं प्रियं प्रकुर्वन्ति विनष्टबुध्य( द्धि )म ॥

चन्द्रारसौम्यार्कसुताश्च रन्ध्रे स्थिताः प्रकुर्वन्ति मनुष्यजातम् ।
भाग्यैर्विहीनं स्वजनैर्वियोगं स्त्रीमित्रपुत्राप्तजनैर्विहीनम् ॥

चन्द्रारजीवासुरपूजिताङ्गाश्चेदष्टमस्थानस्थिताः प्रकुर्युः ।
अल्पायुषं चाल्पधनैः समेतं स्वल्पायुषं [वै] विविधैश्च रोगैः ॥

चन्द्रारजीवार्कसुता यदि स्युर्भवेऽष्टमे भाग्यविहीनयुक्तम् ।
कुर्वन्ति † काराग्रहवासयुक्तं विद्याविहीनं स्वजनैर्विरोधम् ॥

चन्द्रारशुक्रार्कसुताश्च मृत्युभावे स्थिताश्चेन्मनुजं प्रकुर्युः ।
अल्पायुषं स्त्रीधनमित्रहीनं रोगान्वितं क्लेशकरं कुटुम्बे ॥

चन्द्रज्ञजीवासुरपूजिताङ्गा रन्ध्रस्थिताश्चेदतिभाग्यहीनम् ।
† रत्वं तिवृ (तीव्र)स्वभावयुक्तं कुर्वन्ति कामातुरचित्तवृत्य(त्ति)म् ॥

चन्द्रज्ञजीवार्कसुता यदि स्युरायुष्य end of f. 196v
........भावे मनुजं प्रकुर्वन्ति रन्ध्रेऽल्पतरां च बुध्यम् ।
चित्रैर्विहीनं स्वजनैर्विरोधं क्रूरस्वभावं कपटाङ्गयुक्तम् ॥

चन्द्रामरेज्याभृगुजार्कपुत्रा रन्ध्रस्थिताश्चेन्मनुजं प्रकुर्युः ।
कोपान्वितं वातकफान्वितं च स्वल्पायुषं मित्रजनैर्विरोधम् ॥

भौमज्ञजीवासुरपूजिताश्चेद्रन्ध्रे गता गुप्तगदं प्रकुर्युः ।
मनुष्यमग्रे विकलं विरूपं दा(द)यावर्गेषु विपत्तिमन्तम् ॥

भौमज्ञजीवार्कसुता मनुष्यं कुर्वन्ति नानाविधरोगयुक्तम् ।
क्रूरस्वभावं कलहप्रियं च वातार्तिमन्तं धनधान्यहीनम् ॥

भौमज्ञशुक्रार्कसुता मनुष्यं मृत्युस्थिताः संजनयन्ति मृत्युम् (मर्त्यम्) ।
हस्ताक्षिरोगं गुदपीडनं वा वातैः कफैः पित्तकृतैर्विनष्टम् ॥

भौमामरेज्याभृगुजार्कपुत्रा रन्ध्रस्थिताश्चेन्मनुजं प्रकुर्युः ।
पापस्वभावं पलिताङ्गयष्टिं मित्रैर्विरोधं विविधाङ्गरोगम् ॥

भौमामरेज्याभृगुजार्कपुत्रा भावेऽष्टमे † ऽज्यागगने वराः स्युः ।
सन्तानतापं जनयन्ति नित्यं कलत्रवित्तास्वजनस्य पीडाम् ॥

**इति अ(त्य)ष्टमभावस्थचतुर्ग्रहयोगाः ॥**

**अथ अ(था)ष्टमस्थपंचग्रहयोगफलमाह ॥**

रवीन्दुभौमज्ञसिता मनुष्यं भावेऽष्टमे भाग्यविहीनमन्तम् ।
कुर्वन्ति राज्ञोऽपि भयं विवादं वित्तक्षयं शत्रुपराभवं च ॥

रवीन्दुभौमज्ञसुरेन्द्रपूज्या रन्ध्रस्थिताश्चेज्जनयन्ति रन्ध्रम् ।
कलत्रमित्राप्तजनाङ्गपीडां नृपाद्भयं ज्ञातिभयं नितान्तम् ॥

रवीन्दुभौमज्ञदिनेशपुत्रा मृत्युस्थिता मृत्युसमां च पीडाम् ।
स्वल्पायुषं कीर्तिविवर्जितं च कुर्वन्ति चौरादपि वित्तहीनम् ॥

रवीन्दुभौमामरपूज्यशुक्रा रन्ध्रस्थिताः संजनयन्ति रोगम् ।
असज्जनाद्भीतिमहोनिकष्टं कुटुम्बवर्गादपि वित्तहीनम् ॥

रवीन्दुभौमामरपूज्यसौराः कुर्वन्ति रन्ध्रे कलहं कुटुम्बे ।
नारीवियोगं सुतमित्रकष्टं मातुर्भयं पितृभयं जनानाम् ॥

सूर्येन्दुभौमासुरपूज्यसौरा भावेऽष्टमे स्थानविवर्जितं च ।
आयुष्यहीनं धनहीनमेव कलत्रनाशं कलहप्रियं च ॥

सूर्येन्दुसौम्यासुरपूज्यसौराः कुर्वन्ति नानाविधकष्टभाजम् ।
रन्ध्रेऽल्पसारं रभसासमेतं † रात्रेर्धनां रात्रिचरस्वभावम् ॥

रवीन्दुजीवासुरपूज्यसौरा मृत्युस्थिता मृत्युसमानकष्टम् ।
लोकाद्भयं शत्रुभयं नराणां कुर्वन्ति दायादगणादरिष्टम् ॥

सूर्यारसौम्यामरपूज्यशुक्रा रन्ध्रस्थिता रोगभयं प्रकुर्युः ।
दायादमित्राप्तकलत्रपीडां पुत्रार्तिदो( दं ) शोकविवर्जितं च ॥

सूर्यारसौम्यामरपूज्यसौरा मृत्युस्थिताश्चेन्मनुजं प्रकुर्युः ।
लोभान्वितं रुक्षतरस्वभावं धर्मैर्विहीनं हतबन्धुवर्गम् ॥

सूर्यारसौम्यासुरपूज्यसौरा भावेऽष्टमे संजनयन्ति कष्टम् ।
नेत्रान्धतां वैरिभयं जनानां रोगार्दिताङ्गं कलहं कुटुम्बे ॥

सूर्यारजीवासुरपूज्यसौराः कुर्वन्ति चेदष्टमभावसंस्थाः ।
दीर्घायुषं क्लेशयुतं मनुष्यं दायादवर्गैरभिपूज्यमानम् ॥

सूर्यज्ञजीवासुरपूज्यसौराः स्वल्पायुषं बुद्धिमतां वरिष्ठम् ।
कुर्वन्ति रन्ध्रे मनुजं सकोपं धराङ्गयष्टं( ष्टिं ) ललनाविनोदम् ॥

चन्द्रारसौम्यामरपूज्यशुक्रा भावेऽष्टमे संजनयन्ति संस्थाः ।
कामातुरं कंजविलोचनं च वित्तान्वितं क्लेशविवादतुच्छम् ॥

चन्द्रारसौम्यामरपूज्यसौरा मृत्युस्थिता मृत्युसमानकष्टम् ।
कुर्वन्ति दायदजनैर्विरोधं स्वल्पायुषं रोगविमर्दिताङ्गम् ॥

चन्द्रारसौम्यासुरपूज्यसौरा मृत्युस्थिता मृत्युसमं मनुष्यम् ।
कुर्वन्ति नानाविधरोगभाजं धनैश्च धान्यैश्च विहीनमेव ॥

चन्द्रारजीवासुरपूज्यसौराः कुर्वन्ति राज्यास्पदमल्पवित्तम् ।
जनं मनुष्यैरुपगीतकीर्त्यं ( र्तिं ) कुटुम्बिभिः पूजितपादपद्मम् ॥

चन्द्रज्ञजीवासुरपूज्यसौरा धनैः समेतं मनुजं हि रन्ध्रे ।
कुर्वन्ति भाग्यास्पदमल्पपुण्यं प्रायुष्यमन्तं ललनासुखाढ्यम् ॥

भौमज्ञजीवासुरपूज्यसौराश्चेदष्टमे लोलुपमत्र जातम् ।
कुर्वन्ति धीरं मनुजं द्विभार्यं वित्तैर्विहीनं स्वजनैर्विहीनम् ॥

**इति मृत्युस्थानपंचग्रहफलम् ॥**

**अथ मृत्युस्थानषड्ग्रहयोगाः ॥**

रवीन्दुभौमज्ञसुरेज्यशुक्रा आयुष्यभावे मनुजं प्रकुर्युः ।
जनं जनैः पूजितमल्पवित्तं विद्यावियोगं ललनाविनोदम् ॥

रवीन्दुभौमज्ञसुरेज्यसौराश्छिद्रे स्थिताश्चंचलमल्पभाग्यम् ।
जनं प्रकुर्वन्ति कलत्रमित्रसुखैर्विहीनं विविधार्तियुक्तम् ॥

रवीन्दुभौमज्ञसितार्कपुत्राः स्थाने स्थिता मृत्युसमं च मृत्योः ।
कुर्वन्ति कारागृहभाजमल्पवित्तं विहीनाङ्गमरातिभीतिम् ॥

रवीन्दुभौमामरपूज्यशुक्रशनैश्चराश्छिद्रगता मनुष्यम् ।
नानाविधाप्तं कलहाप्तदुःखं कुर्वन्ति क्रूरैः सह संविदं च ॥

रवीन्दुसौम्यामरपूज्यशुक्रशनैश्चरा मृत्युगता नितान्तम् ।
कुर्वन्ति दुःखानि गदोद्भवानि दायादवर्गैः परिपीड्यमानम् ॥

सूर्यारसौम्यामरपूज्यशुक्रशनैश्चरा मृत्युगताश्च मृत्युम् ।
कुर्वन्ति क्रूरां † प्रतिमल्पभाग्यं कामान्वितं क्लेशतरं हि वर्गे ।

चन्द्रारसौम्यामरपूज्यशुक्राः( क )शनैश्चरा रन्ध्रगताश्च रन्ध्रे ।
कुर्वन्ति नानाविधरोगभाजं कान्तोत्थसौख्यैर्विहिताङ्गयष्टिम् ॥

**इति षड्ग्रहमृत्युस्थानस्थफलम् ॥**

**अथ सप्तग्रहमृत्युस्थानगतफलमाह ॥**

रवीन्दुभौमज्ञसुरेज्यशुक्राः( क )शनैश्चराः संजनयन्ति मृत्युम ( मर्त्यम् ) ।
क्लीबं शठं मानधनेन हीनं रोगार्ति( र्त )देहं कलहप्रियं च ॥

**इति श्रीवृद्धयवने रन्ध्रस्थानकद्विग्रहादिसप्तग्रहयोगपर्यन्तफलसमासः ॥**

**अथ धर्मस्थानकाद्विग्रहयोगा लिख्यन्ते ॥**

---

## APPENDIX III

These verses follow XLVII 74 in W

चन्द्रारसौम्यामरपूजिताङ्गा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
† कृताक्ष[ स्व ]रोगैः परिपीडिताङ्गं विवर्जितं बान्धवसज्जनैश्च ॥

चन्द्रारसौम्याम(सु)रपूजिताङ्गा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
प्रतापहीनं बहुपापयुक्तं सदातिगर्वं कुटिलं मनुष्यम् ॥

चन्द्रारसौम्यार्कसुता मनुष्यं मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
प्रपंचशीलं सुतदारहीनं सम्पीडितं म्लेच्छसमानरूपम् ॥

चन्द्रारजीवासुरपूजिताङ्गा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
विहीनवर्णं गतबुद्धिवीर्यं खलं [ ⏑ – ] दीनमनर्थयुक्तम् ॥

चन्द्रारजीवार्कसुता मनुष्यं मृत्युस्थिताः संजनयन्ति [ मर्त्यं ] नित्यम् ।
लुब्धं कृतघ्नं मलिनस्वभावं विहीनसत्त्वं बहुसाहसं च ॥

चन्द्रारशुक्रार्कसुता मनुष्यं मृत्युस्थिताः संजनयन्ति नित्यम् ।
रजोधिकं सत्यधनेन हीनं दू( द्यू )तप्रसक्तं गणिकासु रक्तम् ॥

चन्द्रज्ञजीवासुरपूजिताङ्गा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
रोगाभिभूतं परतर्कंकं च परैर्जितं देवगुरुप्रसक्तम ॥

चन्द्रेन्दुपुत्रामरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
पुत्रात्मकं प्रीतिकरं नगणां सदा कुशीलं परधर्मरक्तम् ॥

चन्द्रेन्दुपुत्रासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
नरं नृपज्ञं बहुशास्त्रलुब्धं पराक्रमप्राणसमन्वितं च ॥

सौम्या( चन्द्रा )मरेज्य(ज्या) भृगुजार्कपुत्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
पराजयं साध्वसमेव हानिमसौख्यमोजःक्षयवित्तनाशम् ॥

सौम्य(भौम)ज्ञजीवासुरपूजिताङ्गा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
मतेर्विनाशं कुजनेन सौख्यं शिरोर्तिदाघं ज्वरतापमुग्रम् ॥

भौमेन्दुपुत्रामरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
† धत्ते नराणां च तथा प्रवादं कुबुद्धिभिः सङ्गमसुग्रवैरम् ॥

भौमेन्दुपुत्रासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
दुष्टारिनाशं नृपमानधर्मं सभागमं बन्धुजनेन नित्यम् ॥

भौमामरेज्याभृगुजार्कपुत्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
नृणां † विधत्ते महिमामनन्तं वाणिज्यलाभं कृषिकर्मसिद्धिम् ॥

सौम्यामरेज्यभृगुजार्कपुत्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
प्रपोषणं चौरकृतं सदैव प्रियावियोगं मतिमित्रनाशम् ॥

एवं चतुर्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यपूज्या मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
प्रमादनिद्राकलहं सुवेषमालस्यतां देहकृतं च लाभम् ॥

रवीन्दुभौमज्ञसिता मनुष्यं मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
द्रोहं स्ववर्गेण परेण साम्यं कुकर्मणा साधुनिपीडनेन ॥

रवीन्दुभौमज्ञदिनेशपुत्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
शिरोर्तिपित्तज्वरवेदनाश्च बहुप्रकाराः परमं व्ययं च ॥

रवीन्दुभौमामरपूज्यशुक्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
लाभं गृहक्षेत्रपुरास्त्रजातं प्रतापवृद्धिं प्रभुताविवेकम् ॥

रवीन्दुभौमामरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
करोति नाशं धनमित्रसम्भवं क्लेशं प्रवासं भयमिष्टचिन्ताम् ॥

रवीन्दुभौमाम(सु)रपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
इष्टैर्वियुक्तं परदाररक्तं प्रपंचशीलं क(कु)बलं सुनिष्ठुरम् ॥

रवीन्दुसौम्यामरपूज्यशुक्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
तेजोविहीनं मलदिग्धदेहं सम्पीडितं भूपतिना सदैव ॥

रवीन्दुसौम्यामरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
आरामवप्रादिविहारभाजं चिन्तान्वितं भक्तिपरं द्विजानाम् ॥

रवीन्दुसौम्यासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
रोगेण हीनं परदारसक्तं जनापवादेन युतं सदैव ॥

रवीन्दुजीवासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
प्रसन्नमूर्तिं सततं कुशीलं कलत्रलाभं रतभोगसौख्यम् ॥

सूर्यारसौम्यामरपूज्यशुक्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
दयान्वितं जन्तुहितेषु युक्तं कुलप्रधानं निजधर्मवृद्धिम् ॥

सूर्यारसौम्यामरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
† भवेत् कुमित्रं परदाररक्तं दौर्भाग्ययुक्त † ोप्मलसं कृतघ्नम् ॥

सूर्यारसौम्यासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
देवद्विजानामनुवल्लभं च जितेन्द्रियं दानपरं मनोज्ञम् ॥

सूर्यज्ञजीवासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
सद्भोजनाच्छादनपानयुक्तं चतुष्पदाढ्यं कृषिकर्मरक्तम् ॥

सूर्यारजीवासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
नृशंसतारोगमनिष्टसंस्थं प्रभूतदुःखं दयितोद्भवं च ॥

( the above two verses are in reverse order )

चन्द्रारसौम्यामरपूज्यशुक्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
पामाज्वरार्तं परदाररक्तं नरं सुमाद्यं कुटिलं धनं च ॥

चन्द्रारसौम्यामरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
नरं महाव्याधियुतं दरिद्रं विदेशरक्तं परतर्ककं च ॥

चन्द्रारसौम्यासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
नरं †प्रसते प्रणयेन हीनं कमित्रसङ्गेन यतं नितान्तम् ॥

चन्द्रारजीवासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
† सुकर्मणि धर्मसमन्वितं च सदा विरक्तं सुकुटुम्बवर्गे ॥

चन्द्रज्ञजीवासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
प्रतापहानिं सततं नराणां चतुष्पदव्यालसरीसृपोत्थम् ॥

भौमज्ञजीवासुरपूज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
जिह्वाक्ष( क्षि )रोगोद्भवमेव दुःखं पराभवं दुष्टजनं सदैव ॥

एवं पंचमविकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
रक्तानिलश्लेष्मजनेढ्य( मेढ्र )रोगं भयं प्रवासं कलहं च रोगम् ॥

रवीन्दुभौमज्ञसुरेज्यसौरा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
कुचेलनं बान्धवलोकयुक्तं सुनिष्ठुरं नूनमनिष्टबुद्धिम् ॥

रवीन्दुभौमज्ञसितार्कपुत्रा मृत्युस्थिताः संजनयन्ति मर्त्यम् ।
† निस्त्रिंशलाबन्धनलुब्धनाशं नृणां तथा चौरविमोषणं च ॥

रवीन्दुभौमामरपूज्यशुक्रशनैश्चराः संजनयन्ति मर्त्यम् ।
मृत्युस्थिता रोगभयेन युक्तं विदेशभाजं परपक्षरक्तम् ॥

रवीन्दुसौम्यामरपूज्यशुक्रशनैश्चराः संजनयन्ति मर्त्यम् ।
† करोति नानाविधयुक्तमेधं हतारिपक्षं गतसाध्वसं च ॥

सूर्यारसौम्यामरपूज्यशुक्रशनैश्चराः संजनयन्ति मर्त्यम् ।
मृत्युस्थिताः सत्यधनं कुधर्मं पाषण्डिनामिष्टमनिष्टमित्रम् ॥

चन्द्रारसौम्यामरपूज्यशुक्रशनैश्चराः संजनयन्ति मर्त्यम् ।
मृत्युस्थिता मानधनैश्च युक्तं संश्रायिनं (!) साधुजनेन नित्यम् ॥

एवं षड्विकल्पाः ॥

रवीन्दुभौमज्ञसुरेज्यशुक्रशनैश्चराः संजनयन्ति मर्त्यम् ।
प्रभूतवैरं प्रचुरं च कष्टं कुमित्रसङ्गं विविधं च क्लेशम् ॥

**इति श्रीवृद्धयवने अ(ऽ)ष्टमभावाध्यायः ॥**

———

## APPENDIX IV

द्वादशाष्टममूर्तौ च क्रूराः सौम्यास्तु सप्तगाः ।
एवं योगे भवेद्राजा नष्टराज्यं च लभ्यते ॥ ६६ ॥

भाग्यपेऽभ्यन्तरे राशौ गते जन्मनि सर्वदा ।
लग्नपे तु विशेषेण यावज्जीवं समृद्धिमान् ॥ ६७ ॥

धने व्यये यदा लग्ने सप्तमेऽपचये ग्रहाः ।
तदा हीनकुले जातश्छत्त्रयोगं विनिर्दिशेत ॥ ६८ ॥

†याम्यमार्गे यदि सर्वखेचरा जायते †भवति जन्म †विलग्ने ।
वर्षविंशति तथा च त्रिंशमे अश्ववृन्दगजवेष्टितो नरः ॥ ६९ ॥

**इति श्रीयवनजातके राजयोगाध्यायः समाप्तः ॥**

---

G

App. IV follows 57, 66 in **G** 68b शुचये **G** after the col. **G** adds अथ राजयोगभं[गाध्यायः], but f. 140v ends here. At the bottom of the folio another hand has added :

उपचयभ[ा]वनस्थो लग्नपो यस्य लग्नात्
स भवति नरनाथः शक्रतुल्यो बलेन ।
सकलसमविभुत्वं निर्मलत्वं शरीरे
गजतुरगहिरण्यं प्राप्य ( break in manuscript )

cf. *Sārāvali* 35, 32.